तुलान्याम् ॥ इन्द्राशने । विजया याम् । भाङ्ग० इ० भा० । भङ्गाक फहरीतिक्ताग्राहिणीपाचनीलघु । तीक्ष्णोष्णापित्तलामोहमदवाग वह्निवर्द्धनी ॥ भज्यतेऽनया । भञ्जो० । अकर्त्तरिचेतिहलश्चेतिवा० घञ् । टाप् ॥ चित्रतायाम् ॥

भङ्गाकटम् । न० भङ्गारजसि ॥ अला बूतिलेति० कटच् ॥

भङ्गान । पु० मत्स्यविशेषे ॥ दीर्घज ङ्गले । भाङ्गन० इ० गौ० दे० भा०

भङ्गि । स्त्री० भक्तौ ॥ वीच्याम् ॥ विच्छेदे ॥ कौटिल्यप्रभेदे । त्रिभ ङ्ग्याम् ॥ विन्यासे ॥ भङ्गे ॥ व्याजे ॥ छलनिभे ॥ नानाविधशब्दरचना वैदग्ध्यविशेषाभङ्गयर्त्तिव्याख्या तार ॥ भङ्गस्यकरणम् । तत्करोतो तिण्यन्तादच्इ ॥

भङ्गिमा । पु० भङ्ग्याम् ॥ यथा । अ धरेकज्जलचारुदृशोस्ताम्बूलरङ्गिमा । प्राणनाथक्रिमेतत्ते वेशविन्यास भङ्गिमा ॥

भगी । स्त्री० त्रिभङ्ग्याम् । कौटि ल्ये । अगमनोहरविन्यासे ॥ जा नाभिमानमलशाणिवचोविभगीभ गीशतनयनयोरपिचातुरीच । आ भीरनन्दनमुखाम्बुजसगशसीवशी रवोयदिनमामवशीकरोतोत्युद्भट

भगुर । पु० नद्यावक्रे । त्रि० कुटि ले । वक्रे ॥ नश्वरे ॥ भज्यतेस्वयमे व । भञ्जो० । भञ्जभासेतिघुरच्० कर्मकर्त्तर्येव ॥

भगुरा । स्त्री० अतिविषायाम् ॥ प्रिय ङ्गौ ॥

भङ्ग्यम । न० भागीने ॥ भगायाभव नक्षेत्रम् । विभाषातिलमाषोमाभ ङ्गाणुभ्य इ०पक्षेयत् ॥ भंगार्हे । भ ङ्गमर्हति । दण्डादित्वाद्यत् ॥

भचक्रम् । न० राशिचक्रे ॥ यथा । भमावर्त्तेभचक्रेस्मिन्ध्रुवेनाभौव्य स्थित । आराचक्रेत्विन्दुभौमौश्रु क्राजीवशनैश्चरा ॥ राहु केतुरग स्यसन्नक्षत्राण्यथराशय । यदादि त्सुस्रष्टासुमेरोर्भूगोलकोद्भवा ॥ छा याभवेत्तदाराचि स्यात्तद्विरहा द्दिनम् । सूर्येन्द्वोरुपरागस्तुगोलच्छा यया भवेत् ॥ अन्योन्ययोस्तयोरेवका रणात् । ग्रासमोक्षौतुजायेतेतत्रात पूर्वपश्चिमौ ॥ तत्रपुण्यफलाङ्गाग क्षतोराहोस्तुविष्णुनैत्यादौवह्निपुरा राणभेदनामाध्याय ॥ अथभचक्र भ्रमणव्यवस्थामाहसिद्धान्तशिरोम णौ ॥ निरक्षदेशेक्षितिमण्डलोपगौ ध्रुवौनर पश्यतिदक्षिणोत्तरौ । तदाश्रितं खेजलयन्त्रवत्सदा भ्रमद्भ चक्रं निजमस्तकोपरि ॥ उदग्दिशंया तियथायथानरस्तथातथास्वान्नतमृक्ष मण्डलम् । उदग्ध्रुवपश्यतिचोन्नत

क्षितेस्तद्न्तरैर्योजनजा पलाशका ॥ योजनसङ्ख्याभाश्च ३६०गुणिता कुपरिधिहृता४९६७भवन्त्य शा भूमौकच्छायावाभागेभ्योयोजनानिच व्यस्तम् ॥ इति ॥

भजत् । त्रि० विभजति । भागकर्त्तरि ॥ सेवाकर्त्तरि । सेवति ॥ भजति । भजसेवायाम् । लट शत्रादेश ॥

भजनम् । न० भक्तौ ॥ भागे सेवायाम् ॥ भजेभावेल्युट् । दारास्ति-येभजनसहायापुत्रास्तुयेतद्धनकाया । धनमपितद्वदरिभजनार्थंनोचेदेत त्सर्वंव्यर्थम् ॥

भजमान । त्रि० औपयिके । न्यायागते ॥ शरणागते ॥ भजतेफलमनुवध्नाति । भज० । ताच्छील्येति० चानश्० शानच्वा ॥ भागकर्त्तरि ॥ सेवाकर्त्तरि ॥

भजिष्णु । त्रि० भजनशीले ॥

भञ्जक । पु० त्रि० भञ्जनकर्त्तरि ॥ भनक्ति । भञ्जो० । लट शतृ ॥

भञ्जनम् । न० खण्डने ॥ भञ्जेर्भावेल्युट् ।

भञ्जनक । पु० मुखरोगविशेषे । यथा । वक्त्रं वक्रं भवेद्यस्यदन्तभङ्गश्च जायते । कफवातकृतोव्याधिः स भञ्जनकसञ्ज्ञित ॥

भञ्जक । पु० देवकुलोद्भूततरौ । काश्चिमे ॥

भञ्जा । स्त्री० अन्नपूर्णायांदव्याम् ॥

भञ्जित । त्रि० खण्डिते ॥

भट । पु० योद्धरि । वीरे ॥ पामरविशेषे ॥ म्लेच्छप्रभेदे ॥ मिथ्याभाषिणिसेवके ॥ रात्रिचरे ॥ वर्णसङ्करजातिविशेषे ॥ यथा । वङ्गकारात्कटोजातोनटिक्यावरवाहक । इ० प० पु० ॥ भटति । भटभृतौ । पचाद्यच् ॥

भटा । स्त्री० इन्द्रवारुण्याम् । राखालशसा० इ० द० भा० ॥

भटित्रम् । न० शूलाकृते । शूल्य । शलपक्वमांसे । शूला० इ० भा० भटतिभक्ष्यतेवा । भट० । अशित्रादिति० इत्र ॥

भटी । स्त्री० भटयोषिति ॥

भट्ट । पु० मीमांसकविशेषे भाट० इ० भा० प्र० वर्णसङ्करजातिविशेषे ॥ तस्योत्पत्तिस्त्वब्रह्मवैवर्त्ते यथा । वैश्यायाशूद्रवीर्येण पुमानेकोवभूव ह । सभट्टोवावदूकश्चसर्वेषांस्तुतिपाठक ॥ अपिच तत्रैव । क्षत्रियायांविप्रकन्यायांभट्टोजातोनुवाचक । इति ॥ शिविरान्तिकेराज्ञ्चालस्थवासोदेय । यथा । भट्टवैद्यपुष्पकारस्थापयेच्छिविरान्तिके । इ० ॥

भट्टाचार्य । पु० भट्टाचार्ययोर्मताभिज्ञे ॥ तुतातभट्टमतंमीमांसाशास्त्रम् उदयनाचार्यमतन्यायशास्त्रम्०एत

दुभयमतमिश्रातोभट्टाचार्य ॥

भट्टार । त्रि॰ पूज्ये ॥ भटति । भट । क्विप् । भट्चासौतारश्च । पृषोदरादि ॥ भट्ट ऋच्छतिवा । कर्मण्यण् ॥

भट्टारक । पु॰ नाट्यवाचा॰नृपे ॥ नाट्योक्ता॰देवे ॥ तथा॰ तपोधने ॥ त्रि॰ पूज्ये ॥ भटति । भटपरिभाषणे । क्विप् । भट्चासौतारकश्च । पृषोदरादित्वात्॰ ष्टुत्वनिषेधेन ॥ भट्ट स्वामित्वम्॰ऋच्छतिवा । कर्मण्यण् । तत स्वार्थेक ॥

भट्टारकवार । पु॰ आदित्यवारे ॥

भट्टि । पु॰ सनाम्नाप्रसिद्धे रामकथाश्रयेमहाकाव्ये ॥

भट्टिनी । स्त्री॰ नाट्योक्ताऽकृताभिषेकायाराजयोषायाम् ॥ ब्राह्मण्याम्

भड । पु॰ वर्णसङ्करजातिविशेषे ॥ सतुलेटात्तीवरकन्यायाजात । यथा । लेटस्तीवरकन्यायाजनयामास षण्नरान् । माल्ल मल्ल मातरञ्च भडकोलञ्चकन्दरम् ॥ ब्र॰ ब्र॰ वै॰ पु॰ ॥

भडाग्नि । पु॰ अग्निविशेषे ॥ भड भडइतिशब्दयुक्ते वह्नौ ॥

भडिल । पु॰ शूरे ॥ सेवके ॥ भडइतिसौत्रोधातु । सलिकल्यनिमहिभडिभ डिश डिपि डितु डिकु किभूभ्यइलजिति॰ इलच् ॥

भणित । त्रि॰ कथिते । शब्दिते ॥

भणिति । स्त्री॰ वाचि ॥

भण्टाकी । स्त्री॰ वार्ताक्याम् ॥ भण्यते॰ भण्यते वा । भटभृतौ॰ भणश्च ब्देवा । पिनाकादयश्चेतिसाधु ॥ बृहत्याम् ॥

भण्टिका । स्त्री॰ वृन्ताके । भटा॰ भण्टा॰ इ॰ भा॰ ॥

भण्टुक । पु॰ श्योनाकवृक्षे ॥

भण्ड । पु॰ चाटुवटौ । अश्लीलभाषिणिभाण्ड॰इ॰भा॰ ॥ भण्डते । भडिकल्याणे॰ पचाद्यच् ॥

भण्डक । पु॰ खञ्जनखगे ॥

भडनम् । न॰ कवचे ॥ युद्धे ॥ खलीकाकारे ॥

भडहासिनी । स्त्री॰ वेश्यायाम् ॥

भण्डि । स्त्री॰ वीच्याम् ॥

भण्डिका । स्त्री॰ मञ्जिष्ठायाम् ॥

भण्डिर । पु॰ भण्डिले ॥ शिरीषवृक्षे ॥ रलयोरेकत्वम ॥

भण्डिल पु॰ । शिरीषवृक्षे भण्डते । भडिकल्याणे॰ परिभाषणे वा । सलिकलीति॰ इलच् । त्रि॰ दूते । शुभे ॥ शिल्पिनि ॥

भण्डी । स्त्री॰ मञ्जिष्ठायाम् ॥ भण्डति । भण्डश्चाभण्डने । पचाद्यच् । गौ॰ ङीष् ॥ शिरीषवृक्षे ।

भण्डीतकी । स्त्री॰ मञ्जिष्ठायाम् ॥

भण्डीर । पु॰ कोविदारे । काश्च

नारे ॥ तण्डुलीयबीजे ॥ शिरी षवृन्ते ॥ भण्डे रोरन् ॥

भण्डीरलतिका । स्त्री० मञ्जिष्ठायाम् ॥

भण्डीरी । स्त्री० मञ्जिष्ठायाम् ॥ भण्डति । भण्डआमर्दने । वा० ईरन् गौ० ॥

भण्डील । पु० मञ्जिष्ठायाम् ॥

भण्डुक । पु० मत्स्यविशेषे । भाकुर० ख्या० गौ० दे० भा० ॥

भण्डूक । पु० श्योनाकवृक्षे ॥

भदन्त । पु० सौगतादिबुधे ॥ सुते जसि ॥ मायादेवीसुते ॥ त्रि० प्रव्रजिते ॥ पूज्ये ॥ भदते ॥ भदिकल्याणेसुखेच । भन्देर्नलोपश्चेतिझच् ।

भदाक । पुं० न० मगले ॥ भन्दते। भदि० । पिनाकादित्वात्साधु ॥

भद्दम् । न० कल्याणे ॥ शर्मणि । सौख्ये ॥

भद्र । पु० शिवे ॥ खञ्जरीटे ॥ वृषभे ॥ कदम्बके । करिजातिविशेषे ॥ नवशुक्लवलान्तर्गतवलदेवे । रामचरे ॥ स्नुह्याम् ॥ न० मङ्गले ॥ मुस्ते ॥ काञ्चने ॥ त्रि० श्रेष्ठे । भन्दनीये ॥ सुत्ये ॥ साधौ ॥ पु० स्त्री० करणान्तरे । विष्टिसंज्ञके ॥ मृणाले ० । भन्दते । भदि० । स्फाय्रन्द्रतिरन्० भन्देर्नलोपश्चनिपात्यते ॥

भद्रक । पु० देवदारुणि ॥ सुपार्श्वाख्यविष्कम्भशैलमूले० धृतिमन्नामकाननम् ० तत्रस्थह्रदे ॥ न० भद्रमुस्तके ॥ त्रि० मनोज्ञे

भद्रकण्ट । पु० गोक्षुरे ॥

भद्रकर्ण । पु० सिद्धस्थानविशेषे ॥ भद्रास्यात्तद्रकर्णकं ॥

भद्रकर्णह्रद । पु० तीर्थविशेषे ॥

भद्रकर्णी । स्त्री० गन्धालिकायाम् ॥ ॥ गोकर्णाधिवासिन्यादेव्याम् ॥

भद्रकाली । स्त्री० कात्यायन्याम् । महिषमर्दिन्याम् ॥ औषधीभेदे । गन्धोल्याम ॥ भद्र कल्याणं कालयति वर्द्धयति । कर्मण्यण् भद्राचासौकालीचेतिवा ॥

भद्रकाशी । स्त्री० भद्रमुस्तायाम ॥

भद्रकुम्भ । पु० पूर्णकुम्भे । भद्रस्य० भद्रोवाकुम्भ

भद्रगन्धिका । स्त्री० मुस्तके ॥

भद्रङ्कर । त्रि० क्षेमङ्करे । शुभङ्करे ॥

भद्रचूड । पु० क्षुद्रीभेदे । लङ्कास्थायिनि ॥

भद्रज । पु० इन्द्रयवे ॥

भद्रतरुणी । स्त्री० कुब्जकवृक्षे ॥

भद्रतुरगम् । न० जम्बूद्वीपस्यनववर्षान्तर्गतवर्षविशेषे ॥ यथा ।

माल्यवज्जलधिमध्यवर्त्तियत् तत्, भद्रतुरग अगुर्वधा ॥ इ० सिद्धान्तशिरोमणि ॥

भद्रदन्तिका। स्त्री० दन्तीवृक्षप्रभेदे । क्षिप्रस्त्रायाम् । जयावहाया म् ॥

भद्रदारु । पु० न० देवदारुणि ॥ न० सरलवृक्षे ॥ भद्रदारु ॥

भद्रदार्वादिक । पु० औषधगण वि० ॥

भद्रनामा। पुं० काष्ठकुट्टखगे ॥

भद्रनामिका। स्त्री० त्रायमाणावृक्षे । वहला०गौ० दे० भा० प्र० ॥

भद्रनिधि । पु० महादानविशेषे ॥

भद्रपर्णी। स्त्री० सुभगायाम् ॥ भद्र पतिर्यस्या ० इतिविग्रहे०नित्य सपत्न्यादिष्वितिपतिशब्दस्यनान्ता देशे० नान्तलक्षणोङीप् ॥

भद्रपदा । स्त्री० प्रोष्ठपदासु । पूर्व भाद्रपदोत्तरभाद्रपदनक्षत्रयो ॥ भद्र पद यासाम् ० ता । अचारो पाक्षतुल्य ॥

भद्रपर्णी। स्त्री० गम्भार्याम् ॥ भद्रा णिपर्णान्यस्या । पाककर्णेतिङी ष् ॥ प्रसारण्याम् ॥

भद्रपीठ । पु० सिंहासने ॥

भद्रबलन । पु० बलरामे ॥

भद्रबला । स्त्री० लताविशेषे । प्रसारण्याम् । कटम्भरायाम् ॥ भद्र बलमस्या ॥ बलायाम् ॥

भद्रमल्लिका। स्त्री० वेल्लीतिख्यातपु ष्पे ॥

भद्रमल्ली। स्त्री० अपराजितायाम् ॥

भद्रमुञ्ज । पु० शरे । वृत्तवेष्टने । सरकण्डा० इ० भा० ॥

भद्रमुस्त । पु० भद्रमुस्तके ॥ भद्रश्चा सौमुस्तकश्च ॥

भद्रमुस्तक । पु० नागरमुस्तके ॥ भद्रश्चासौमुस्तश्च ॥

भद्रमुस्ता। स्त्री० भद्रमुस्तके । गुन्द्रा याम् ॥

भद्रयवम्। न० कुटजफले । कलि ङ्गे । इन्द्रयवे ॥ यवाकारबीजत्वा द्यवम् । भद्रञ्चतद्यव च ॥

भद्ररेणु । पु० ऐरावतहस्तिनि ॥

भद्रवट । पु० भौमतीर्थविशेषे ॥

भद्रवत्। न० देवदारुणि ॥

भद्रवती। स्त्री भद्रपर्ण्याम् ॥ कट् फले ॥

भद्रवर्मा। पु० नवमालिकायाम् नवाल्याम् । नवारा० इ० भा० ॥

भद्रवल्लिका। स्त्री० गोपवल्ल्याम् । अनन्तमूल० इ० भा० प्र० ॥

भद्रवल्ली । स्त्री० मल्लिकायाम् ॥ माधवीलतायाम् ॥ लताविशेषे । शातभीरौ । अष्टापदिकायाम् ।

मद्नमालो०इ० हापरमाली०इ० च०गी०दे०भा० ॥

भद्रश्रयम् न० चन्दने ॥

भद्रश्री । पु० चन्दनवृक्षे ॥ भद्रा श्रीरस्य ॥

भद्रसोमा । स्त्री० गङ्गायाम् ॥

भद्रा । स्त्री० रास्नायाम् ॥ कृष्णायाम् ॥ व्योमनद्याम् ॥ यथा । भद्रा तथोत्तरगिरीन् उत्तरांश्चतथाकुरून् अतीत्योत्तरअम्भोधिमभ्येतिचमहामुने ॥ प्रसारिण्याम् ॥ कट्फलेः ॥ अनन्तायाम् ॥ तिथिभेदे । द्वितीयासप्तमीद्वादशीषु ॥ जीवन्त्याम् । अपराजितायाम् ॥ नील्याम् ॥ बलायाम ॥ शम्याम् ॥ वचायाम ॥ दन्त्याम् ॥ हरिद्रायाम् ॥ श्वेतदूर्वायाम् ॥ काश्मर्याम् ॥ सारिवाविशेषे । गवि ॥ काकोदुम्बरिकायाम ॥ बुद्धशक्तिविशेषे । तारायाम् ॥ छायागर्भजातसूर्यकन्यायाम् ॥ श्रीकृष्णभगिन्याम् ॥ सुभद्रायाम् । दुर्गायाम् ॥ यथा । भद्रास्याद्भद्रकर्णिकेइति ॥ विष्ट्याम् ॥ यथा । शुक्ले पूर्वार्द्धेऽष्टमी पञ्चदश्योर्भद्रैकादश्याचतुर्थ्या परार्द्धे । कृष्णेऽन्त्यार्द्धेस्यात्तृतीयादशम्यो , पूर्वेभागेसप्तमीशम्भुतिथ्यो ॥ विशायविषदीद्राणिविष्टिसर्वञ्चवर्जयेत् । विष्टिशेषेचिद्‌राडे

छिप् पक्ष्येकार्यं जयावहम् ॥

भद्राकारणम् । न० मुण्डन

भद्राक्ष । त्रि० शोभननेत्रे ॥

भद्रात्मज । पु० खड्गे ॥

भद्रारक । पु० अष्टादशधु द्वीपान्तर्गतद्वीपविशेषे

भद्रालपत्रिका । स्त्री० )

भद्राली । स्त्री० ) गन्धाल्याम् ॥

भद्रावती । स्त्री ० कट्फलवृक्षे ॥

भद्राश्वम् । न० भुवोनववर्षान्तर्गतवर्षविशेषे । इलावृतवर्षे भद्राश्वम् आख्यमतत्प्राच्यांवर्षे भद्रजनाकुलम् ॥

भद्रासनम् । न० नृपासने ॥ भद्रञ्चतदासन च ॥ तृतीययोगाङ्गविशेषे तद्यथा । सीवन्या पार्श्वयोन्यस्येद्‌गुल्फयुग्म सुनिश्चलम् । वृषणाध पादपार्श्णीपाणिभ्यापरिबन्धयत् ॥ भद्रासन समुद्दिष्ट योगिभि सारकाङ्क्षितम् ॥

भद्रेश्वर । पु० काल्पग्रामस्थशिवे ॥ शिवप्राप्त्यर्थं दुर्गाराधितहिमालयस्थपार्थिवशिवलिङ्गे ॥

भद्रेला । स्त्री० स्थूलैलायाम् ॥

भद्रोदनी । स्त्री० बलायाम् । वरि आरा०इ० भा० । नागबलायाम् ॥

भन्दम् । न० कल्याणे ॥ प्रकाशन् ॥

भन्दिल । पुं॰ दूते न॰ शुभे ॥ क र्म्मे ॥

भनभ्रुक । पु॰ भारतवर्षान्तर्गतदे शविशेषे ॥

भपञ्जर । पु॰ नक्षत्रचक्रे ॥

भपति । सुधांशौ ॥ भानाप ति ॥

भम्भ । पु॰ धूमे ॥

भम्भरालिका । स्त्री॰ मक्षिकायाम् । द शे ॥

भम्भराली । स्त्री॰ मक्षिकायाम् ॥ दंशे ॥

भम्भासार . । पु॰ मगधराजविशेषे । श्रेणिके ।

भयम् । न॰ घोरे । भयङ्करे ॥ कुब्जक प्रसूने । प्रतिभये । दरे । त्रासे । भीतौ । भिथि । साध्वसे । अना गतप्रतिकूलप्रतिसन्धाने ॥ तच्चयथा नियथा । रौद्रशक्त्यातुजनित चि त्तवैक्लव्यद भयम् । व्याघ्रादिदर्शना धीनचित्तवृत्तिविशेषे ॥ भयम् ॥ गर्भवासादिदु खरूपम् । रागवि षयस्यविनाशके समुपस्थितेतन्निवा रणासामर्थ्यमात्मनोमन्यमानस्य दै न्यात्मकश्चित्तवृत्तिविशेषः ॥ सर्वान् विषयान्परित्यज्यज्ञानमार्गेकथंजी वितव्यमितित्रास ॥ अनिष्टहेतूपनि पाते तत्परित्यागानर्हताज्ञानम् ॥ परत स्त्वनिष्टसम्भावनाज्ञानम् ॥ भय द्वितीयाभिनिवेशतः स्यात् ॥ यथा व्याघ्राद्बिभेति॰व्याघ्राधीनत्वे नस्वीयमरणं सम्भावयतीति ॥बिभे त्यस्मात् । ञिभीभये । अज्विधौ भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् ॥ बिभेत्यनेनेति विग्रहे॰ एरजितिकरणेऽच ॥ भय द्विविधम् । दैवम्॰मानुषञ्च । यथा स्वकामकन्दक । हुताशनोजलं व्याधिर्दुर्भिक्षं मरणं तथा । इतिप ञ्चविधं दैव मानुषव्यसनं ततः ॥ आयुक्तकेभ्यश्चौरेभ्यः परेभ्योराजव ल्लभात् । पृथिवीपतिलोभाच्चनरा णांपञ्चधाभयमिति ॥ आगतेभये ॰अभीतवत्स्थातव्यम् । यथा । ता वद्भयस्यभेतव्य यावद्भयमनागतम् । उत्पन्नेतुभयेतीव्रे स्थातव्यं तैरभी तवत् ॥ पु॰ रोगे ॥

भयङ्कर . । पुं॰ डुण्डुलपक्षिणि ॥ त्रि॰ भयोत्पादके । भैरवे । दारु णे । भीषणे । भयानके ॥ भयं क रोतीति । मेघर्त्तिभयेषुकृञइति खच । मुमागम ॥ पु॰ यात्वायो गान्तरे ॥ यथा । एकर्क्षगौशुक्रजी वौस्यातामन्योन्यसप्तगौ । भयङ्क रख्योयोगोय यातुर्भीति प्रदाय कः ॥

भयडिण्डिम । पुं॰ सङ्ग्रामपट हे ॥

भयद्रुत । त्रि॰ कान्दिशीके । भी त्यापलायिते ॥ अद्रुद्रुवत् । द्रुग तौ । कर्त्तरिक्त । भयात्द्रुत । पञ्चमीतियोगविभागात्समास ॥

भयनाशिनी । स्त्री॰ भयनाशकर्त्र्याम् । त्रिदायाम् ॥ त्रायमाणालतास् ॥

भयभीत । त्रि॰ त्रासेनातङ्किते ॥ यथा । एकतोभयभीतस्यप्राणिनः प्राणरक्षणम । नातोगुरुतमोधर्म्मः कश्चिदन्योस्तिसंचरेति ॥ वह्निपुराणे शिविराजोपाख्यान ॥

भयभ्रष्ट । त्रि॰ भयद्रुते ॥

भयानक । पुं॰ व्याघ्रे ॥ राहौ ॥ शृङ्गाराद्यष्टरसान्तर्गतषष्ठरसे ॥ त्रि॰ भयानके । भीषणे ॥ विभेत्यस्मात् । ञिभी॰ आनक॰ भीङ् भियहुक्त्वानकः ॥

भयापह । पुं॰ राजनि ॥ परमेश्वरे ॥ भय संसारजंमुमुक्षूणामपहन्तीति । हन॰ । अन्येभ्योपिदृश्यतइतिड । भयमपवद्ध्याद्वा । आशिषिहनइतिडः ॥ त्रि॰ भयापहरणकर्त्तरि ॥

भयावह । त्रि॰ भयङ्करे ॥

भरः । पुं॰ अतिशये । भरति । भृञ॰ । पचाद्यच् ॥ भरणं भरः । पुंसीतिघो वा ॥ असद्द्व्यवाचित्वे त्रि॰ पुंस्त्वमेव । यत्अजहल्लिङ्गाः पुंसी तिवचनात् ॥ यथा ॥ भ मरश्च राति । रा॰ क ॥ यत्र ॥ भारे ॥ प्रीतेधराभराक्रान्ते शेषेनाराय णः स्वयम् । लक्ष्मीवन्तोनजानन्तिद्ध सदोषपरवेदनाम् ॥

भरट । पुं॰ कुम्भकारे ॥ भृतके ॥ विभर्त्ति । डुभृञ्॰ अनिदृश्यादिना॰ अटच् ॥

भरणम् । न॰ वेतने ॥ भृतौ । मूर्छ ॥ भ्रियते ऽ नेन । भृञ॰ ल्युट् ॥ पोषणे ॥ यथा । भरणं पोष्यवर्गस्यप्रशस्तं स्वर्गसाधनम् । नरकपीडनेचाऽस्यतस्माद्यत्नेनतं भरेत् ॥ पुं॰ भरणीनक्षत्रे ॥

भरणी । स्त्री॰ द्वितीयनक्षत्रे । यमदेवते ॥ तत्रजातस्यफलम्॰ यथा । सदापकीर्त्तिर्हि महापवादो नाना विनोदैश्चविनीतकालः । अम्बे विलासी चपलश्च स्यात् प्राणिप्रणीतो भरणीषु जातः ॥ प्राणिप्रणीत. प्राणिभि स्थिरः ॥ पोषके ॥ टित्वात् ङीप् ॥

भरणीभू । पुं॰ राहुग्रहे ॥

भरणीय । त्रि॰ पोष्ये । भरणयोग्ये ॥

भरण्डः । पुं॰ स्वामिनि । कामी ॥ नृपे ॥ वृषे ॥ भरति । भृञ॰ । बाहुलकात् अण्डन् ॥

भरखा । स्त्री॰ भूमौ ॥

भरण्यम् । न० वेतने । मूल्ये ॥ भरणे साधु । तत्रसाधुरिति यत् ॥

भरण्यभुक् । त्रि० वैतनिके । कर्म्मकरे । मूल्येनकर्म्म कुर्वति ॥ भरण्य वेतनभुङ्क्ते । क्विप ॥

भरण्या । स्त्री० वेतने ॥

भरण्याह्वा । स्त्री० रामदूतीतिगौ०दे० ख्यातायापूर्व्वपुष्प्याम् ॥

भरण्यु । पु० शरण्ये ॥

भरत । पु० नाट्यशास्त्रे ॥ अलङ्कारादिशास्त्रस्यसूत्रकारे०मुनौ ॥ रामानुजे ॥ शबरे ॥ क्षेत्रे ॥ भरतात्मजे ॥ देवर्षिविशेषे ॥ तन्तुवाये ॥ नटे ॥ भरतस्यमुनेः शिष्य । तस्येदमित्यण् । संज्ञापूर्वकत्वान्नवृद्धि ॥ यद्वा । बिभर्तिस्वाङ्ग । डुभृञ्० । भृमृदृशीत्यतच् ॥ चन्द्रवंशीयनृपविशेषस्यदुष्यन्तस्यपुत्रे । शाकुन्तलेये । दौष्यन्तौ । सर्वदमने ॥ निरुक्तिश्चास्यश्रीभागवते । माताभस्त्रापितुः पुत्रोयेनजातासएवस । भरस्वपुत्र दुष्यन्तमावमस्थाः शकुन्तलाम् ॥ इति ॥ ऋषभदेवादिन्द्रदत्तजयन्त्याकन्यायामुत्पन्नशतपुत्रान्तर्गतज्येष्ठपुत्रे ॥ यथा ॥ अथाहभगवानृषभदेव स्ववर्षंकर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासोलब्धवरैर्गुरुभिरनुज्ञातोगृहमेधिनाधर्माननुशिक्षमाणोजयन्त्यामिन्द्रदत्तायामुभयविधकर्मसमाम्नाय मभियुञ्जन्नात्मजानामात्मसमानानाशत जनयामास । येषांखलुमहायोगीभरतोज्येष्ठश्रेष्ठगुणआसीत्०येनेद वर्षंभारतमितिव्यपदिशन्तीति ॥ पावकस्यपुत्रे ॥

भरतखण्डम् । न० भारतवर्षान्तर्गतकुमारिकाखण्डे ॥

भरतज्ञ । त्रि० नाट्यशास्त्रज्ञे ॥

भरतपुङ्गव । पु० गाङ्गेये । भीष्मे

भरतपुत्रक । पुं० शैलूषे । नटे ॥

भरतप्रसू । स्त्री० कैकय्याम् ॥

भरताग्रज । पु० श्रीरामचन्द्रे ॥

भरथ । पु० लोकपाले ॥ बिभर्त्ति । डुभृञ्० । भृञश्चिदित्यथ ॥

भरद्वाज । पु० मुनिविशेषे ॥ व्याघ्राटे । भारुइ०गौ०दे०भा०प्र०पक्षिणि । भर्दुल०इ०भा० ॥ गुरोः पुत्रे । उतथ्यपत्न्याम्ममतायांबृहस्पतेर्वीर्याज्जातेमुनिविशेषे ॥ अस्य नामनिर्वचन यथाविष्णुपुराणे । मूढे भरद्वाजमिमं०भरद्वाजंबृहस्पते । यातौयदुक्त्वापितरौभरद्वाजस्ततस्त्वयम् ॥ इति ॥ भरन्धारकोवाजोऽस्य ॥ यद्वा । भरद्वाजस्यापत्यम् । ऋष्यण् । संज्ञापूर्वकत्वाद्वृद्ध्यभाव ॥

भरवान् । पु० शिवे ॥ भरवन्तीसृत्य

स्य । मतुप् ॥ भरसहितायौ ॥

भरिणी । स्त्री० हरिद्वर्णे । हरा०ह्र० भा० ॥

भरित । पु० हरिद्वर्णे ॥ त्रि०तद्वति ॥ भृते ॥ पुष्टे ॥ परिपूर्णे । भरा० ह्र०भा० ॥ भर सञ्जातोस्य । ता० रकादित्वादितच् ॥

भरिता । स्त्री० हरितायाम् ॥

भरिमा । पु० भरणे ॥ कुटुम्बे ॥ भरति०बिभर्त्ति वा । भृञ्०डुभृञ्० वा । हृभृधृसृस्तृशृभ्य इमनिच् ॥

भरु । पुं० स्वर्णे । कनके ॥ हरे । -शिवे ॥ भर्त्तरि । स्वामिनि । भरति०बिभर्त्ति वा । भृञ्०डुभृञ् वा । भृमृशीतृचरित्सरितनिधनिमिमसजिभ्य उः ॥

भरुज । पु० क्षुद्रशृगाले ॥

भरुटम् । न० निष्क्वाथपक्वमांसे ॥

भरुटकम् । न० भृष्टामिषे ॥

भर्ग । पु० स्मरहरे । शिवे ॥ भर्ज्जते । भ्रस्जोभर्ज्जने । प० घञ् । न्यङ्क्वादित्वात्कुत्वम् ॥ भृज्यन्ते कामादयोऽनेनेतिवा । हलश्चेति घञ् ॥ भृज्यते० पच्यते जगदनेनेतिवा ॥ सवितृमण्डलगतादित्यरूपे पुरुषे ॥ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियोयोनः प्रचोदयात् । धर्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः ॥ चापिच । भ्रस्ज पाकेभवेद्धातुर्यस्मात्पाचयते ह्यसौ । भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ॥ कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः । भ्राजते यत्स्वरूपेण तस्माद्भर्गः स उच्यते ॥ भेति भीषयते लोकान् रेति रञ्जयते प्रजाः । गच्छत्यागच्छत्यजस्र यो भगवान् भर्ग उच्यते ॥ इति योगियाज्ञवल्क्यः ॥

भर्ग । न० तेजसि ॥ भर्ज्जते । भ्रस्जोभर्ज्जने । अञ्च्यञ्जियुजिभृजिभ्यः कुश्चेत्यसुन्० कवर्गश्चान्तादेशः । भर्गसी० इत्यादि ॥ स्वरूपभूते तेजसि ॥

भर्ग्य । पुं० शिवे ॥ भर्ज्जते । भ्रस्जो० । चहलोर्ण्यत् । चजोरिति कुत्वम् ॥

भर्ज्जनम् । न० भृष्टौ । भूनना० ह्र० भा० ॥

भर्ज्जित । त्रि० दग्धे ॥ भ्रस्जो० । क्त ॥

भर्त्तव्य । त्रि० भरणीये । पोषणीये ॥ वृद्धौ चमातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्य्यशतं कृत्वा भर्त्तव्याम नुरब्रवीत् ॥

भर्त्ता । पुं० स्वामिनि । नाथे । पत्यौ । परिवृढे । नेतरि ॥ विष्णौ ॥ प्रपञ्चस्याधिष्ठानत्वेन भरणात् ॥ बिभर्त्ति स्वाध्यस्तं सर्वमधिष्ठानं

तयाधारयति सत्तास्फूर्त्तिप्रदानेनपोषयतिवेति विभर्त्तिधारणपोषणार्थात् तृच् ॥ त्रि॰ धातरि । धारके ॥ सुखसाधनस्यदातरि ॥ देहेन्द्रियमनोबुद्धीनांस हतानां॰ चैतन्याभासविशिष्टाना॰स्वसत्तया स्फुरणेन धारयितरि ॥ विभर्त्ति भरतिवा । डुभृञ्॰ भृञ्॰वा । तृच् ॥

भर्तृदारक । पु॰ नाट्योक्त्यायुवराजे । द्रियते । दृङ् आदरे॰ तुदादि । ण्वुल् । भर्त्तूराज्ञो दारक ॥

भर्तृदारिका । स्त्री॰ नाट्योक्तौराजकन्यायाम् ॥ भर्त्तूराज्ञोदारिका ॥

भर्तृप्रपञ्च . । पु॰ औपनिषदमन्ये वेदान्तानाव्याख्यातृविशेषे ॥

भर्तृस्थानम् न॰ तीर्थविशेषे ॥ यत्रकार्त्तिकेयस्तिष्ठति ॥

भर्तृहरि । पु॰ व्याकरणकारिकाकर्त्तरिऋषिविशेषे ॥ स्वनाम्नाप्रसिद्धे काव्यकर्त्तरिराजविशेषे ॥ सचविक्रमादित्यराजभ्राता ॥

भर्त्सनम् । न॰ अपकारगिरि । चौरोसित्व घातयिष्यामित्वामित्याद्यपकारार्थवचने ॥ भर्त्सतर्जसन्तर्जने । ल्युट् ॥

भर्त्सपत्रिका । स्त्री॰ महानील्याम् ॥

भर्त्सित । त्रि॰ अधिक्षिप्ते ॥

भर्मम् । न॰ ॥ स्वर्णे ॥ भृतौ ॥ नाभौ ॥

भर्मकम् । न॰ रोगविशेषे ॥ विडङ्गे ॥ कलधौते । सुवर्णे ॥

भर्मण्या । स्त्री॰ गणिकाशुल्के ॥

भर्म । न॰ भारे ॥ काञ्चने ॥ भृतौ । भरणे । पोषणे । कुमारभृत्याकुशलैरधिष्ठितेभिषग्भिराप्तैरथ गर्भभर्मणीति रघु॰ । अत्रगर्भहेमप्रभृतिषुद्रुतिमल्लिनाथधृत शाश्वत ॥ नाभौ ॥ धुस्तूरे ॥ विभर्त्ति॰ भरतिवा । भ्रियतेऽनेनवा । डुभृञ्॰भृञ्॰ । मनिन् ॥

भलता । स्त्री॰ प्रसारण्यामोषधौ । राजवलायाम् ॥

भलन्दन । पु॰ कान्यकुब्जदेशीयनृपविशेषे ॥

भलूक । पु॰ भालुके ॥ भलते । भलभल्लपरिभाषणहिंसादानेषु ॥ उलूकादयश्चेतिसाधु ॥

भल्ल । पु॰ भल्लूके । रुद्रे ॥ पु॰ न॰ शस्त्रप्रभेदे । भाला॰ इ॰भा॰ ॥ बाणविशेषे ॥ स्नुहीदलफलोभल्लइतियादव : ॥ भल्लते । भल्ल॰ । पचाद्यच् ॥ न॰ भद्रे । शिवे ॥ इ॰ त्रि॰ शे ॰ ॥

भल्लक । पुं॰ भल्लूके ॥ स भ्राया

कन् ॥

भल्लपुच्छी । स्त्री० गवेधुकायाम् ॥

भल्लाट । पुं० न० शशिध्वजराजपुरे

भल्लातः । पुं० भल्लातकें ॥

भल्लातकः । पुं० अग्निमुख्याम् । अ रुष्करे । शोथकृति । अभावा० द्र० भा० ॥ भल्लातकफलंपक्वं स्वादुपाकरसंलघु। कषायपाचनंस्निग्धं तीक्ष्णोष्णं छेदिभेदिनम् ।मेध्य वह्निकरंहन्तिकफवातव्रणोदरम्॥ कुष्ठार्शोग्रहणीगुल्मशोफानाहज्वरक्रिमीन् ॥ तन्मज्जामधुरोवृष्योवृंहणोवातपित्तहा । वृन्तमारुष्करस्वादुपित्तघ्नं केश्यमग्निकृत् ॥ भल्लातकः . कषायोष्णः . शुक्रलोमधुरोलघुः । वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् ॥ हन्तिगुल्मज्वरश्वित्रवह्निमान्द्यक्रमिव्रणान् ॥ भल्लइवातति अत० । क्वुन् ॥

भल्लातकी । स्त्री० वीरवृक्षे । अग्निमुख्याम् । भल्लातकें ॥ गौरादित्वान्ङीष् ॥

भल्लिका । स्त्री० ) भल्ला

भल्ली । स्त्री० )तकें ॥

भल्लुः । पुं० भल्लुकें ॥ भलते । भल्ल० बाहुलकादुः ॥

भल्लुकः । पुं० दुर्वाचि । ऋक्षे । रीछभालू० द्र० भा० सप्रायांकन् ॥

भल्लूकः । पुं० ऋक्षे । भल्लुकें ॥ भल्ल

ति । भल्ल० । उलूकादित्वात्साधु . ॥ श्योनाकप्रभेदे ॥ कुक्कुरे ॥

भवः । पुं० ईशे । शिवे । शङ्करे । हरे ॥ क्षेमे । श्रेयसि ॥ समृद्धौ ॥ यज्ञावतारीभूतानांक्षेमायचभवाय च ॥ संसारे ॥ अपामार्गलतेवाय विरुद्धफलदोभव । प्रत्यगृह्यांवि मोक्षायसंसारायपरागृह्याम् ॥ स त्तायाम् ॥ प्राप्तौ । भद्राप्तौ ॥ उत्पत्तौ । जन्मनि ॥ सम्बादेकादशी ॥ भवति० भवतीवासर्वम् । भूप्राप्तौ । घञर्थेऽप् । अन्तर्भावितण्यर्थोवा ॥ जन्मनितु०भावे०ऋदोरप् ।। न० फलविशेषे । भव्ये । चालता० द्र० शी० दे० भा० त्रि० क्षेमान्विते ॥

भवघस्मर । पुं० दावानले ॥

भवच्छिद् । त्रि० संसारनिवर्तके ॥ भवच्छिनत्ति । छिदिर्० । सत्सूद्विषे त्यादिना० क्विप् ॥

भवान् । त्रि० युष्मदर्थे ॥ भाति । भादीप्तौ भातेर्डवतुः ॥ लिंगत्रयेरूपंतु । भवान्० भवती०भवदिति॥ पूज्ये ॥ सति । विद्यमाने ॥ भवतीशटः शत्रादेशे । भवन्० भवन्तीभवत्० इतित्रिलिंगेरूपंबोध्यम् ॥ आयमाने ॥

भवती । स्त्री० विषाक्तबाणे ॥ पूज्यायाम् ॥ दीप्तमत्याम् ॥ उगितश्चेति ङीप् ॥

भवदारु । न० देवदारुवृक्षे ॥

भवदीय . । त्रि० भावत्के ॥ भवतामयम् । भवतश्छक्छसाविति० छस् ॥

भवनम् । न० अगारे । मन्दिरे । गृहे । भावे ॥ भवन्त्यत्र । भू० । ल्युट् ॥ राशौ ॥ क्षेत्रे ॥

भवनाशन । पुं० आत्मनोबोधे ॥

भवनाशिनी । स्त्री० सरयूसरिति ॥

भवनीय । त्रि० भवितव्ये ॥ उत्पत्त्यर्हे ॥

भवन्त । पुं० कालसामान्ये ॥ वर्तमानकाले ॥ भवति०भूयाद्वा ॥ भू० तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्चेति०झच् । सच्चित् ॥

भवन्ति । पु० वर्तमानकाले ॥ भवति । भू० । भुवोझिच् ॥

भवन्ती । स्त्री० पूर्वाचार्याणालट संज्ञायाम् ॥ यथा । अस्तिर्भवन्तीपरोऽप्रयुज्यमानोप्यस्तीत्यादिभाष्यम् ॥ शित्वान्ङीप् ॥

भवभावन । त्रि० संसारकारणे ॥ भवः संसारस्तस्यभावनयेन ॥ उत्पत्तिकर्त्री ॥

भवभूति : । पुं० भोजराजस्यसभास्थे कविविशेषे । मालतीमाधवादिनाटककर्तरि । भूगर्भे ॥ महादेवस्यैश्वर्ये ॥

भववत् । पुं० प्रेतपटहे ॥

भवघ्ननाशिनी । स्त्री० गङ्गायाम् ॥

भवात्मजा । स्त्री० मनसादेव्याम् ॥

भवादृश । त्रि० भवादृशे ॥ भवानिवपश्यति०भवन्तमिववा । दृशिर् प्रेक्षणे । त्यदादिष्विति च० कोपि वाच्यइति०क्स० । आसर्वनाम्न इत्यत्र०दृग्दृशवतुष्विति वार्तिकादाकारोन्तादेशः ॥

भवादृक् । त्रि० भवादृशे ॥ भवानिवपश्यति०भवन्तमिववा । दृशिर्० । त्यदादिष्वितिक्विन् । आसर्वनाम्न ॥

भवादृश । त्रि० युष्मत्सदृशे । भवद्विधे ॥ भवानिवपश्यति०भवन्तमिववा । दृशिर्०त्यदादिषुदृशोनालोचनेकञ्चेति०कञ् । आसर्वनाम्न इत्याकारोन्तादेशः ॥

भवानी । स्त्री० पार्वत्याम् । दुर्गायाम् ॥ भवस्यस्त्री । इन्द्रवरुणभवशर्वेत्यादिना०ङीषानुकौ ॥ परदेवतायाम् ॥ एकैवशक्तिः परमेश्वरस्यभिन्नाचतुर्धाव्यवहारकाले । भोगेभवानीपुरुषेषुविष्णुः कोपेषुकालीसमरेषुदुर्गा ॥ चट्टलपीठवासिन्यामम्बायाम् ॥

भवानीगुरु : । पु० हिमालये ॥

भवानीपति । पु० महादेवे ॥

भवापवर्ग । पु० मोक्षे ॥ भवस्यअपवर्गः नाशः ॥

भवाभीष्ट । पु० गुग्गुलौ ॥

भवाब्धि । पुं॰ संसाररूपसमुद्रे ॥ भवाब्धितरणोपाय . कुलमार्गोक्ति-नापर ॥

भवायना । स्त्री॰ गङ्गायाम् ॥

भविकम् । न॰ भव्ये । कुशले ॥ भवो-भद्रामिरस्यास्ति । अतइनिठमाविति ठन् ॥ त्रि॰तद्वति ॥

भवित . । त्रि॰ अतीतोत्पत्तिके । भूते॥

भवितव्यम् । त्रि॰ भवनीये ॥ भवितव्य मृभवत्येवमारिकीलफलाम्भुवत् । ग न्तव्यं गतमित्यादुर्गअभुक्तमपित्यव-त् ॥

भवितव्यता । स्त्री॰ नियतौ । भाग्ये । अर्थानामनर्थानाञ्चावश्यं भावित्वे । कालभार्यायाम् ॥

भविता । त्रि॰ भविष्यौ ॥ भवनशील. भू॰ । तृन्निति तृन् ॥

भविल : । त्रि॰ काव्यकर्त्तरि ॥

भविल : । पुं॰ भव्ये ॥ भवति । भू॰ । सलिकल्यनीत्यादिना॰ इलच् ॥ पि ङ्गौ । विदूषके ॥

भविष्णु । त्रि॰ भवितरि । भूष्णौ ॥ भवनशील : । भुवश्चेति॰भवतेरि-ष्णुच् ॥

भविष्यम् । न॰ पञ्चशताधिकचतुर्दश सहस्रश्लोकात्मकेपुराणविशेषे ॥ यथा । चतुर्दश भविष्यं स्यात् तथा पञ्चशतानिचेतिश्रीभागवतम् ॥ अपिच । चतुर्दशसहस्राणितथा पञ्चशतानिच । भविष्यं परिसंख्या त मुनिभिस्तत्त्वदर्शिभिरितिदेवी भागवतम् ॥ त्रि॰ भविष्यत्का ले ॥

भविष्यत् । त्रि॰ आगामिकाले । वर्त्त मानप्रागभाव प्रतियोगिनिकाले- ।। वर्त्तमानकालोत्तरकालीनोत्प त्तिकस्ये । अनागते । ग्रहस्त मे ॥

भव्य । पुं॰ कर्मरङ्गतरौ ।। न॰ फ ल्गुनि ॥ फलविशेषे चालता॰ इ॰ गौ॰ दे॰ प्र॰ । वमेनकफश्लोषघ्नी ॥ भव्यं स्वादुकषायाम्लं कण्ठमास्य विशोधनम् । तदेवपक्वं दोषघ्नं गुरु वाविविनाशनम् ॥ पुं॰ न॰ रस भेदे ॥ त्रि॰ शुभे ॥ सत्ये ॥ योग्ये ॥ भाविनि ॥ अभिष्यमाणे ।। भवति॰ भाव्यमनेनवा । भव्य गेयप्रवचनीयोपस्थानीयजन्याप्ला व्यापात्यावेति ॰ कर्त्तरि॰ भावे वायतासाधु . ॥

भव्या । स्त्री॰ उमायाम् । करिकणा याम् ॥

भष । पुं॰ कुक्कुरे ॥ भषति । भष॰ । अच् ।।

भषक : । पुं॰ कुक्कुरे । शुनि ॥ भषति । भषणेशुक्त्ये । ण्वुल् ।।

भषणम् । न॰ कुक्कुरेण । अर्थे ॥

भष॰ल्युट् ॥

भषा । स्त्री॰ स्वर्णचीर्याम् ॥

भषी । स्त्री॰ शुन्याम् ॥ भषतिपान्य म् । भषभर्त्सने । पचादौ • भष डितिपाठात् • टिड्ढेतिङी प् ॥

भसद् । स्त्री॰ भास्वरे ॥ योनौ ॥ जघने ॥ काले ॥ मासे ॥ कारण्ड वखगे ॥ प्लवे । भेलके । बभस्ति । भसभर्त्सनदीप्त्योः । शृदृ भसोदि ॥

भसन । पुं॰ भ्रमरे ॥

भसन्त । पु॰ काले ॥

भसितम् । न॰ भस्मनि ॥

भसूचक । पु॰ दैवज्ञे ॥

भस्त्रका । स्त्री॰ चर्म्मप्रसेविका याम् ॥

भस्त्रफला । स्त्री॰ ओषधिविशेषे ॥ भस्त्रेवफलान्यस्याः । पाककर्णेति प्राप्तङीष बाधित्वा॰सम्भस्त्राजिने तिटाप् । ङ्यापोरितिह्रस्व ॥

भस्त्रा । स्त्री॰ अग्निदीपकचर्मनिर्मितयन्त्रविशेषे । चर्मप्रसेविकाया म् ॥ जलादिनीयते येनलोहादि ध्मायते तथा । चर्मणोविकृतिः सावै भस्त्राशास्त्रेप्रकीर्त्तिता ॥ भस्यते ऽनया । भसदीप्तौ । हुयामा श्रुभसिभ्यस्त्रन् । तितुत्रेतिनेट् । । अजादित्वाट्टाप् ॥

भस्त्राका । स्त्री॰ भस्त्रिकायाम् । भस्त्रा या ॥

भस्त्रिक । त्रि॰ भस्त्रयाजलादिहरणक र्त्तरि । भिस्तो॰इ॰भा॰ ॥ भस्त्रया हरति । भस्त्रादिभ्यः ष्ठन् ॥ स्त्री॰- भस्त्रिकी । षित्वान्ङीष् ॥

भस्मक । पुं॰ रोगविशेषे ॥ तस्य निदानसम्प्राप्तिपूर्वकं लक्षणं । य था । कट्वादिरूक्षान्नभुजानराणांक्षी णेकफे मारुतपित्तवृद्धौ । अतिप्रवृद्ध पवनान्वितोऽग्निर्भुक्तं क्षणाद्भस्म करोतियस्मात् ॥ तस्मादसौभस्मक स उक्तोऽभूदुपेक्षितोयं पचते च धातून् ॥ भस्मसोपद्रवमरिष्टंयथा । तट्स्वेददाहमूर्च्छादीन् कृत्वैवात्य ग्निसम्भवान् । पक्वान्नमाशुधात्वा दीन्सद्यक्षिप्रं नाशयेद्ध्रुवम् ॥ इ॰

भस्मकार । पुं॰ रजके ॥

भस्मगन्धा । स्त्री॰ रेणुकायाम् । हरे- णौ ॥

भस्मगन्धिका । स्त्री॰ हरेणुनामोषधौ । रेणुकायाम् ॥ भस्मनोगन्ध । भस्म गन्धोस्त्यस्याः । अतइनि । ठनाबि- तिठन् । टाप् ॥

भस्मगन्धिनी । स्त्री॰ रेणुकायाम् । इ रेणवाख्यौषधौ ॥ गन्धद्रव्यमेतदिति स्वामी ॥ भस्मगन्धोस्त्यस्या । अत इनिठनावितीनिः । ङीप् ॥

भस्मगर्भ । पुं॰ तिनिशद्रुमे ॥

भस्मगर्भा । स्त्री० कपिलवर्णपुष्पाया शिंशपायाम् ॥ रेणुकानामगन्धद्रव्ये । ओषधिभेदे ॥ भस्मगर्भेयस्या. शुक्लसारत्वात् ॥

भस्मतूलम् । न० ग्रामकूटे ॥ पांशुवर्षे ॥ हिमे ॥

भस्म । न० काष्ठादेरग्निकृतेविकारे । शिवाङ्गभूषणे । भूतौ । भसिते । विभूतौ ॥ बभस्ति । भसभर्त्सने दीप्त्यो' । सर्वधातुभ्योमनिन् ॥ विनाभस्मत्रिपुण्ड्रेणविनारुद्राक्षमालयः । पूजितोपिमहादेवोनस्यात्तस्यफलप्रदः ॥ भस्मरोगविकारे ॥

भस्मरोहा । स्त्री० दग्धारुहावृक्षे ॥

भस्मवेधक । पुं० कर्पूरे ।

भस्मसात् अ० भस्मीभावे ॥ कृत्स्नं भस्मसम्पद्यते । विभाषासातिकार्त्स्न्ये इतिसातिः प्रत्ययः ॥

भस्मस्नानम् । न० सप्तविधस्नानान्तर्गताग्नेयस्नाने ॥ यथा । आग्नेयभस्मनास्नानवायव्यंगोरजःस्मृतम्

भस्माह्वयः । पुं० कर्पूरे ॥

भस्मित' । त्रि० दग्धे ॥

भा । स्त्री० भाति । प्रभायाम् । छवौ । दीप्तौ । रोचिषि ॥ ज्ञाने । चैतन्यरूपे ॥ यथा । अभारूपस्यविश्वस्यभानंभासन्निधेर्विना । कदाचिन्नावकल्पेतभाचात्रैतेनसर्वगः ॥ भाति भादीप्तौ । इगुपधात्कः ।

टाप् ॥

भाकुट । पुं० भेकुटी० इ० मी० दे० भा० प्र० मत्स्ये ॥

भाकूट । पुं० शैलप्रभेदे ॥ मत्स्यविशेषे । भेकटी० इ० भा० ॥ भाकूटो मधुरः शीतोष्ण्यः श्लेष्मकरोगुरुः । विष्टम्भजनकश्चापिरक्तपित्तहरः स्मृतः ॥

भाक्षोष' । पुं० सूर्ये ॥

भाक्त । त्रि० औपचारिके । गौणे । लाक्षणिके ॥ भक्तसम्बन्धिनि ॥ अन्नेनपोष्ये । भाक्तिके ॥ भक्तमस्मै नियुक्तं दीयते । भक्तादणन्यतरस्याम् इत्यण् ॥ न० शालिधान्ये ॥ भक्तेसाधु । भक्ताणः इतिण ॥

भाक्तिक । त्रि० अन्नेनपोष्ये । भाक्ते ॥ भक्तमस्मै नियुक्तं दीयते । भक्तादणन्यतरस्यामितिपक्षेठक् ॥

भाग । पुं० अंशे । वण्टके । स्त्रीलिङ्गसमासांशे ॥ रूप्यार्द्धके भाग्ये ॥ एकदेशे ॥ भज्यते । भजसेवायाम् । कर्मणिघञ् ॥ भागानांमेषादिराशीनांत्रिंशदंशानांसमूहोवा । अण् ॥ राशिषुत्रिंशभागेकभागे ॥ त्रिंशांशकस्तथाराशेर्भागइत्यभिधीयतेइत्युक्तेः ॥

भागत्याग । पुं० जहदजहल्लक्षणायाम् । विरुद्धांशपरित्यागे ॥

भागत्यागलक्षणा । स्त्री० जहदजहल्लक्षणायाम् । अंशान्तरपरित्यागेना.

शान्तरलक्षणायाम् ॥

भागधेय । पु० करे । राजस्वे । ग्रामादेराजग्राह्ये षष्ठभागादौ ॥ दायादे ॥ भागएव । भागरूपनामभ्यो धेयइतिस्वार्थे० धेयप्रत्यय ॥ न० भाग्ये । प्राक्तनेकर्मणि । दैवे ॥

भागलक्षणा । स्त्री० भागत्यागलक्षणायाम् ॥

भागलेख्यम् । न० भागपर्वं ॥ भागायलेख्यम् ॥

भागवत । पु० भगवद्भक्ते ॥ यथा । सर्वदेवान्परित्यज्यनित्य भगवदाश्रय । एतत्तदीयसेवायांसभागवतउच्यते ॥ शङ्खोयस्यगृहे नास्तिघण्टावागरुडान्विता । पुरतो वासुदेवस्यनसभागवत कलौ ॥ उत्तमभागवतस्तु । सर्वभूतेषुय पश्येद्भगवद्भावमात्मन । भूतानि भगवत्यात्मन्येषभागवतोत्तम ॥ नयस्यस्वपरइतिवित्तेष्वात्मनिवाभिदा । सर्वभूतसम शान्त सवैभागवतोत्तम । गृहीत्वापीन्द्रियैरर्थान्योनद्वेष्टिनहृष्यति । विष्णोर्मायामिद पश्यन्सवैभागवतोत्तम ॥ शिवेचपरमेशाने विष्णौचपरमात्मनि । समबुद्ध्या प्रवर्त्तन्ते तेवैभागवतोत्तमा ॥ भगवतोयेम् । अण् ॥

भागवतम् । न० अष्टादशपुराणान्तर्गतेअष्टादशसहस्रश्लोकात्मकेउपपुराणविशेषे ॥ महापुराणविशेषे ॥ तत्राष्टादशाध्यायोत्तरत्रिशताध्यायात्मक देवीभागवत नाममहापुराण द्वात्रिंशदध्यायाधिकत्रिशताध्यायात्मक विष्णुभागवतमितिविवेक ॥ अष्टादशसहस्रं वै पुण्य भागवत किलेतिदेवीभागवतम् ॥ आत्मतत्त्वदीपकेज्ञाने ॥ भगवताप्रोक्तम् । तेनप्रोक्तमित्यण् ॥ भगवत्यामायोपाधिकब्रह्मरूपिण्या प्रतिपादिका० सर्वं खल्विदमेवाह नान्यदस्तिसनातनमित्यर्द्धश्लोकात्मकसूत्रभूतमेवसर्ववेदसार सर्वं खल्विद ब्रह्मनेहनानास्तिकिञ्चनेतिसर्ववेदतात्पर्यार्थप्रतिपादकवाक्यार्थाभिलापक पुराण मन्त्ररूप भगवत्यावटपत्रशयानायविष्णवे प्रकटीकृत यत्तत् । भगवत्याप्रोक्तम । तेन प्रोक्तमित्यण् ॥

भागिकम् । त्रि० भाग्ये । सवृद्धिकमुद्रादौ ॥ भागोरूपकस्यार्द्धंवृद्धिभाग० शुल्कम्० उपदावास्मिन्दीयते । भागिक शतम्० भागिकाविंशति । भागाद्यश्चेतिठन् ॥

भागी । त्रि० अंशिनि ॥ ग्राहिणि ॥ सम्पृचेत्यादिना० भजेर्घिनुण् ॥

भागिनेय : । पुं॰ भगिनीपुत्रे । स्वस्रीये ॥ भगिन्या : अपत्यम् । स्त्रीभ्योढक् ॥

भागिनेयी । स्त्री॰ भगिन्यास्त्व्यपत्ये । भागिनी॰ इ॰ भा॰ ॥ टिड्ढेति ङीप् ॥

भागीरथी । स्त्री॰ गङ्गायाम् ॥ भगीरथस्येयम् । तस्येदमित्यण् । ङीप् ॥

भागुरि : । पुं॰ स्मृतिव्याकरणकर्त्तरिमुनिविशेषे । मार्कण्डेयपुराणप्रसिद्धे मुनौ ॥ कविविशेषे । यत लुम्पवी॰ इति जटाधर : ॥

भाग्यम् । न॰ प्राक्तनशुभाशुभकर्म्मणो : । नियतौ । दैवे । दिष्टे । फलोन्मुखी भूतपूर्वदैहिकशुभाशुभकर्म्मणि । अज्ञानामविवेकानामशूराणामपिप्रभो । भागभोग्यानिराज्यानिसन्त्यनीतिमतामपि ॥ भज्यतेऽनेन॰भजते वा । भज सेवायाम् । ऋहलोर्ण्यत् । चजो रितिकुत्वम् ॥ त्रि॰ भागिके ॥ भागोवृध्यादिरस्मिन्दीयते । भाग्य शतम्॰ भाग्याविंशति : । भागाच्चेति॰यत् ॥ भागार्हे ॥ भागमर्हति । दण्डादित्वाद्यत् ॥

भाग्ययोग : । पुं॰ यात्राकालिकार्के । पञ्चमेशोरविषष्ठेवर्त्तिनवमेयुक् । भाग्ययोगाभिधेयोगेनिष्क्रामेदरिपांसदा ॥

भाग्यवान् । त्रि॰ भाग्ययुक्ते ॥ भाग्यवतांसर्वं श्रेयसेभवति ॥

भाग्याख्या । स्त्री॰ तुष्टिविशेषे ॥ यथा । यातुनप्रकृतेर्नकालान्नाप्युपादानाद्विवेकख्यातिरपितुभाग्यादेव॰अतएवमदालसाऽपत्यानिअति बालानिमातुरुपदेशमात्रादेवविवेकख्यातिमन्तिमुक्तानिबभूवु : ॰ तस्माद्भाग्यमेवहेतुर्नान्यदित्युपदेशे तुष्टि : साभाग्याख्यातुष्टिरुच्यते ॥

भाङ्गीनम् । त्रि॰ भङ्गायै । भङ्गार्थे ॥ भङ्गायाभवनमुद्भवम् । विभाषातिलमाषोमाभङ्गाणुभ्यइतिपक्षेखञ् ॥

भाजक् । अ॰ शीघ्रे ॥

भाजनम् । न॰ पात्रमात्रे ॥ योग्ये ॥ य : स्वाद्यतेनिष्ठ योऽतिवाहितिस्थति । यच्चतस्मोत्तत्पतिष्ठ सोऽयंस्वभजनम् ॥ आढकपरिमाणे इतिवैद्यकपरिभाषा ॥ भाजयति । भाजपृथक्कर्म्मणिल्युट् ॥

भाजित : । त्रि॰पृथक्कृते । विभक्ते । न॰भागे ॥

भाजी । स्त्री॰ श्रापायाम् । पक्वायाम् ॥ आणपदेतिङीष् ॥

भाज्य । चि० भागार्हे । भाजनीये ॥

भाटक । पु० न० व्यवहारार्थं दत्त गृहशकटादिलभ्यधने । भाडा०हू० भा० ॥

भाट्ट । पु० आत्मनश्चिदचिद्रूपत्व-वादिनिभट्टाचार्यमतानुसारिणि-मीमांसके ॥ गूढ चैतन्यमुत्प्रेक्ष्य द्रव्यबोधस्वरूपताम् । आत्मनोऽनुव तेभाट्टाश्चिदुत्प्रेक्षोत्थितस्मृते . ॥ जडोभूत्वातदाऽस्वाप्समितिजाड्य स्मृतिस्तदा । विनाजाड्यानुभूति नकथ चिदुपपद्यते ॥ द्रष्टुर्दृष्टेरलो पवस्मृत सुप्तोततस्स्वयम् । अ-प्रकाशप्रकाशाभ्यामात्माखद्योतव-दयुत . ॥

भाण । पु० नाटकादिदशरूपकान्त र्गतरूपकविशेषे ॥

भाण्ड . । पु० गर्दभाण्डवृक्षे ॥

भाण्डम् । न० पात्रे । घटकमादि-भाजनमात्रे ॥ पण्यद्रव्ये । वणि-ड् मूलधने ॥ भूषायाम् । भूषणे ॥ अश्वभूषायाम् । तुरङ्गाणांमण्डने ॥ नदीकूलद्वयमध्ये ॥ भण्यते । भणशब्दे । अमन्ताड्ड . । ॥ भणतिवा । ड' । प्रज्ञाद्यण् ॥ यद्वाभन्दते । भदिकल्याणे सुखेच । अच् । पृषोदरादि : ॥ भण्डव-ती । भंडीवा०हू०भा० ॥

भाण्डपुट । पुं०नापिते ॥ भाण्डे-पुटा : यस्यस ' ॥

भाण्डपुष्प । पुं० सर्पविशेषे । कौ कुटिकन्दले ॥

भाण्डागारम् । न० गृहविशेषे । अन्ना दिद्रव्याणांगृहे ॥ भाण्डानामागा रम् ॥ धनागारे ॥

भाण्डागारिक ॥ त्रि० भाण्डागारे-नियुक्ते । भण्डारी०हू०भा० ॥ अ गाराल्लाद्दन् ॥

भाण्डागारी । त्रि० भाण्डारिणि । भा ण्डागारवति ॥ भाण्डागारमस्या-स्ति । इनि ' ॥

भांडारी । पु० भाडागाराध्यक्षे । स नामैवप्रसिद्धे ॥ यथा क्षुधितस्तृ षित ' कामीविद्यार्थीकृषिकारक । भाडारीचप्रवासीचसप्तसुप्तान् प्र बोधयेत् ॥

भाणिड । पुं० नापितक्षुराद्याधारे ॥

भाणिडल ' । पुं० ) नापिते ॥

भाण्डिवाह : । पुं० )

भाण्डीर । पु० वटवृक्षे ॥ व्रजमण्ड लान्तरेषोडशवटवनमध्ये द्वितीयव-टवने ॥

भातम् । न० प्रभाते ॥ भा० । क्त ॥ दीप्ते ॥ त्रि० तद्वति ॥

भाति । स्त्री० शोभायां ॥

भातु ' । पु० आदित्ये । सूर्ये ॥ भा ति । भादीप्तौ । कमिगमीतितु ॥

भाद्र : । पुं० नभस्ये । प्रौष्ठपदे । भा

द्रपदेमासि ॥ भाद्रीपौर्णमास्यस्मि न्। सास्मिन् पौर्णमासीत्यण् ॥ अत्रजातस्यफलम्। नभस्यमासिखलु जन्मयस्यधीरोमनोज्ञश्चवराङ्गनाना म्। रिपुप्रमाथीकुटिलोऽतिमर्मप्र पन्नभर्त्तासभवेत्सदास. ॥ अत्रगौ प्रसवेनारद्ः। भानौसिंहगते चै वयस्यगौ सम्प्रसूयते। मरणंत स्यनिर्दिष्ट षड्भिर्मासैर्नसंशय. ॥ प्रसूतांतत्प्रयाहैवर्ततांतांविप्राय दापयेत्। पश्चाच्छान्ति प्रकुर्वीत तथा निग्राख्योक्तवर्त्मनेति ॥

भाद्रपद। पुं॰ वर्षर्तुद्वितीयमासि। भाद्रे ॥ भद्रपदाभिर्युक्तापौर्णमा स्यस्मिन्। सास्मिन् पौर्णमासीत्य- ण् ॥

भाद्रपदा। स्त्री॰ प्रोष्ठपदासु। भद्रप दासु। पूर्वभाद्रपदानक्षत्रे॰उत्तर भाद्रपदानक्षत्रेच ॥ भद्रमेव॰ ॥ भा द्रम्। भाद्रपदयासां॰ता ॥

भाद्रमातुर.। पुं॰ सतीतनये ॥ भद्र मातुरपत्यम्। मातुरुत्सङ्ख्यास भद्रपूर्वाया॰ ॥

भानम्। न॰ आभासे ॥ प्रतीतौ ॥ प्रकाशे। साक्षात्कारे ॥ नहिभाना दृतिसत्त्व मर्तमानचितोऽचित:। चित्सर्वादीपिका ध्यासाहतीतिमाह मदय. ॥ भाति। भा॰। ल्युट् ॥

भानुः। पुं॰ किरणे। मयूखे। चं- शौ। करे ॥ रवौ। सूर्ये। अर्के। सहस्रांशौ ॥ दिने भाति। भा॰। दाभाभ्यानु ॥ यद्वा। भाति॰ चतुर्दशभुवनमध्ये अन्यादित्यप्र काशेभ्य अधिकदीप्यतेवा। पूर्व वत्. ॥ अर्कवृक्षे ॥ प्रभौ ॥ राजनि ॥ नृपार्हत्पितृविशेषे ॥

भानु:। स्त्री॰ भानुमत्याम् ॥

भानुफला। स्त्री॰ रम्भायाम्। कद ल्याम्। भानुरिवफलान्यस्या:। अजादि ॥

भानुमान्। पुं॰ सूर्ये ॥ भानवोविद्य न्तेऽस्य। मतुप् ॥ त्रि॰ दीधिति युक्ते। सकिरणे ॥

भानुमती। स्त्री॰ विक्रमादित्यनृपस्य पत्न्याम् ॥ यथा। देवगुरो प्रसादे नजिष्णोर्मेसरस्वती। तिनार्कनृपला नामिभानुमत्यास्तिलयथैतिमरकचि

भामिनि:। पुं॰ गभस्तिहस्ते। सूर्ये ॥

भाभ। त्रि॰ मयमकान्तौ ॥ भस्याभे वाभायस्यायस्यस. ॥

भाम:। पुं॰ क्रोधे ॥ रवौ ॥ दीप्तौ रुचौ। प्रभ्ये ॥ भगिनीपतौ ॥ यथा। अक्षोभगिन्याहोभाममया वासतपापमना। पुरुषादृक्षापस्य सुहृदोहिंसिता सुता ॥भाति। भा॰ अतिस्तुसुहृदधूक्षिहुभायावापद्भिय क्षिनीभ्योमन्नितिमन् ॥ भामते। भामक्रोधे। अथवा

भामक । पु॰ भगिनीपतौ ॥ स्वार्थेक ॥

भामा । स्त्री॰ कोपनायांयोषिति ॥ सत्यभामायाम् । विनापिप्रत्ययमितिपूर्वपदलोप ॥

भामी । त्रि॰ क्रोधिनि ॥

भामिनी । स्त्री॰ कोपनायाम ॥ भवश्य भामते । भाम॰ । आवश्यकेणिनि । ग्रह्यादिणिनिर्वा ॥ स्त्रीमाचे ॥

भामिनीविलास । पु॰ जगन्नाथमिश्रपण्डितराजकृते विलासचयात्मके ग्रन्थविशेषे ॥

भार । पु॰ वीवधे । विष्णौ । विशतितुलापरिमाणे । पलानांद्विसहस्रे । अष्टसहस्रतोलकात्मके ॥ द्विशूपागोण्युदाहृता ॥ तामेवभारजानीयाद्वाहोभारचतुष्टयम् ॥ भ्रियते । भृञ् भरणे । अकर्त्तरि चकारकेस ञ्ज्ञायामितिघञ् ॥

भारंड । पु॰ उत्तरकुरुदेशजशकुन्तपक्षिणि ॥

भारत । पु॰ छागवाहने । वह्नौ ॥ नटे ॥ भरतस्यमुने शिष्य । अण् ॥ भरतात्मजे ॥ भरतवंशोद्भवे ॥ महाकुलप्रसूते ॥ भरतस्यराज्ञोयम । तस्येदमित्यण् ॥ सङ्ग्रामविशेषे ॥ भरतानांयोद्धारोऽस्मिसङ्ग्रामस्य । सङ्ग्रामेप्रयोजनयोद्धृभ्यइत्यण् ॥ त्रि॰ ज्ञानभिरते ॥ भाज्ञानम॰ तत्ररत . ॥

भारतम् । न॰ व्यासप्रणीतलक्षश्लोकात्मकमहाभारतसञ्ज्ञके॰ इतिहासे ॥ तस्यश्रवणादिफलयथा । भारतश्रुणुयान्नित्य भारत परिकीर्त्तयेत् । भारत भवने यस्यतस्यहस्तगतोजय ॥ योगोशत कनकशृङ्गमय ददातिविप्रायवेदविदुषेचबहुश्रुताय । पुण्याश्चभारतकथाशृणुयाच्चनित्य तुल्य फल भवतितस्यचतस्यचैव ॥ नवनीत यथादधनोद्विपदाब्राह्मणोयथा । ह्रदानामुदधि श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम । यथैतानीतिहासानातथाभारतमुच्यते ॥ यश्चैन श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्तत । अक्षय्यमन्नपान वै पितृंस्तस्योपतिष्ठते ॥ इतिहासपुराणाभ्यांवेद समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदोमामयंप्रहरिष्यति ॥ कार्ष्णं वेदमिम विद्वान्श्रावयित्वार्थमश्नुते । भ्रूणहत्याकृतञ्चापिपाप जह्यादस शयम् ॥ इति ॥ जम्बूद्वीपनवमांशेवर्षविशेषे ॥

भारतवर्ष । पु॰ न॰ जम्बूद्वीपस्य नववर्षान्तर्गतवर्षविशेषे । यथा । हिमाह्व दक्षिण वर्ष भरतायददौपिता । तस्माच्चभारत वर्षं तस्यनाम्नामहात्मन . ॥ तस्यनवभागाय्था

भारतस्यास्य वर्षस्य नवभेदान्निबोध मे। समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम्॥ इन्द्रद्वीपः कशेरुमान् ताम्रपर्णो गभस्तिमान्। नागद्वीपस्तथा सौम्यो गान्धर्वो वारुणस्तथा॥ अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः। योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरात्॥ पूर्वे किराता यस्यान्ते पश्चिमे यवनाः स्मृताः। ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्तःस्थिताश्च॥ इज्यायुद्धवणिज्याद्यैः कर्मभिः कृतपावनाः। तेषां संव्यवहारश्च एभिः कर्मभिरिष्यते॥ स्वर्गापवर्गप्राप्तिश्च पुण्यं पापं च वै तथा। महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः॥ विन्ध्यश्च पारियात्रश्च सप्तैवात्र कुलाचलाः। तेषां सहस्रशश्चान्ये भूधरा ये समीपगाः॥ विस्तारोच्छ्रायिणो रम्या विपुलाश्चित्रसानवः। कोलाहलः स वैभ्राजो मन्दरो दर्दुराचलः॥ वातन्धमो वैद्युतश्च मैनाकः सुरसस्तथा। तुङ्गप्रस्थो नागगिरिर्गोधनः पाण्डुराचलः॥ पुष्पश्चैव जयन्तश्च रैवतोऽर्बुद एव च। ऋष्यमूकः सगोमन्तः कूटशैलः कृतः स्मरः॥ श्रीपर्वतश्च कोरश्च शतशोऽन्येऽपि पर्वताः। तैर्विमिश्रा जनपदा म्लेच्छाश्चार्याश्च भागशः। तैः पीय-



न्ते सरिच्छ्रेष्ठा यास्ताः सम्यङ्निबोध मे। गङ्गा सरस्वती सिन्धुश्चन्द्रभागा तथापगा। यमुना च शतद्रुश्च वितस्तैरावती कुहूः। गोमती धूतपापा च बाहुदा च दृषद्वती॥ विपाशा देविका चक्षुर्निष्ठीवा गण्डकी तथा। कौशिकी चापरा विप्र हिमवत्पादनिःसृताः॥ वेदस्मृतिर्वेदसिनी वृत्रघ्नी सिन्धुरेव च। वेण्वा चन्दना च सदानीरा मही तथा॥ पारा चर्मण्वती लूपी विदिशा वेत्रवत्यपि। शिप्रा ह्यवन्ती च तथा पारियात्राश्रयाः स्मृताः॥ शोणो महानदश्चैव नर्मदा सुरसा क्रिया। मन्दाकिनी दशार्णा च चित्रकूटा तथापगा॥ चित्रोत्पला च तमसा करतोया पिशाचिका। तथान्या पिप्पलाश्रोणी विपाशा वञ्जुला नदी॥ सरित्सनाशुक्तिमती मञ्जुली त्रिदिवा क्रतुः। ऋक्षपादप्रसूता वै तथान्या वेगवाहिनी॥ शिप्रा पयोष्णी निर्विन्ध्या तापी च निषधावती। वेणा वैतरणी चैव सिनीवाली कुमुद्वती॥ तोया चैव महागौरी दुर्गा चान्तःशिवा तथा। विन्ध्यपादप्रसूतास्ता नद्यः पुण्यजलाः शुभाः॥ गोदावरी भीमरथी कृष्णा वर्णा तथापगा। तुङ्गभद्रा सुप्रयोगा बाह्या कावेरी चापगा॥ सह्यपादविनिष्क्रान्ता इत्येताः सरिदुत्तमाः॥

कृतमालाताम्रपर्णी पुष्पजात्युत्पलावती । मलयाद्रिसमुद्भूतानद्यः शीतजलास्त्विमा ॥ पित्सोमर्षिकुल्याचइक्षलात्रिदिवालया । लाङ्गुलिनीवंशकरामहेन्द्रप्रभवा स्मृता ॥ ऋषिकाचकुमारीचमन्दगा मन्दवासिनी । कृपापलाशिनीचैव शुक्तिमत्प्रभवा स्मृता ॥ सर्वा पुण्या सरस्वत्यः सर्वागङ्गासमुद्रगा । विश्वस्यमातरः सर्वाः सर्वाः पापहरा स्मृता ॥ अन्या सहस्रशश्चोक्ता, क्षुद्रनद्यो द्विजोत्तम । प्रावृट्कालवहा सन्तिसर्वकालवहाश्चया ॥ मत्स्या कुशूला, कुल्याश्चकुन्तला काशिकोशला ॥ अर्वुदाश्चकलिङ्गाश्चसमकाश्चवृकैः सह । मध्यदेशेजनपदाः प्रायशोमीप्रकीर्त्तिता ॥ सह्यस्योत्तरेवैयत्रगोदावरीनदी । पृथिव्यामपिकृत्स्नाया सप्रदेशोमनोरम ॥ गोवर्द्धनपुरं रम्यं भार्गवस्यमहात्मन ॥ वाह्लीकावाटधानाश्चआभीरा कालतोयका ॥ अपरान्ताश्चशूद्राश्चपह्लवाश्चर्मखण्डिका । गान्धारायवनाश्चैवसिन्धुसौवीरमद्रका ॥ शतद्रुद्राललित्या अपारदाह्यारमूषिका । माठराश्चहतका : कैकयादशमानिका ॥ क्षत्रियोपनिवेशाश्चवैश्यशूद्रकुलानि च । काम्बोजादरदाश्चैववर्वराश्चहलौकिका ॥ चीनाश्चैवतुषाराश्चपह्लवाबाह्यतोदरा । आत्रेया सभरद्वाजा प्रस्थलाश्चदशेरका ॥ लम्पका, सूनकाराश्चचूलिकाजाङ्गलै सह । अपधाश्चालिमद्राश्चकिरातानाञ्चजातय : ॥ तामसाहंसमार्गाश्चकाश्मीरास्तङ्गनास्तथा । चूलिकाहुहकाश्चैवऊर्णादार्वास्तथैव च ॥ एतेदेशाह्युदीच्यास्तु प्राच्यान्देशान्निबोधमे । अन्ध्रवाका मुद्गरकाअन्तर्गिरिवहिर्गिरा ॥ तथाप्रवङ्गावङ्गेयामलदामलवर्त्तिका ब्रह्मोत्तरा प्रविजया भार्गवाङ्गेयमर्द्दका । प्राग्ज्योतिषाश्चमद्राश्चविदेहास्ताम्रलिप्तका । मल्लामगधगोनर्दा प्राच्याजनपदा स्मृता ॥ अथापरेजनपदादक्षिणापथवासिन । पाण्ड्याश्चकेरलाश्चैवचोला कुल्यास्तथैवच ॥ सेतुकामूषिकाश्चैवकुमारावानवासिका । महाराष्ट्रामाहिषिका कलिङ्गाश्चैवसर्वश ॥ आभीरा सहचैषीकाआटव्याश्शवराश्चये । पुलिन्दाविन्ध्यमालेया वैदर्भादण्डकै, सह ॥ पौरिकामौलिकाश्चैव अश्मकाभोगवर्द्धना : । नैलिका, कुन्तलाह्यन्ध्राउद्भिदानालकारका ॥ दाक्षिणात्यास्त्विमेदेशा अपरा

न्तानूनिषीधमे । सौपारिका का
लनदादुत्रास्तालीयकै सह ॥ का
रस्करलोहजङ्घावानेयाराजभद्र-
का । तोसका कोशलाश्चैवत्रैपु
राविदिशास्तथा ॥ तुषारास्तुम्बरा
श्चैवपाटवोनैषधै सह । पुलिन्दा-
श्चसुशीलाश्चरूपमांसामसै सह ।
तथाकुरुमिनश्चैवसवेश्चैववरस्कराः॥
नासिकाख्याश्चयेचान्ये येचैवान्तर-
नर्मदा ॥ मानकच्छा समाहेया
सर्वसारस्वतै सह । कच्छीयाश्च-
सुराष्ट्राश्चआवन्त्याश्चार्बुदै सह ॥
इत्येतेह्यपरान्ताश्च शृणुविन्ध्यनिवा
सिन । मलजाश्चकरूषाश्चमेकला-
श्चोत्कलै सह । उत्तमर्णादशार्णा
श्चभोजा किष्किन्धकै सह ।
अनूपास्तुण्डिकेराश्चवीरहोत्राह्यवन्त्य
य ॥ एतेजनपदाः सर्वे विन्ध्य
पृष्ठनिवासिन ः ॥ अतोदेशान्प्रव
क्ष्यामिपर्वताश्रयिणश्चये ॥ निर्हारा
हंसमार्गाश्चकुपथास्तङ्गणाः खशाः
। कुत्सा प्रावर्णाश्चैवऊर्णादर्वा
सहूहुका ॥ त्रिगर्तामालवाश्चै
वकिरातास्तामसै सह । कृतत्रे
तादिकश्चात्रचतुर्युगकृतोविधिः ॥
एततुभारतवर्षंचतु संस्थानसंस्थि
तम् । दक्षिणेपरतोह्यस्यपूर्वेणचम
होदधिः ॥ हिमवानुत्तरेणास्यकार्मु
कस्ययथागुणः । तदेतद्भारतं

वर्षंसर्वबीजद्विजोत्तम ॥ देवत्वमम
रेशत्व देवत्व मर्त्यतांतथा । मृगपश्व
प्सरसयोनीस्तद्वत्सरीसृपा ॥ स्था
वराणाञ्चसर्वेषामतोब्रह्मन्शुभाशु
भै । प्रयान्तिकर्मभूर्ब्रह्मन्नान्य
लोकेषुविद्यते । देवानामपिविप्रर्षे
सदैवैषमनोरथ ॥ अपिमानुषमा
प्स्यामोदेवत्वात्प्रच्युता क्षितौ ।
मनुष्याः कुर्वतेतत्तुयन्नशक्य सुरा
सुरै ॥ तत्कर्मनिगडग्रस्तैस्तत्कर्म
क्षपणोत्सुकै । नकिञ्चित्क्रियते
कर्मसुखलेशोपबृंहितै ॥ इतिश्री
मार्कण्डेयपुराणेभारतखण्डवर्णन
नामाध्याय ॥

भारति । पु० दशनामसन्न्यासिनां
मध्येसन्न्यासिविशेषे ॥ यथा । ना
नाशास्त्रं पठेल्लोकोनानाकर्मविशा
रद । सदेष्टदेवीभाविनभावयेद्यो
हितावलाम् । सएवभारतिर्वीरोम
हाज्ञानीजितेन्द्रिय इति ॥

भारती । स्त्री० वचने ॥ सरस्वत्याम् ।
अर्थपरिज्ञानफलाहिभारती गरुडी
शिनिपक्षिविशेषे । भार० इ० गौ०
दे० भा० प्र० ॥ ब्राह्मीऔषधौ ॥
नाट्यवृत्तिप्रभेदे ॥ शृङ्गारेकौशिकी
वीरेसात्वत्यारभटीपुन. । रसेरौद्रे
चबीभत्से वृत्तिः सर्वत्रभारती ॥
भारतीवृत्तिस्तुसंस्कृतप्रायोवाग्व्या
पारोनराश्रय. ॥ बिभर्ति । डुभृञ्

भृमृद्दशियजीत्यतच् । तत प्रत्ता स्थि॰ ङीप् ॥

भारद्वाज . । पु॰ बृहस्पते पुत्रे ॥ व्याघ्राटाख्यविहङ्गमे द्रोणाचार्ये ॥ ऋषिविशेषे ॥ मङ्गलग्रहे ॥ भारद्वा जस्यगोत्रापत्यम् । बिदाद्यञ् ॥ अगस्त्यमुनौ ॥

भारद्वाजी । स्त्री॰ वनकार्पास्याम् ॥ भरद्वाजऋमुनेरियम् । तेननिर्म्मितत्वात् । तस्येदमित्यण् । ङीप् ॥

भारभूति । पु॰ पुण्यस्थानविशेषे ॥ भारभूतौभवेद्भूतिरितिभागवतम् ॥

भारय । पु॰ भरद्वाजपक्षिणि ॥

भारयष्टि स्त्री॰ उभयतोबद्धशिक्य स्कन्धवाह्यकाष्ठे । विहङ्गिकायाम् ॥ भारस्ययष्टि ॥

भारवम् । न॰ ज्यायाम् । गुणे ॥

भारवाह । त्रि॰ भारिके ॥ भारवहति । वह॰ । कर्मण्यण् ॥

भारवाहक । त्रि॰ भारवहनकर्त्तरि ॥ भारम् वहति । वह॰ । ण्वुल् ॥ भारस्यवाहकोवा ॥

भारवाहण । त्रि॰ उष्ट्रादौभारवाहके ॥ वहेर्ण्यन्तात्कर्त्तरिल्युट् । भारस्यान्नादेर्वाहन । वाहनमाहिता दित्विषत्वम् ॥

भारवाही । पु॰ धुर्य्ये ॥

भारवाही । स्त्री॰ नील्याम् ॥

भारवि . । पुं॰ किरातार्जुनीयका-व्यकर्त्तरिकविविशेषे । शताब्दे दूतलिपिकाशब्देशेष ।

भारवृक्ष । पु॰ काक्षीनामकगन्धद्रव्ये ॥

भारशृङ्ग । पु॰ कृष्णनामकहरिणजातौ । वारसिंगा॰इ॰भा॰ ॥

भारहर । पु॰ भारिके ॥ हरति । हृ अच् । अच् । भारस्यहर ॥

भारहार । पु॰ भारिके ॥ भार हरति । हृञ्॰ । कर्म्मण्यण् ॥

भाराक्रान्त । त्रि॰ भारवाहे ॥ भारेणाक्रान्त ॥

भाराक्रान्ता । स्त्री॰ अत्यष्टिवृत्तिप्रभेदे ॥ भाराक्रान्तामभनरसलागुरुश्रुतिषड्हयै ॥ यथा । भाराक्रान्तामममतनुरिय गिरीन्द्रविधारणात्॰कम्पधत्तेश्रमजलकणतथापरिस्रुति । इत्थावृस्वन्नजयतिजलदस्तनाकुलवल्लवीस स्मितोत्थ स्मरविलसित विलोक्यगुरु हरि ॥

भारिक . । पु॰ भारवाहे ॥ भारोस्तिवाह्यत्त्वेनास्य । अतइनिठनाविति ठन् ॥

भारि । पुं॰ सिंहे ॥

भारिट . । पु॰ पक्षिविशेषे । श्यामचटके । शैशिरे । कणभक्षके ॥

भारी । पु॰ भारवाहके ॥ त्रि॰भारपोडिते ॥ भारयुक्ते ॥ भारोऽस्त्यस्य॰ अस्मिन्वा । इनि ॥

॥ शाकविशेषे ॥ रोहितमत्स्ये ॥ महालक्षणसम्पन्नपुरुषे ॥ कच्छपे ॥ हरे ॥

भालुक । पु० ऋक्षे । अच्छभल्ले । भल्लूके ॥ भलति । भलहिंसायाम् । बाहुलकादुः । स च्चायांकन् । प्रज्ञाद्यण् ॥

भालूक । पु० भालूके ॥ भलते । भलपरिभाषणादौ । उलूकादित्वात् साधु । प्रज्ञाद्यण् ॥

भाल्लवेय । पु० कुन्दग्रन्थनामनि ऋष्यन्तरे ॥ भल्लवेरपत्यम् भाल्लवि । तस्यापत्यम् । शुभ्रादेराकृतिगणत्वात्० ढक् ॥

भाल्लुक । पु० भल्लूके ॥)

भाल्लूक । पु० )

भाव । पु० सत्तायाम् । सत्वे ॥ परमार्थसत्तारूपे ॥ स्वभावे ॥ मानसधर्मे ॥ उपसनोपायसाधके ॥ यथोक्तं श्रीमहानिर्वाणतन्त्रे । पशुवीरदिव्यभावदेवतामन्त्रसिद्धिदा इति । तथापि । पशुभावः कलौ नास्तिदिव्यभावोपिदुर्लभः । वीरसाधनकर्माणिप्रत्यक्षाणिकलौयुगे इति ॥ अपिच । शृणुभावत्रयं देविदिव्यवीरपशुक्रमात् । दिव्यस्तु देववत्प्रायोवीरश्चोद्धतमानसः ॥ सत्यत्रेतादपर्यन्त दिव्यभावविनिर्णय । द्वापरादपर्यन्त वीरभावस्तु कीर्तितम् ॥ मद्य मत्स्य तथा मांस मुद्रामैथुनमेवच । श्मशान साधनं भद्रे चितासाधनमेवच ॥ एतत्ते कथितं सर्वं दिव्यवीरमतं प्रिये । दिव्यवीरमत नास्तिकलिकाले सुलोचन इतिकालीविलासतन्त्रम् ॥ अभिप्राये ॥ आत्मनि ॥ चेष्टायाम् ॥ प्रकृतिजन्यबोधविषयप्रकारे ॥ क्रियायाम् ॥ लीलायाम् ॥ पदार्थे ॥ विभूतौ ॥ नाट्योक्त्या विदुषि । बुधे ॥ जन्तौ ॥ मानसविकारे० रत्यादौ ॥ योनौ ॥ उपदेशे ॥ शृङ्गारादिकारणे ॥ शब्दप्रवृत्तिहेतौ ॥ गौरविते ॥ अभिनयान्तरे ॥ धात्वर्थे ॥ संसारे ॥ भवने । भावनायाम् । चिन्तने ॥ सद्भावे ॥ परमार्थतत्वाग्रहरूपे प्रेम्णि ॥ भक्तौ । अनुरागे ॥ तत्तादात्म्ये ॥ भू० विभाषाग्रहकल्यच० भवतेश्चेति० णाग्निकावचनात् ॥ भावयतिकरोतिरसान् । भावयति० परिभावयतिवा । पचाद्यच् ॥ भवनं वा । श्रियोभुवोनुपे तिघञ् वा ॥ भावाबुद्धिगुणाधर्मज्ञानवैराग्यभूतय । सात्विकाव्यत्ययेनैते रागमुख्याश्चतामसा ॥ धर्मज्ञान वैराग्यैश्वर्याख्या बुद्धिगुणाः । भावसञ्ज्ञया निर्दिष्टाः । एतेचसात्विकाबोद्धव्या । व्यत्यये

न्तरितसजातीयप्रत्ययप्रवाहरूपा याम् ॥ भावनातिङ्प्रत्ययवाच्येति मीमांसका ॥ उत्पादनायाम् ॥ ० उत्पत्त्यर्थाद्भवतेर्ण्यन्तात् ० युच् । त्रिविधाभावनायथा । त्रिविधाभावनाविप्रविश्वमे तन्निबोधमे । ब्रह्माख्याकर्मसञ्ज्ञाच तथाचैवोभयात्मिका ॥ ब्रह्मभावात्मिकाह्ये का कर्मभावात्मिकापरा । उभयात्मिकातथैवान्यात्रिविधाभावभावना ॥ सनन्दनादयोब्रह्मभावभावनयायुता । कर्मभावनयाचान्ये देवाद्या स्थावरान्तरा ॥ हिरण्यगर्भादिषुचब्रह्मकर्मात्मिकाद्विधा । बोधाधिकारयुक्तेषुविद्यतेभावभावना ॥ इति विष्णुपुराणे ६ अंशे ७ अध्याय ॥ त्रिविधभावनाश्रयजीवात्मकत्वात्तदुपचारेणत्रिविधाभावनेत्युच्यते। एतद्धिहरे स्थूलरूपम । अत परंरूपप्राप्त्युपायत्वात्० तत्प्रथममनसन्धार्यमितिभाव : । भावनानाम ज्ञानविशेषजावासना । तात्रिविधामपिसञ्ज्ञामादिशति० ब्रह्माख्ये ति । तामेवविषयत्रैविध्ये नविविनक्ति० ब्रह्मभावनात्मिकेति ॥ । भावभावना० भावोवस्तु०तद्विषयाभावनात्रिविधा । तत्रवयंब्रह्मैवभावयाम । वयंकर्मैवकुर्म । वयमुभयमिदमनुसन्दध्मइत्येवंत्रिविधाभावना ।

भावनायुक्तान्जीवानुदाहरति० सनन्दनादयइतिद्वाभ्याम् । इतितट्टीका ॥

**भावबोधक** । पु० अनुभावे ॥ भावस्यरत्यादेर्बोधक सूचकोगुणक्रियादिरनुभाव । अनुभाव्यतेप्रतीतियोग्यतानीयतेरत्यादिरनेनेति० अनुभाव । घञ् ॥ तत्ररतेरनुभावा लोचनचातुर्यभ्रूक्षेपादय । हासस्यच कपोलाकुञ्चना० नासोत्फुल्लनादयोऽनुभावा ० एवमन्यत्रानुमन्तव्यम् ।

**भावरूपम्** । न० दृश्ये ॥

**भाववृत्त** । पु० ब्रह्मणि । भाव सृष्टि ० तत्रवृत्त प्रवृत्त ॥

**भाववृत्ति** । स्त्री० घटाद्याकारवृत्तौ ।

**भावशुद्धि** । स्त्री० अन्त करणशुद्धौ ॥ कलिकल्मषयुक्तानासर्वदास्थिरचेतसाम् । निद्रालस्य प्रसक्ताना- भावशुद्धि कथ भवेत्इतिमहानिर्वाणत च ॥

**भावसशुद्धि** । स्त्री० हृदयस्यकामक्रोधलोभादिमलनिवृत्तौ पुनरशुद्ध्युत्पादकाहित्येनसाम्यत्वेनविशिष्टायाम् ॥ परे सद्व्यवहारकाले मायाराहित्ये ॥

**भावसरोरुहम्** । न० हृदयकमले ॥

**भावाट** । पु० भावके ॥ साधुनिवेशे ॥ कामुके ॥ नटे ॥

**भावानुगा** । स्त्री० छायायाम् ॥

भाषा

रोस्वे त्यप्रत्यय । टाप् । शास्त्रीया ष्टादशभाषायथा । संस्कृता१ प्राकृता २ उदीची ३ महाराष्ट्री ४ मागधी ५ मिश्रार्द्धमागधी ६ शकाभीरी ७ अवन्ती ८ द्राविडी ९ ओड्रीया १० पाश्चात्त्या ११ प्राच्या १२ बाह्लिका १३ रन्तिका १४ दाक्षिणात्त्या १५ पैशाची १६ आवन्ती १७ शौरसेनी १८ । एतासांलक्षणोदाहरणा निप्राकृतलङ्केश्वरव्याकरणे द्रष्टव्या नि ।। अथभाषाविभाग . । पुरुषा णामनीचानासंस्कृतं स्यात् कृता त्मनाम् । शौरसेनीप्रयोक्तव्याताद्द शीनाञ्चयोषिताम ॥ आसामेवतु गाथासु महाराष्ट्रीं प्रयोजयेत् । अत्रोक्तामागधीभाषा राजान्तःपु रचारिणाम् । चेटानाराजपुत्रा णाञ्श्रेष्ठिनाञ्चार्द्धमागधी । प्राच्या विदूषकादीनांधूर्त्तानांस्यादवन्तिका ॥ योधनागरिकादीनांदाक्षिणात्या हिदीव्यताम । शकाराणाशकादी नाञ्चाकारींसम्प्रयोजयेत् ।। बाल् हीकभाषादिव्यानांद्राविडीद्रविडा दिषु । आभीरेषुतथाभीरीचाण्डा लीपुक्कसादिषु ।। आभीरीशाबरी चापिकाष्ठपत्रोपजीविषु ।। तथैवा ङ्गारकारादौपैशाचीस्यात्पिशाच वाक् । चेटीनामप्यनीचाना मपि स्याच्छौरसेनिका ।।

भाषा

बालानांषण्डकानांचनीचग्रहविचा रिणाम् । उन्मत्तानामातुराणांसैव स्यात्संस्कृतंक्वचित् ॥ ऐश्वर्येण प्रमत्तस्यदारिद्र्योपप्लुतस्यच।भिक्षु बन्धधरादीनांप्राकृतंसम्प्रयोजयेत् ॥ संस्कृतसम्प्रयोक्तव्यलिङ्गिनीषूत्तमा सुच । देवीमन्त्रिसुतावेश्यास्वपिकै श्चित्तथोदितम् ॥ यद्देशनीचपात्र न्तुतद्देशतस्यभाषितम् । कार्यतश्चो त्तमादीनांकार्योभाषाविपर्ययः ॥ योषित्सखीबालवेश्याकितवाप्सर सांतथा । वैदग्ध्यार्थंप्रदातव्यं स संस्कृतञ्चान्तरान्तरा ॥ एषामुदाह रणान्याकरेषुबोद्धव्यानि । भाषाल क्षणानिभाषार्णवे ॥ इतिसाहित्य दर्पणे ६ परिच्छेद ॥ संस्कृतप्रा कृतभूतभाषाऽपभ्रंशिकागिर । ना टकेनियता.ग्रस्ताएताभाषारसाव हा ॥ भाषाविभाषाभेदेनप्राकृतन्तु चतुर्द्दश ।मागध्यवन्तिकाप्राच्याशौ रसेन्यर्द्धमागधी ॥ बाह्लीकादाक्षि णात्याचभाषा सप्तप्रकीर्त्तिताः ॥ श काराभीरचाण्डालशबरद्राविडोड्र जा । वनौकसोविजातीनांविभाषा. सप्तकीर्त्तिता . ॥ कैकेयीशौरसेनी चकाश्मीरामूलमागधी । द्राविडीपा पाञ्चदेशीचभूतभाषाप्रकीर्तिता . ॥ ॥ वैदर्भीमागधीनाटीकाश्मीरीचोप नागरी । पाञ्चालीषड्विधश्चभाषा

भासते । तत्रासति ० पश्चात्
ससमानत्वजडत्वप्रथमतोभा समान
चैतन्य मेवभासत्व रूप मिति नि
श्चित्य०जडमुपेक्षन्चिन्मात्रचित्तेवा
सयेदितिजीवन्मुक्तिप्रकरणम् ॥
भासन्त । पुं० भासपक्षिणि । शकुन्ते
॥ सूर्ये । भे । नक्षत्रे ॥ चन्द्रे
त्रि० रम्ये । सुन्दराकारे ॥ भासते।
भास० । तृभूवहिवसिभासिसाधीति
भच्षित् ॥
भासन्ती । स्त्री० नक्षत्रे ।' ङीष् ॥
भासमान : । त्रि० प्रकाशमाने ॥
भासित । त्रि० प्रकाशिते ॥
भासु । पु० सूर्ये ॥
भासुर । पु० स्फटिके । वीरे ॥
प्रमाणनिरपेक्षतयैवभासनशीले०
आत्मनि ॥ न० कुष्ठौषधे ॥ त्रि०
भासनशीले । दीप्तियुक्ते ॥ भासते
तच्छील । भास० । भञ्जभासमि
दोघुरच् ।
भासुरपुष्पा । स्त्री० वृश्चिकाख्या
म् ॥
भास्कर । पुं० आदित्ये । प्रभाकरे
॥ यथा । सदाशनजन्तियश्चैनसदा
दान ददन्तिच । सदाचशायुभक्षा
स्ते नित्य येऽचन्तिभास्करमितिभ
विष्यपुराणम् । अग्नौ । वह्नौ ॥
भा करोतिः । दिवाविभेतिट
। कस्कादित्वात्स . । तेजविसर्ज
नीयजिह्वामूलीयौसकारस्वनभवत
वीरे । अर्कवृक्षे ॥ न० सुव
र्णे ॥
भास्करद्युमम् । न० प्रयागे ॥
भास्करप्रिय । पुं० पद्मरागमणौ । चु
न्नी०इतिकेचित् ॥
भास्करेष्टा । स्त्री० आदित्यभक्ताया
म ॥
भास्मन । त्रि० भस्ममये ॥ भस्मनो
विकार । अण् । अन्नितिप्रकृति
भावान्नस्तद्धितवृतिटिलोपेन ॥
भास्वान । पुं० सूर्ये ॥ अर्कवृक्षे ॥
दीप्तौ । प्रभायाम ॥ भास सन्त्य
स्य । तदस्यास्तीतिमतुप ॥ त्रि०
भास्वरे । दीप्तिविशिष्टे । प्रकाश
वति ॥
भास्वर । पुं० दिने ॥ न० कुष्टौष
धौ । कूट० इ० भा० ॥ त्रि० प्रका
शवति । भासनशीले ॥ भासते०
तच्छील । भासदीप्तौ । स्थेशभा
सपिसकसोवरच् ॥
भिसटा । स्त्री० भिस्सटायाम् ॥
भिक्षा । स्त्री० भृतौ ॥ याच्ञायाम् । अर्थ
नायाम् ॥ सेवायाम् ॥ भिक्षितवस्तुनि ।
अत्रग्रासमात्राभवेद्भिक्षेतिशातात
प । सप्तवेस्वधिकामपिदेयमिति०
भिक्षाद्धभिक्षवेदद्याद्विधिवद्ब्रह्मचा
रिणे०इत्यन्नसूक्तभट्ट . ॥ यदैव
यतिमन्नस्यात्पिण्डोनपिण्डितिशङ्कर्य०

ती । भिदिर् ० । ज्ञान् ॥ प्रदेशे ॥ प्रशस्ति ॥ मलज्ञिकोद्भमिश्राः स्यु प्रकाशस्त्याल भित्तयइतिगच्छ रत्नमशोदृधि ' ॥
भित्तिका । स्त्री० भित्ती ॥ पल्लिकाया म् । पल्ल्याम् ॥ भिनत्ति ० भि द्यतेवा । भिदिर् ० । कृतिभिदिल तिभ्य . किदिति ० तिकन् ॥
भित्तिचौर पु ० चौरविशेषे । कुड्य च्छेदिनि । सीधचोर० इ० भा०
भित्तिपातन : पुं ० महामूषके । घू स ० इ० भा० ॥
भिद् । स्त्री० प्रभेदे ॥ भिनत्तिभिदिर् ० । तच्छीलादिषु ० अन्यतोपिदृ श्यतइतिक्विप् ॥ त्रि ० भेदकर्त्त रि ॥
भिदक । पुं० खड्गी ॥ न ० वज्रे ॥
भिदा । स्त्री० भेदे ॥ वस्त्रादेर्विदारणे । विदरे । स्फुटने । फाड़ा० फाटा ० फाड़ना ० इ ० भा० ॥ भेदन म । भिदिर् ० । भिदाद्यङ् । टाप् ॥ अन्यार्थे ॥
भिदि । पुं० वज्रे ॥ भिनत्ति । भि दिर् ० । कुगुग्रुपुकुटिभिदिछिदि भ्यश्चेति ० इ ' सचकित् ॥
भिदिरम् । न० वज्रे ॥ भिनत्ति । भि दिर् ० । इषिमदौत्यादिनाकिरच्
भिदु । पु ० मणौ ॥ वज्रे ॥ भिनत्ति । भिदिर् ० । पृभिदिव्यधीतिकुः ।
भिदुरम् । न० कुलिशे वज्रे ॥ भिन त्ति । भिदिर् ० । विदिभिदिच्छिदे कुरच् । न ० प्लक्षवृक्षे । त्रि० भि न्ने ॥
भिदेलिम । त्रि ० भेत्तव्ये ॥ भिद्यते कर्मकर्त्रिभिदे केलिमर ॥
भिद्य । पु ० नदे । भिनत्तिकूलम् । भि दिर् ० । भिद्योद्ध्यौनदे ० इति० कृत्रपवाद कर्त्तरिक्यप्निपात्यते ॥
भिद्रम् । न० शतधारे । वज्रे भिन त्ति । भिदिर ० स्फायौतञ्चीत्यदि नारक् ॥
भिन्दि . स्त्री ० क्षपाविक्रियाम् ॥ भि न्दति । भिदिचयवे । सर्वधातुभ्य इन् ॥
भिन्दिपाल । पुं० अस्त्रपर्य्याये । सुगे । गोफण ० इ० भा० ॥ भिभिन्दं पा लयति । पालरक्षणे । कर्मण्यण्
भिन्न: । त्रि० भेदविशिष्टे । दारिते । भे दिते । खण्डितावयवे । अन्यसङ्गते ॥ फुल्ले ॥ विदृषे भिद्यतेस्म ॥ भिदिर् ० । क्त । रदाभ्यांनिष्ठातो न पूर्वस्यचदइति० दकारतकारयो र्नौ ॥ न० अन्यार्थवचने । पुं ० न० क्षतरोगविशेषे । तल्लक्षणयथा । मत्तिकुम्भेत्वक्गात्रमिषाष्टेराम योचन : । यत्किंचित्प्रस्रवेत्त द्विधिभिन्नमित्यभिधीयते ॥ आम च : कोष : ॥

भिन्नक । पुं॰ चपणे । बौद्धे । त्रि॰ द्वैधविन्ने ॥ अनन्तरयन्तगतीक्तादितिकन् ॥

भिन्नगाचिका । स्त्री॰ कर्कटीविशेषे । फूट॰ इ॰ भा॰ ॥ भिन्न गात्रमस्या

भिन्नदर्शी । त्रि॰ अज्ञे । कुतार्किके । अविद्यामोहितात्मान . पुरुषाभिन्नदर्शिन ॥ भिन्न द्रष्टु शीलयस्य । णिनि ॥

भिन्नधी । त्रि॰ अ सितमती ॥

भिन्नभिन्नात्मा । पु॰ चणके ॥

भिन्नयोजनी । स्त्री॰ पाषाणभेदवृचे ॥

भिन्नार्थक । त्रि॰ अन्यस्मिन् ॥ भिन्नार्थकाअन्यतरएकत्वान्यतराअपि इत्यमर ॥ भिन्न अर्थोयस्यस ॥

भिया । स्त्री॰ भये ॥ ञिभीभये । भिदाद्यङ्विइयङ् । टाप् ॥

भिरिण्टिका । स्त्री॰ श्वेतगुञ्जायाम ॥

भिल्ल । पुं॰ म्लेच्छजात्यन्तरे । भील इ॰ भा॰ ॥ यथाह । हेमचन्द्र । मालाभिल्लाकिराताश्चसर्वेपिम्लेच्छजातय इति ॥ सचब्राह्मणकन्यायातीवराज्जात । यथा । पुलिन्दमेदभिल्लाश्चपुल्लोमल्लश्चधावक । कुन्दकारोडोखलोवामृतपोहस्तिपस्तथा ॥ एतेवैतीवराज्जाता ' कन्यायांब्राह्मणस्यचेतिप॰ पद्धति ॥

भिल्लगवी । स्त्री॰ गवय्याम् ॥

भिल्लतरु पुं॰ लोध्रे ॥

भिल्ली । स्त्री॰ लोध्रे ॥

भिषक्पाश । पु॰ निन्द्यवैद्ये ॥ कुत्सितोभिषक् । याप्ये पाशप् ॥

भिषक्प्रिया । स्त्री॰ गुडूच्याम् ॥

भिषक्जितम् । न॰ औषधे ॥

भिषग्भद्रा । स्त्री॰ भद्रदन्तिकायाम् ॥

भिषङ्माता । स्त्री॰ वासके ॥

भिषक् । पु॰ वैद्ये ॥ हेतौलिङ्गेप्रशमनेरोगाणामपुनर्भवे । ज्ञानचतुर्विधयस्यसराजार्होभिषक्तम ॥ दण्डनीयोयथा । अज्ञातौषधमन्त्रस्तुयस्तव्याधेरतत्त्ववित् । रोगिभ्योऽर्थैसमादत्ते सदण्डार्होरवन्निषक् ॥ भिषजोन्नस्याभोज्यत्व यथा । शूद्रान्नब्राह्मणोभुक्त्वातथारङ्गावतारिण, । चिकित्सकस्यकू रस्यतथास्त्रीमृगजीविनाम् ॥ शौण्डिकान्न सूतिकान्न भुक्त्वामासंव्रतीभवेत् । व्रतीयावकेन । तचधेनुद्वयमितिप्रायश्चित्तविवेक ॥ अपिच । पूयचिकित्सकस्यान्न पुंश्चल्यास्त्वन्नमिन्द्रियम् । विष्ठावार्धुषिकस्यान्नशस्त्रविक्रयिणोमलम् ॥ इतिमानवे ४ अध्याय . ॥ भिषज्यति । भिषज् रुग् जये । कण्ड्वादि । क्विप् ॥ बिभेतिवा । ञिभी॰ । भिय . षुगृह्रस्वश्चेत्यजि ॥

भिखटा । स्त्री॰ दग्धिकायाम् । दग्धान्ने ॥ भिखांटीकते । टीकृगतौ ।

अन्येभ्योपीतिड . । ङ्यापोरितिह्र
स ॥

भिक्षा । स्त्री॰ अन्ने । भोदने । भक्ते ॥
बभस्ति । भसदीप्तौ । बाहुलकात्स
न्दसिबहुलमितीत्वम् । आहाय
भिक्षेतिभाष्यप्रयोगाल्लोकेपि ॥ य
द्वा । भेदनम्॰भित् । सम्पदादि
त्वात्क्विप् । भिदस्यति । भोमन्त
कर्मणि । आतोनुपेतिक . । पृषो
दरादि : ॥

भिक्षाण्डम् । न॰ मालूके । भसीण्ड॰
कृ॰ भा॰ प्र॰ काण्डे ॥

भी । स्त्री॰ भये ॥ ञिभीभये । सम्प
दादित्वात्क्विप् ॥

भीतम् । न॰ भये त्रि॰ भययुक्ते ॥ वि
भेति । ञिभी॰ क्त ॰ ॥

भीतभीत : । त्रि॰ अतिशयेनभीते ।
भीतप्रकारे ॥

भीति : । स्त्री॰ भये ॥ ञिभीभये ।
क्तिन् ॥ कम्पे ॥

भीम . । पुं॰ अम्लवेतसे ॥ शिवे ॥
पीठविशेषे ॥ यथा । भीमेश्वरोभी
मपीठे शिवाभीमेश्वरीतथेत्यागम .
॥ सर्वसम्प्रतिपन्नपराक्रमेपाण्डुतन
ये । वृकोदरे ॥ त्रि॰भयहेतौ । घो
रे ॥ भयानके ॥ बिभेत्यस्मात् । भी
मादयोऽपादाने॰ भिय : षुग्वेति
मक् ॥

भीमकर्मा । पुं॰ भीमसेने ॥ भीमं॰
हिडम्बवधादिरूपकर्मास्य ॥

भीमनाद । पु॰ सिंहे ॥

भीमनिर्ह्राद . । पु॰ राक्षसान्तरे ॥

भीमपूर्वज । पुं॰ भीमाग्रजे । युधि
ष्ठिरे ॥

भीमरथ : । पुं॰ तामसमनुयुगजाता
सुरविशेषे ॥ हरिणाकूर्मरूपेणहतो
भीमरथोऽसुरइतिमार्कण्डेयमाहा
त्म्ये ८६ ऽध्याय ॥

भीमरथी । स्त्री॰ जनानामवस्थाविशे
षे ॥ यथा । मेलवीसप्तसप्ततिकेवर्षे
सप्तमेमासिसप्तमी । रात्रिर्भीमरथी
नामनराणामतिदुस्तरा ॥ नराणां
दुरितक्रमेतिपाठ . ॥ तामतीत्यन
रोयोसौ दिनानि यानिजीवति ।
क्रतुभिस्तानितुल्यानिसुवर्णंशतदक्षि
णै ॥ गति . प्रदक्षिणंविष्णोर्वस्त्र
मनन्नभावणम् । ध्यानंनिद्रासुखा
चानु भीमरथ्या . पारम्रुति : ॥ न
दीविशेषे ॥

भीमविक्रान्त : । पुं॰ वारिमाचले ।
सिंहे ॥ भीमश्चासौविक्रान्त : ॥
त्रि॰ भयानकविक्रमवति ॥

भीमशासन : । पुं॰ यमे ॥ भीमंशास
नंयस्य ॥

भीमसेन: । पुं॰ मध्यमपाण्डवे । भी
मेवृकोदरे ॥ कर्पूरभेदे । भीम
सेनोकर्पूरइतिभाषा ॥ यथा । पी
तासोभीमसेनस्तदनुघितकार : श्र

रावाससत्त्व । पांशु पिच्छोऽज्ज सारस्तदनुहिमयुतावालुकाजूटिका च। पश्चादस्यास्तुषारस्तदुपरिसहिम शीतल पत्रिकाख्याक् रस्ते तिभे दाशुषारसमइवावैसहश्यं नदश्या ॥

भीमसुता । स्त्री० दमयन्त्याम् ॥

भीमा । स्त्री० दुर्गायाम् ॥ रोचनाख्य गन्धद्रव्ये ॥ कशायाम् ॥

भीमाकाली । भीमादेवी । स्त्री०) दुर्गायाम् ॥

भीमास्थानम् । न० तीर्थविशेषे ॥

भीमेश्वरी । स्त्री० भीमपीठस्थायाम् ॥

भीमैकादशी । स्त्री० माघशुक्लैकाद श्याम् ॥ भैम्याम् ॥

भीर । त्रि० भयदे ॥ भियराति । रा । क ॥

भीरु । पु० इक्षुप्रभेदे ॥ यथा । भी रु श्लेष्मकर स्वादुरविदाहीगुरु स्मृत इति ॥ व्याघ्रे ॥ शृगाले ॥ त्रि० भार्त्ते । कातरे ॥ भीरुकौ । चक्ष्रौ । डरपोक० इ० भा० ॥ रणे भीरो स्वर्गाभाव ॥ विभेति । ञिभीभये । भिय . क्रुक्लुकनावि ति० क्रु ॥ स्त्री० भयशीलायाम् । वरयोषिति ॥ कण्टकार्याम् ॥ श- तावर्याम् ॥ अजायाम् ॥ छाया याम् ॥ स्त्रीमात्रे ॥

भीरुक । पुं० इक्षुप्रभेदे । भोरुरी० इ० दे० भा० प्र० ॥ वातपित्तप्रश मनोमधुरोरसपाकयो । सुशीतोबृंह णोबल्य पौण्ड्रकोभीरुकस्तथा ॥ पेचके ॥ न० वने ॥ त्रि० भयशीले । भीलुकैं । चक्ष्रौ ॥ विभे ति । ञिभी० । क्रुकन् ॥

भीरुहृदय । पु० मृगे ॥

भीरू: । स्त्री० भयशीलायांयोषिति ॥ ऊङुतश्चत्यूङ् ॥

भील । पु० भिल्ले ॥ भियलाति । ला० क० ॥

भीलभूषणा । स्त्री० गुञ्जायाम् ॥

भीलुक । त्रि० भयप्रकृतिकेजने । चक्ष्रौ ॥ विभेति । ञिभी० । भिय क्रुक्लुकनाविति क्लुक न् ॥

भीषण । पु० भयानकरसे ॥ शल्ल- क्याम् ॥ कुन्दुरुके ॥ कपोते ॥ हिन्ताले ॥ भैरवविशेषे ॥ त्रि० गाढे ॥ दारुणे ॥ भीमरसान्विते ॥ भीषयते । ञिभी० । नन्द्यादि त्वाल्ल्यु । भियोहेतुभयेषुगिति षुक् ॥

भीष्म । पु० गाङ्गेये । पाण्डवाना पितामहे ॥ रुद्रे ॥ राक्षसे ॥ भया नकरसे ॥ त्रि० भयहेतौ । भयङ्क रे ॥ विभेत्यस्मात् । ञिभी० । भिय षुग्वेति०मक्० षुगागमश्च

भीष्मक । पु० रुक्मिण्या पितरि ॥

भीष्मजननी । स्त्री० गङ्गायाम् ॥

भीष्मपञ्चकम् । न० कार्त्तिकशुक्लपञ्ची यैकादश्यादि पूर्णिमान्तपञ्चतिथि कर्तव्यव्रतविशेषे ॥

भीष्मरत्नम । न० हिमालयोत्तरदेश जातशुक्लवर्णप्रस्तरविशेषे । भीष्म पाषाणे ॥

भीष्मसू. । स्त्री० गङ्गायाम् ॥ भीष्मं सूते । षूङ्० । क्विप् ॥ शान्तनो- र्मंहिषीभूत्वाभीष्म सूतवतीयत । तस्मात्साभीष्मसू प्रोक्तागङ्गात्रैलो क्यपावनी ॥

भीष्माष्टमी स्त्री० माघशुक्लाष्टम्याम् ॥ तत्रभीष्मस्यतर्पणकर्त्तव्यम् ॥

भीसटम् । न० शूमास्थके ॥

भुक्तम् । न० भक्षणे ॥ त्रि० भक्षिते । खादिते । अभ्यवहृते । अशिते ॥ भुज्यतेस्मभुज० । क्त. भुक्ताब्राह्मणा इत्यत्रतुभुक्तमेषामस्तीत्यकारोमत्व र्थीयोनतुकर्त्तरिक्त . । सकर्मकेभ्यस्तस्यविधानाभावात् ॥ यद्वोत्तर पदलोपोत्रद्रष्टव्य । भुक्तान्नाभु क्ता । अत्रान्नस्यभुक्तत्व ब्राह्मणे षूपचर्य्यते ॥

भुक्तसमुज्झित । त्रि० फेलायाम् ॥ पूर्वम्भुक्तम्० पश्चात्समुज्झितम् । पूर्वकालैकेतिसमास ॥

भुक्ति । स्त्री० भोजने ॥ भोजनम् । भुजपालनाभ्यवहारयो : । स्त्रियां क्तिन् ॥ भोगे ॥ यथा । भुक्तिस्पृ हर्षीसिध्य दिति ॥

भुक्तिप्रद । पु० मुद्गे ॥ त्रि०भोगदा तरि ॥

भुक्तोज्झित । त्रि० फेलायाम् ॥ पूर्वंभुक्तम्०पश्चादुज्झितम् । पूर्वकालैकेतिसमास ॥

भुग्न । त्रि० रोगादिनाकुटिलीकृते रुग्णे ॥ भग्ने ॥ भुज्यतेस्म । भुजो कौटिल्ये । क्त । ओदितश्चेति नत्वम् ॥ भुजतिस्मवा । गत्यर्थेति क्त ॥

भुज । पु० स्त्री० करे ॥ बाहौ ॥ अस्यशुभाशुभलक्षणंयथा । कक्षाप्र त्यदलाग्रे छासुगन्धिन्यूर्द्धरोमिका । अन्यथार्थहीनानामसौनि स्वस्य रोमशौ ॥ निर्मांसौचैवभग्नाल्पौस्नि ष्टौचविपुलौभुजौ । आजानुलम्बि नौवाह्रवसौपीनौनीनरेश्वरे ॥ नि स्वानांरोमशौह्रस्वौस्त्रै छौकरिकरप्र भौ । इति ॥ भुज्यतेऽनेन । भुज पालनाभ्यवहारयो . । भुजन्युब्जौ पाण्युपतापयोरितिसाधु ॥ यद्वा । भुजति । भुजकौटिल्ये । इगुप- धेतिक ॥ चतुष्कलिशेषगुरुसंज्ञा याम् ॥ ० ॥ पु० ॥

भुजकोटर . । पु० कक्षे ॥

भुजग . । पु० सर्पे ॥ भुज. सन्गच्छ ति । अन्येष्वपीतिड ॥ भुजंकौ टिल्येनगच्छतिवा ।

भुजगदारण । पु० गरुडे ॥

भुजगभोगी । ० मयूरे ॥

भुजगराज । पु० शेषाहौ ॥ भुजगानां राजा । टच् ॥

भुजगशिशुभृता । स्त्री० बृहतीछन्द प्रभेदे ॥ भुजगशिशुभृतानौम । यथा । यमुनातटनिकटस्थौषीभुजगशिशुभृतायासीत् । मुररिपुदलितेनागेन्द्रजनसुखदासा ऽभूत् ॥

भुजगान्तक । पु० गरुडे ।

भुजगाभोजी । पु० मयूरे ॥

भुजगाशन । पु० पक्षिसिंहे । गरुडे ॥ भुजगानश्नाति । अश० । ल्यु । भुजगाश्चअशन यस्यवा ॥

भुजङ्ग । पु० अहौ । सर्पे ॥ षिड्गे ॥ भुजं नकौटिल्येनगच्छति । गम्ने सुपिखच् खच्चडिद्वावाच्यइतिडित्वपक्षे टिलोप । ॥ सीसके ।

भुजङ्गघातिनी । स्त्री० सर्पाक्ष्याम् । चक्र्याम् । काकाक्षिका० द्र० गौ० दे० भा० ॥

भुजङ्गजिह्वा । स्त्री० महासमङ्गायाम् ॥ सर्परसनायाम् ॥

भुजङ्गप्रयातम् । न० जगतीछन्द प्रभेदे ॥ भुजङ्गप्रयात चतुर्भिर्यकारै ॥ यथा । सदारात्मजश्चातिभृत्योविहायस्वमेत हृद् जीवित लिप्सलान । मयाक्लेशित । कालिमेत्य कुरुत्व भुजङ्गप्रयात द्रुतश्नागराय ॥

भुजङ्गभुक् । पु० मयूरे ॥ भुजङ्गभुङ्क्ते । भुज० । क्विप् ॥ गरुडे ॥

भुजङ्गभोजी । पुं० राजसर्पे ॥

भुजङ्गम । पु० सर्पे । भुजं नकौटिल्येनगच्छति । गमे सुपिवाच्यइतिखच् । खच्चडिद्वावाच्यइतिडिद्भावे टिलोपाभाव ॥ न० सीसके ॥

भुजङ्गलता । स्त्री० नागवल्ल्याम् ॥

भुजङ्गविजृम्भितम् । न० उत्कृतिच्छन्द प्रभेदे ॥ वस्वीशाश्वैश्छेदोपेत ममतनयुगलसजजगै ॰र्भुजङ्गविजृम्भितम् ॥ यथा । शैलोदञ्चन्यञ्चतपादप्रकटविकटनटनभरोरुवातकरतालकस्वारुप्रेङ्खच्चूडावर्हस्रुतितरलनवकिशलयतरङ्गितहार स्रक् । चञ्चन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुग कृतस्तुतिरच्युत । पायान्नश्छिन्दन्कालिन्दीह्रदकृतनिजवसतिदृढभुजङ्गविजृम्भितम् ॥

भुजङ्गसङ्गता । स्त्री० बृहतीछन्द प्रभेदे ॥ सजरैर्भुजङ्गसङ्गता ॥ यथा । तरलातरङ्गरिङ्गितैर्यमुनाभुजङ्गसङ्गता । कथमेतिव-

स्वाचारकाश्यपल ' सद्देवताहरि ॥

भुजङ्गहा । पुं० श्रीकृष्णस्यन्दन ध्वजे । गरुडे ॥

भुजङ्गाक्षी । स्त्री० रास्नायाम् ॥ भुजङ्गान् अचति । अचूव्याप्तौ । कर्मण्यण् ॥ यद्वा । भुजङ्गोचियस्या । अच्णोदर्शनादित्यच् । जातेरिति० गौरादित्वाद्वा० ङीष् । भुजङ्गशब्द स्यभुजङ्गाक्षिसदृशैलक्षणा ॥

भुजङ्गाख्य । पुं० नागकेसरे ॥

भुजशिर: । न० स्कन्धे ॥ भुजस्यशिर ॥

भुजा । स्त्री० बाहौ ॥ करे ॥ भुजाट्टाप् ॥

भुजाकण्ट: । पुं० कात्याङ्घ्रि । नखे॥

भुजादल । पुं० हस्ते ॥ भुजान्तरम् न० क्रोडे ॥ भुजयोरन्तरम् ॥

भुजि । पुं० वह्नौ ॥ भुनक्ति० भुज्यतेवा । भुज० । भुजे. किच्चेति० इ ॥

भुजिष्य । पुं० स्वतन्त्रे ॥ हस्तसूत्रे । दासे ॥ भुङ्क्ते० स्वाम्युच्छिष्टम्० भुज्यतेवा । भुज० । रुचिभुजिभ्या किष्यन् ॥

भुजिष्या । स्त्री० दास्याम् ॥ गणिकायाम् ॥ टाप ॥

भुज्यु । पुं० भोजने ॥ अग्नौ ॥ भुनक्तिपालयतिसर्वाणिभूतानि । भुजमृङ्भ्यायुक्त्युकाविति युक् ॥ भोजनं वा ॥ भाजने ॥ त्रिषिविशि ष्टे ॥

भुञ्जन् । त्रि० भोगकर्तरि । भुञ्जाने॥ भुजे० लट शतृ ॥

भुञ्जान ' । त्रि० भुङ्क्ते । यथा। त्रिपुधामसुयद्भोज्य भोक्तायश्चप्रकीर्तित ' । वेदैतदुभयंयस्तुसभुञ्जानो नलिप्यत इति । त्रिपुधामसुजाग्र दादिषु ॥ भुजे . कर्त्तरिलट शानच् ॥

भुविक् । स्त्री० पृथिव्याम् ॥ बिभर्त्ति० भरति मनुष्यादीन् । डुभृञ् अ० । भुअउच्चेति० कृन्प्रत्यय

भुवनम् । न० सलिले । जले ॥ गगने । जने ॥ पिष्टपे । जगति ॥ भूरादिसर्वलोके ॥ चतुर्दशभुवनानियथा । भूर्भुव. स्वर्महश्चैवजनश्चतप एवच । सत्यलोकश्चसप्तैवलोकास्तु परिकीर्त्तिता: । अतलसुतलञ्चैव वितलञ्चगभस्तिमत् । महातलर सातलपातालस्सप्तमम् ॥ इति ॥ भवन्त्यास्मिन्भूतानि० इति भुवनमयलोक ॥ भूयते । भूप्राप्तौ । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥ यद्वा । भवन्ति० उत्पद्यन्तेऽस्मिन्क रणेल्युट् । सञ्ज्ञापूर्वकत्वाद्गुणा भाव ' ॥

भुवनकोष: । पुं० भूगोले ॥

भुवनकोषवित् त्रि० । चतुर्दशभुवना

निवस्तू मि॰ इतितात्पर्यं वाभिक्षे ॥ कल्पनामात्रमेतत् । तेषामदृष्टत्वात् । नचवचनेभ्यस्तद्दर्शनम् । तेषांमिथोविप्रतिपत्तिदर्शनात ॥

भुवनेश्वर । पु॰ एकाम्रवे ॥

भुवनेश्वरी । स्त्री॰ महाविद्याविशेषे। साम्यावस्थमायोपाधिकब्रह्मरूपिण्याम् ॥ मणिद्वीपाधिवासिन्याम्॥ यथा । पाशाङ्कुशधराभीतिवरादेवीं चिदात्मिकाम् । वन्देसमन्दहसिता मणिद्वीपाधिवासिनीम् ॥ आयुधस्थानानिवामाध करमारभ्यदक्षिणाध करपर्यन्तम् । तदुक्तं महासमोहनतन्त्रे । दक्षिणेचाङ्कुशदद्यात् वामेपाशप्रदापयेत् । अभयदक्षिणे दद्याद्वरवामेप्रदापयेदिति । इत्यपट्टलमपि भुवनेशीध्याने । दक्षेङ्कुशाभयेप्रोक्तेवामेपाशमथेष्टदमिति॥

भुवन्यु । पु॰ भानौ ॥ सूर्ये ॥ ज्वलने । वह्नौ ॥ शशलाञ्छने । शशिनि ॥ भवति । भू॰ । कन्युच् छिपिवेति॰ बाहुल । कन्युच् ॥

भुवर॰ । अ॰ अन्तरिक्षे । गगने ॥ षष्ठ्यन्तप्रतिरूपकमव्ययम् । भवति । भू॰ । भूरञ्जिभ्यांकिदित्यसुन् । उवङ् ॥

भुवर्लोक । पु॰ भूरादिसप्तलोकान्तर्गत द्वितीयलोके ॥ यथा । भूमिसूर्यान्तरयत्रसिद्धादिमुनिसेवितम् । भुवर्लोकस्तुसोप्युक्तोद्वितीयोमुनिसत्तम ॥ अपिच । तिथिलत्वोभुवर्लोकोध्रुवप्रान्तोमहीतलात् ॥ भूपृष्ठादारभ्यध्रुवप्रान्तइति॰ ज्योतिश्चक्रावलम्बनभूतध्रुवपर्यन्तपक्षद्वयस्थलोकच्छायोभुवर्लोकइत्यर्थः ॥

भुवि । न॰ अब्धौ । समुद्रे ॥ भवन्त्यस्मिन् । भू॰ । भुव किदिति॰ इन् ॥

भुशुण्डी । स्त्री॰ अस्त्रान्तरे । अनियन्त्रे । यथा । उड्डीयोड्डीयचप्राप्य नन्दतीदशकंटका । क्रमतेचानताडीयासाभुशुण्डीनिगद्यते ॥

भू । अ॰ रसातले ॥

भू । स्त्री॰ स्थानमात्रे ॥ एकाङ्कि ॥ व्याहृत्यन्तरे ॥ धरण्याम् । भूमौ ॥ हृष्टात्मविजयन्ययान्नृपान्हसतिभूरियम् । अहोमाविजिगीषन्तिमृत्योः क्रीडनकानराः ॥ भवति॰ भवनवा । भू॰ सत्तायाम् । कर्त्तरिभावेवाक्विप् ॥ भवन्त्यस्यांसर्वमित्यधिकरणेबहुलवचनाद्वाक्विवित्येके ॥ भवन्त्यस्यांभूतानीत्यपादानेवाक्विवित्येके ॥ उत्पत्तौ ॥

भूक । पुं॰ न॰ काले ॥ छिद्रे ॥ अन्धकारे ॥ भवति॥भू॰ । सृवृभूशुषिमुषिभ्यः कक् ।

भूकदम्ब । पु॰ अलम्बुषवृक्षे । कोकसिमः । इ॰ गौ॰ दे॰ भा॰ ॥

भूकदम्बक । पु॰ यवान्याम् ।

भूकदम्बिका । स्त्री॰ महाश्रावणिका याम् ॥ मुण्डाम् ॥

भूकन्द । पु॰ महाश्रावणिकायाम् ॥

भूकम्प । पु॰ उत्पातविशेषे ॥ स-यथा । यामक्रमाच्चभूकम्पोऽह्निजादीनामनिष्टद । अनिष्टद क्षितीशानांसन्ध्ययोरुभयोरपि ॥ इतिवशिष्ठ ॥ यदाविजृम्भतेऽनन्तोमदाघूर्णितलोचन । तदाचलतिभूरेषा साद्रिद्वीपाब्धिकानना ॥ भुव कम्पो भूकम्प ॥ मेषेवृश्चिकभेगत प्रचलतिव्यासादिभि . कथ्यते चापे मीनकुलीरभेचवृषभेसव्य चलेत्क्-क्षप । युकेकुम्भधरेमृगेन्द्रमिथुने-कन्यामृगेपन्नगस्तेषामेकतमोयदि प्रचलतिक्षोणीतदाकम्पते ॥ कम्पेमरणञ्चयमरण चापिपन्नगे । सर्वसुखदश्चैवपृथिव्यां चलितेगजे ॥ प्रथितनरेश्वरमरणव्यसनान्याग्नेय मारुतयो . । क्षुद्भयमतिवृष्टिभिरूपपीडान्तेजनाश्चापि ॥ त्रिचतुर्थपञ्चमदिनेमासेपक्षेत्रिपक्षके । भवतियदाभूकम्प प्रधाननृपनाशनंकुरुते । सचायभूमिजोत्पातविशेष ॥यथा । चरस्थिरभवभौमभूकम्पमपिभूमिजम् । जलाशयानांवैकृत्य भौमतदपिकीर्तितम् ॥ भौमंयाप्यफलंज्ञेयचिरेणपरिपच्यते ॥ अपिच । क्षितिकम्पमाहुरेके वृहदन्तर्जलनिवासिसत्त्वकृतम् । भूभारखिन्नदिग्गजविश्रामसमुद्भवचान्ये ॥ अनिलोऽनिलेननिहत क्षितौपतन्सस्वनकरोत्यन्ये । केचित्त्वदृष्टकारितमिदमन्ये प्राहुराचार्या ॥ गिरिभि पुरासपक्षैर्वसुधाप्रपतद्भिरुत्पतद्भिश्च । आकम्पितापितामहमामरसदसिसव्रीडम् ॥ भगवन्नामममैतत्त्वयाकृतयदचलेतितन्नतथा । क्रियतेऽचलैश्चलद्भि शक्ताहना सर्वेदस्य । तस्या सगद्गदगिर किञ्चित्स्फुरिताधरविनतमीषत् । साश्रुविलोचनमाननमवलोक्यपितामह प्राह ॥ मन्युहरेन्द्रधात्या क्षिपकुलिशशैलपक्षभङ्गाय । शक्र कृतमित्युक्त्वामाभैषीरितिवसुमतीमाह ॥ किन्त्वनिलदहनसुरपतिवरुणा . सदसत्फलावबोधार्थम् । प्राग्द्वित्रिचतुर्भागेषुदिननिशो कम्पयिष्यन्ति ॥ अतोविशेषोद्रष्टव्योवाराह्यांसुविचक्षणै ॥

भूकर्बुदार । पुं॰ ) क्षुद्रश्लेष्मातके ।

भूकर्बुदारक । पुं॰) भूश्लेष्मी । छोटा लसोडा॰ इ॰ भा॰ ॥ भूकर्बुदारोमधुर कृमिशूलापह परम् । वातप्रकोपन : किञ्चित्शीतल . स्वर्णमारक ॥

भूकल । पुं॰ दुर्विनीताश्वे ॥

भूकश्यप । पुं॰ वसुदेवे ॥

भूकाक । पुं॰ खल्पकङ्के ॥ क्रौञ्चे ॥ नीलकपोते ॥

भूकुष्मी । स्त्री॰ भूपाटल्याम् ॥

भूकुष्माण्डी । स्त्री॰ विदार्याम् ॥

भूकेश । पुं॰ शैवले ॥ वटे ॥

भूकेशा । स्त्री॰ राक्षस्याम् ॥

भूकेशी । स्त्री॰ भवल्गुजे ॥

भूक्षित् । पुं॰ सूचीरोमणि । शूकरे ॥

भूखर्जूरी । स्त्री॰ क्षुद्रखर्जूर्याम् । भूयुक्तायाम् ॥ भूखर्जूरीतुमधुरा शिशिरादाहपित्तनुत् ॥

भूगरम । न॰ विषे ॥

भूगर्भ । पुं॰ भगवति । भूर्गर्भेयस्य भूः सर्वभूताश्रयभूतागर्भइवान्तर्वर्तिनीयस्य भूसत्तागर्भेऽस्येतिवा॥ भवभूतिनामनि॰ कवौ ॥

भूगोल । पुं॰ ज्योतिश्शास्त्रप्रसिद्धे भुवनकोषे ॥ भोज्य यथासर्वरसविनाज्य राज्य यथाराजविवर्जितञ्च । सभानभातीवसुवक्तृहीनागोलानभिज्ञोगणकस्तथैव ॥ वादीव्याकरणविनैवविदुषाधृष्टः प्रविष्टः सभाज्ल्पन्नल्पमति स्मरात्पटवटभ्रूभङ्गवक्रोक्तिभिः । ह्रीतः सन्नुपहासमेतिगणकोगोलानभिज्ञस्तथाज्योतिर्वित् सदसिप्रगल्भगणकप्रश्नप्रपञ्चोक्तिभिः ॥

भूचर । त्रि॰ भूमिचारिणि ॥

भूच्छायम् । न॰ अन्धकारे ॥ भुवः छाया । छायाबाहुल्ये॰ इति क्लीवता ॥

भूजम्बु । पुं॰ भूनागे ॥

भूजम्बू । स्त्री॰ गोधूमे ॥ विकङ्कत फले ॥ भूमिजम्ब्वाम् ॥

भूत । पुं॰ दे॰योनिविशेषे ॥ सच अधोमुखोर्द्ध्वमुखादिपिशाचभेदोरुद्रानुचरोबालग्रहः ॥ कुमारे ॥ कृष्णचतुर्दश्याम् ॥ योगीन्द्रे ॥ शब्दोगन्धविशेषेष्विषु । न॰ क्ष्मादौ । पृथिव्यप्तेजोवाय्वाकाशेषु ॥ पिशाचादौ ॥ जन्तौ । युक्ते । न्याय्ये ॥ वस्तुतत्त्वानुसरणे । त्रि॰ उचिते ॥ प्राप्ते ॥ वित्ते ॥ ऋते । सत्ये ॥ प्राणिनि ॥ कालविशेषे । वृत्ते । अतीते । गते ॥ परमार्थे ॥ विद्यमानेवस्तुनि ॥ अतीतोत्पत्तिके । जाते ॥ समे ॥ उत्तरपदस्थएव भूतशब्दः समार्थइतिशाब्दिकाः । यथा पितृभूतः । देवभूतोयमिति पूर्वमपिविद्यमाने ॥ भवनभूमिर्णि ॥ भाव्यतेस्म । भूप्राप्तौ । आधृषाद्वेतिणिजभाव पक्षे॰ क्त ॥ भूलिरस्यास्तिवा । अर्शआद्यच् ॥ अभवद्वा । भुवोगत्यर्थेति ॰ भूतार्थेकर्त्तरिक्त ॥ अर्द्धर्चादि ॥

भूतकृत् । पुं॰ धातरि । द्रुहिणे ।

भूतानि करोति । डुकृञ् । क्विप । तुक् ॥ रुद्रे ॥ भूतानि कृन्तति० छिनत्ति । कृतीछेदने । क्विप् ॥ कृणोतिहिनस्तिवा । कृञ् । क्विप तुक् ॥ विष्णौ ॥ रजोगुण समाश्रित्यविरिञ्चिरूपेण ० भूतानिकरोतिकृतितथा ॥

भूतकेश । पु० तृणविशेषे । गोलोम्याम् । अल्पकेश्याम् ॥ भूतानाकेशइव । भूत केशोस्य वा ॥

भूतकेशी । स्त्री० भूतकेशे ॥ शेफालिकायाम् ॥ नीलसिन्दुवारे ॥

भूतक्रान्ति । स्त्री० भूतावेशे ॥

भूतगण: । पु० पृथिव्यादिपञ्चके ॥ भूतानागण ॥

भूतगन्धा । स्त्री० मुरानामनिगन्धद्रव्ये ॥

भूतग्राम । पु० देहेन्द्रियसङ्घातात्मकारे णपरिणते पृथिव्यादिभूतसमुदाये ॥ सच० जरायुजाण्डजस्वेदजोद्भिज्जभेदाच्चतुर्विधोभवति । भूतानांपृथिव्यादीनाग्राम ॥

भूतघ्न । पु० भूर्जवृक्षे ॥ उष्ट्रे ॥ लशुने । त्रि० भूतनाशके ॥

भूतघ्नी । स्त्री० तुलस्याम् ॥ मुण्डितिकाया ॥

भूतचतुर्दशी । स्त्री० कार्त्तिककृष्णचतुर्दश्याम् । यमचतुर्दश्याम ॥

भूतजटा । स्त्री० जटामांस्याम् ॥ गन्धमांस्याम् ॥

भूतत्वम् । न० वर्त्तमानध्वंसप्रतियोगिसमयवृत्तित्वे ॥ बहिरिन्द्रियग्राह्यायोग्यविशेषगुणवत्त्वे ॥ पृथिव्यादयस्तुजातिविशेषा ॥

भूतदर्शनम् । न० परमार्थदर्शने ॥

भूतद्रावी । पुं० भूताङ्कुशवृक्षे ॥ रक्तकरवीरे ॥

भूतद्रुम । पुं० श्लेष्मातकवृक्षे ॥

भूतध्रुक् । पु० भूतानामपकारके ॥ भूतानिद्रुह्यति । द्रुह० । सत्सूद्विषेतिक्विप् ॥ भूतध्रुक्कोलभेतशम् ॥

भूतधात्री । स्त्री० भूमौ ॥ भूतानाधात्री ।

भूतनाथ । पु० शिवे ॥ भूतानांनाथ ॥ भूतैर्जन्तुभिर्याच्यते० तानुपतापयति० तेभ्यआशास्ते० तेषामभीष्टमितिनाभूतनाथ ॥

भूतनायिका । स्त्री० दुर्गायाम् ॥

भूतनाशन । पु० श्वेतसर्षपे ॥ सर्षपे । भल्लातके ॥ न० रुद्राक्षे ॥ भूतान्नाशयति । णशअदर्शने ल्युट् ॥

भूतपति । पुं० महादेवे ॥ भूतानापति ॥

भूतपत्री। स्त्री॰ तुलस्याम् ॥
भूतपुष्प। पु॰ श्योनाकवृक्षे ॥
भूतपूर्णिमा। स्त्री॰ आश्विनपूर्णिमायाम्। शारद्याम्। कोजागरायाम् ॥
भूतपूर्व। त्रि॰ अतिक्रान्ते ॥ पूर्वं भूत। सुप्सुपेतिसमास। भूतपूर्वेचरडितिनिर्देशात्भूतशब्दस्यपूर्वनिपात ॥
भूतप्रादुर्भाव। पु॰ अतिक्रान्तोत्पत्तौ ॥ भूतस्यप्रादुर्भाव ॥
भूतभावन। पु॰ सर्वभूतपितरि। ईश्वरे। भूतानिभावयतिजनयति॰ प्रापयतिवा। भवतेर्ण्यन्तात् युच् ॥
भूतभृत्। पु॰ विष्णौ ॥ भूतानि बिभर्त्ति धारयति॰ पोषयतिवा॰। डुभृञ्॰। क्विप्। तुक् ॥
भूतभैरव। पुं॰ भैरवविशेषे ॥ शीतज्वरापहचूर्णविशेषे ॥ यथा। एलाजातिफलव्योषत्रिफलाजीरकघन। सविडङ्गसितायुक्तं चूर्णंशीतज्वरापहमिति ॥
भूतमात्रा। स्त्री॰ शब्दादिषु ॥ पृथिव्यादिषुविषयेषु ॥
भूतमारी। स्त्री॰ चीडानामनिगन्धद्रव्ये ॥
भूतयज्ञ। पुं॰ पञ्चमहायज्ञान्तर्गतवलिवैश्वदेवकर्म्मणिभूतेभ्योवलिहरणे ॥
भूतयोनि। पु॰ परमात्मनि ॥ भूतानांयोनि ॥
भूतलिका। स्त्री॰ पृक्कायाम् ॥
भूतवास। पु॰ कलिद्रुमे ॥ भूतानांवास। भूतानांवासोस्मिन्वा ॥
भूतविक्रिया। स्त्री॰ अपस्माररोगे ॥
भूतवित। पुं॰ लौकायतिके ॥ सच पृथिव्यप्तेजोवायवस्सत्त्वानि॰तानि-चत्वारिभूतानिजगत्कारणानीति कल्पयति ॥
भूतविद्या। स्त्री॰ भूततन्त्रे ॥ यथा। भूतविद्यानाम॰ देवासुरगन्धर्वयक्षरक्ष पितृपिशाचनागग्रहाद्युपसृष्टचेतसा॰ शान्तिकर्मवलिहरणादिग्रहोपशमनार्थमितिसुश्रुत ॥
भूतवृक्ष। पु॰ शाखोटवृक्षे। श्योनाकवृक्षे ॥ कलिवृक्षे ॥
भूतवृक्षक। पु॰ शाखोटे ॥ वहुवारके लसोडा॰ इ॰ भा॰ ॥
भूतवेशी। स्त्री॰ श्वेतशेफालिकायाम्। श्वेतसुरसायाम्। श्वेतन्यवारी॰ इ॰ भा॰ ॥ भूतानिविशन्ति। विशप्रवेशने। कर्मण्यण् ॥
भूतब्रह्मा। पु॰ देवले।
भूतसञ्चार। पु॰ भूतोन्मादरोगे। भूतक्रान्तौ। ग्रहागमे ॥
भूतसञ्चारिणी। स्त्री॰ कृष्णचतुर्दश्याम् ॥

भूतसञ्चारी । पुं० दावानले ॥

भूतसर्ग । पु० भूतसृष्टौ । देवासुरभेदेनभूतानांसृष्टौ ॥ यथा । ब्राह्म प्राजापत्यश्चसौम्यऐन्द्रस्तथैवच । गान्धर्वोयक्षकौवेरोरक्ष. पैशाचमानुषा. ॥ स्थावर पार्थवोमार्ग सार्प शाकुनिकस्तथा । चतुर्दशविधोह्येषभूतसर्ग प्रकीर्तित ॥

भूतसार । पु० श्योनाकप्रभेदे ॥

भूतसृट् । पुं० ब्रह्मणि ॥

भूतहन्त्री । स्त्री० वंध्याकर्कोटक्याम् । नीलदूर्वायाम् ॥

भूतहर । पु० गुग्गुलौ ॥

भूतहारि न० देवदारुणि ॥

भूता । स्त्री० कृष्णचतुर्दश्याम् ॥ यथा । स्कान्दे । ब्रह्माण्डोदरमध्ये तुयानितीर्थानिसन्तिवै । पूजिता निभवन्तीहभूतायापार्थिवेह्यते ॥ अपिच । शिवरात्रिव्रतेभूताकामविद्धाविवर्जयेत् ॥

भूताङ्कुश . । पुं० गौ० दे० स्वनाम्ना प्रसिद्धवृक्षे । चवके । शताह्वये ॥ भूताङ्कुशस्तीक्ष्णगन्ध : कटुकषायस्तथोत्कट . । भूतग्रहादिदोषघ्न कफवातनिकृन्तन . ॥

भूतात्मा । पुं० देहेपृथिव्यादिभूतारब्धत्वात्० भूतान्यात्मास्वभावो यस्यस ॥ परमेष्ठिनि । द्रुहिणे हिरण्यगर्भे ॥ भूतानांव्यष्टयुपाधीनामात्मानिवन्तासमष्टयुपाधित्वात्० इति ॥ सदाशिवे ॥ जीवात्मनि ॥ विष्णौ ॥ भूतानांप्राणिनामात्मान्तर्यामी ॥

भूतादि । पु० सर्वजगत्कारणे । तामसाहङ्कारे ॥ भूतानामादि ॥ परमेश्वरे ॥ भूतानांभवनधर्मकाणामुत्पत्तिमतांसर्वेषामादि कारणं कर्तुपादानोभयात्मकमितियावत्॥

भूतादिसर्ग पु० भौतिकसर्ग ॥ भूतादे सर्ग . ॥

भूतारि । न० हिङ्गुनि० ॥

भूतार्त । त्रि० भूताविष्टे ॥ भूतेनआर्तोदीप्त । अर्तेचतृतीयासमास इतिवृद्धि ॥ भूतेनआर्त्तोवा ॥

भूतार्थ । पु० सिद्धार्थे ॥

भूतार्थवाद । पु० प्रमाणान्तरविरोधस्तुतिरहितार्थबोधकेवेदवाक्ये ॥ यथा । इन्द्रोवृत्रायवज्रमुदयच्छदित्यादि ॥

भूताली । स्त्री० भूपाटल्याम् ॥ मुषल्याम् ॥

भूतावास । पु० विभीतकी । वहेडा० हि०भा० ॥ भूतानामावास ॥ काशाख्यश्रये०वासुदेवे ॥ भूतान्याभिमुख्येनवसन्त्यत्र ॥ वसन्तित्वयि भूतानिभूतावासस्ततोभवान् । इतिहरिवंश ॥ काशे ॥

भूताविष्ट . । त्रि० पिशाचग्रस्ते ॥ भ

तात्रान्ते ॥ भूतादिनारोगग्रस्ते ॥
भूताविश । पुं० आवेशे । भूतसञ्चारे ॥
भूति । स्त्री० भस्मनि ॥ सम्पत्तौ ॥ हस्तिशृङ्गारे ॥ मांसपाकविशेषे ॥ उत्पत्तौ ॥ शिवस्याणिमाद्यष्टविधैश्वर्ये । अणिमामहिमाचैवलघिमा गरिमातथा । प्राप्तिः प्राकाम्यमीशित्व वशित्वं चाष्टभूतय ॥ शम्भुधृतभस्मनि ॥ भूतृणे ॥ उत्पत्तौ । जातौ ॥ वृद्धिनामौषधे ॥ रोहिषतृणे ॥ विभूतौ ॥ भवनम् भूतिः ॥ स्त्रियां क्तिन् ॥ भवत्यनया । क्तिच्वा ॥
भूतिक । पु० यवान्यामोषधौ ॥ न० कटफलौषधौ । घनसारे ॥ भूनिम्बे ॥ भूस्तृणे ॥ भवति । भू० । क्तिच्क्तौचसञ्ज्ञायामितिक्तिच् । सञ्ज्ञायांकन् ॥
भूतिकाम । पु० ऐश्वर्याभिलाषिणि ॥
भूतिकील । पुं० भूखाते ॥
भूतिगर्भ । पुं० भवभूतिकवौ ॥
भूतिनिधानम् । न० धनिष्ठानक्षत्रे ॥
भूतिमान् । त्रि० ऐश्वर्ययुक्ते ॥
भूतिकम् न० भूनिम्बे ॥ यवान्याम् । कर्पूरे ॥ भूस्तृणे ॥ तृणे ॥
भूतृणम् । न० गन्धतृणे । गन्धखेडे । रौहिषे ॥ पु० रोहिषे । भूतिके । मालातृणे । सुगन्धरोहिष० इ०

परिमलद्रव्यखनि० इ० अस्य गुणाः सिद्धे ॥ भूतृणं कटुकतिक्तं तीक्ष्णोष्णं रोचनं लघु । विदाहिदीपनं रूक्ष मनेल्यं मुखशोधनम् ॥ बहुघ्नं बहुविट्कञ्चपित्तरक्तप्रदूषणम् । भुवस्तृणम् ॥
भूतेश । पु० शिवे । सर्वभूतनियन्तरि ॥ भूतानाप्रमथादीनांवालस्यापामाणिनांवाईश ॥
भूत्तमम् । न० स्वर्णे ॥ भुविउत्तमम् ॥
भूदरीभवा । स्त्री० आखुकर्ण्याम् ॥
भूदार । पुं० वराहे । सूकरे ॥ भुवन्दारयति । दृ० कर्मण्यण् ॥
भूदेव । पु० ब्राह्मणे । ब्राह्मणोजङ्गमामूर्तिः श्रीविष्णोः परमात्मन । अतएवहिविख्याताभूदेवास्ते महारते । भुवः भुविवादेव ॥
भूधन । पु० राज्ञि ॥ कृषीवले ॥
भूधर । पु० पर्वते । महीध्रे ॥ धरति धृञ् पचाद्यच् । भुवोधर । यन्त्रविशेषे ॥ यथा । जलकच्छपपातालदोलाभूधरवालुका । वकाद्या यन्त्रभेदाः स्युरितिशब्दचन्द्रिका ॥
भूधात्री । स्त्री० भूम्यामलक्याम् ॥ भूधात्रीवातकृत्तिक्ताकषायामधुराहिमा । पिपासाकासपित्तास्रक् कफकण्डूक्षतापहा ॥
भूध्र । पु० पर्वते ॥ भुवन्धरति । धृ-

ज्ञ॰ । मूलविभुजादित्वात्क ।

भूनाग । पु॰ उपरसविशेषे । चितिनागे ॥

भूनिम्ब ।पु॰ क्षुपविशेषे ।किराततिक्ते । चिरायता॰ इ॰ भा॰ ॥ भुवोनिम्बइव ॥

भूनीप । पु॰ भूमिकदम्बे । भूकदम्बे । लघुपुष्पे ॥ भूमिकदम्बा, वा टूष्णाश्वसूष्याद्दोषहराहिमा । कषायतिक्ता । पित्तघ्नावीर्यवृद्धिकरा परा : ॥

भूनेता पुं॰ राज्ञि । भुवोनेतानायक ॥

भूप : । पुं॰ राजनि ॥ भुवपाति । पा रक्षणे । आतोनुपेतिक । १६ सङ्ख्यायाम् ॥

भूपति । पुं॰ नृपे । राज्ञि ॥ भूपुञ्चीयस्यपत्नीसतुभवतिकथ भूपती रामचन्द्र । इतिरामायणेसीतायो वाक्यम् ॥ भुव . पति ॥ ऋषभौषधे ॥

भूपद । पुं॰ वृक्षे ॥भुविपदानियस्य॥

भूपदी । स्त्री॰ मल्लिकायाम् । वेली॰ इ॰ भा॰ ॥भुविपदमस्या.। गौरादि ॥

भूपलाश ।पु॰ वृक्षविशेषे । विशाली इ॰ गौ॰ दे॰ भा॰ ॥ भुव पलाश ॥

भूपाटला । स्त्री॰ भूपाटल्याम् ॥

भूपाटली । स्त्री॰ भूकुम्भ्याम् । रक्तपुष्पिकायाम् ॥ भुव पाटली ॥

भूपाल । पुं॰ राज्ञि ॥ भुवपालयति । पालरक्षणे । कर्मण्यण् ॥ यथा । राज्यं पालयतेनित्यं सत्यधर्मपरायण । निर्जित्यपरसैन्यानिक्षितिधर्मेणपालयेत् ॥

भूपुत्री । स्त्री॰ सीतायाम् ॥ भुव पुत्री ॥

भूपेष्ट । पु॰ राजादनीवृक्षे ॥

भूबदरी । स्त्री॰ लघुबदर्याम् । क्षितिबदर्याम् । झडवेरी॰ इ॰ भा॰ ॥

भूभर्त्ता । पुं॰ नृपे ॥ भुवोभर्त्ता । पत्यर्थभर्तृशब्दस्ययाजकादित्वात्॰ याजकादिभिश्चेतिसमास । तेन॰ अपांस्रष्टा॰ वज्रस्यभर्त्तेतिवत्॰ तृजकाभ्याकर्त्तरीति॰नसमासनिषेध ॥

भूभुक् । पु॰ राज्ञि ॥ भुवभुनक्तिपालयति । भुज॰ । क्विप् ॥

भूभृत् । पु॰ अद्रौ । गोत्रे । गिरौ ॥ महीपतौ ॥ भुवविभर्त्ति । डुभृञ॰ । क्विप् तुक् ॥

भूमा । पु॰ बहुत्वे ॥ भूमामहान्निरतिशयवह्निरितिपर्याय । ॰ इतिभाष्यम् । सकलसासारिकव्यवहाराभाराभावोपलक्षितेतत्त्वे । ब्रह्मणि ॥ यत्तनान्यद्विजानातिनान्यद्यत्रशृणोतिच । नान्यत्पश्यतियस्मिन्वैस भूमाप्रोच्यतेश्रुतौ ॥ योभूमासोऽमृत प्रोक्त सुखनाम्नेविचोरय— वक्षोभाव । पृथ्वादित्वादिमनिच्

। बन्होर्लोमोभूर्ववन्हो ॥ त्रि० बहु
त्वविशिष्टे ॥

भूमय त्रि० मृदात्मके। भूमिमये

भूमयी। स्त्री० सूर्यपत्न्याम् ॥ छाया
याम् ॥

भूमि। स्त्री० स्थानमात्रे वसुन्धरायाम्
। क्षितौ। अचलायाम्। रसाया
म्। स्थिरायाम् ॥ विष्णुर्भूमिस-
म्पूज्योवाच। सर्वाधाराभवशुभेस
र्वे सम्पूजितासुखम्। मुनिभि
र्मनुभिर्देवैः सिद्धैश्चदानवादिभि ॥
अम्बुवाचीत्यागदिनेगृहारम्भेप्रवेश
ने। वापीतडागारम्भे चगृहेचकृषि
कर्मणि। तवपूजाकरिष्यन्तिमद्वरेण
सुरादय। मूढायेनकरिष्यन्तिया
स्यन्तिनरकञ्चते। इति ॥ अम्बुवा
चीत्यागदिनेगृहारम्भेप्रवेशने। तस्मि
न्नदिनेतवपूजाकरिष्यन्तीत्यन्वय ॥
अष्टौ गुणामहाभारते मोक्षधर्मे
यथा। भूमेस्थैर्यंगुरुत्वञ्चकाठिन्य
प्रसवार्थता। गन्धोगुरुत्वं शक्तिश्चस
ङ्घात स्थापनाधृति ॥ इति ॥
अस्यार्थ। स्थैर्यमचाञ्चल्यम् १।
गुरुत्व पतनप्रतियोगीगुण २। का
ठिन्यम् ३। प्रसवार्थता० धान्या-
द्युत्पत्तिस्तदर्थता ४। गन्ध ५।
गुरुत्व पिण्डपुष्टि ६। शक्ति ग
न्धग्रहणसामर्थ्यम् ७ सङ्घात ०
श्लिष्टावयवत्वम् ८। स्थापना० मनु
ष्याद्याश्रयत्वम् ९। धृति प्राण
भौतिकेमनसियोधृत्व श १०। इ
ति ॥ षष्टिवर्षसहस्राणिस्वर्गेतिष्ठति
भूमिद। उच्छेत्ताचानुमन्ताचता
न्तिनरकंवसेत् ॥ योगिनामवस्था
विशेषे ॥ यथा। निरुद्धे चेतसिपुरा
सविकल्पसमाधिना। निर्विकल्प-
समाधिस्तुभवेदत्रत्रिभूमिक ॥ व्यु
त्तिष्ठते ततस्त्वाद्ये द्वितीयेपरबोधित।
अन्ते व्युत्तिष्ठतेनैवसदाभवतितन्म-
य ॥ एवम्प्राग्भूमिसिद्धावप्युत्तरो
त्तरभूमये। विधेयाभगवद्भक्तिस्तांवि
नासानसिध्यति ॥ भवन्त्यस्याभूता
नि। भूसत्तायाम्। भुव किदि
ति० मि ॥

भूमिकदम्ब। पु० कदम्बविशेषे। भू
नीपे। भूमिजे। लघुपत्रे। वृत्तपु
ष्पे। विषघ्ने ॥

भूमिकन्दली। स्त्री० कन्दल्याम्। द्रो
णपर्ण्याम् ॥

भूमिका। स्त्री० रचनायाम् ॥ वेशान्त
रपरिग्रहे। रूपान्तरस्वीकारे यथा।
हहेमचन्द्र। प्राचाणिनाम्येऽधि-
कृतास्तस्मै शास्तुभूमिका। इ
ति ॥ ज्ञानिनामवस्थाविशेषे ॥
यथाहु। ज्ञानभूमि शुभेच्छा-
ख्याप्रथमासमुदाहृता। विचारणा
द्वितीयास्यात् तृतीयातनुमानसा।
सत्त्वापत्तिश्चतुर्थीस्या ततोऽससक्ति

नामिका ॥ पदार्थभावनाषष्ठीसप्तमी तुर्यगाख्या तेति भूमिकानामचित्तस्यावस्थाविशेषः । अत्रभूमिकात्रितयंत्रह्मविद्यासाधनमेव । नतुब्रह्मविद्याकोटावन्तर्भाव • भेदसत्यत्वबुद्धेरनुवृत्तत्वात् । यश्चतुर्थभूमिकांप्राप्तः सब्रह्मविदित्युच्यते । पञ्चमभूमिर्निर्विकल्पातदातस्यां स्वयमेवव्युत्तिष्ठति । सोयब्रह्मविद्वर षष्ठभूमौपार्श्वस्थबोधितो व्युत्तिष्ठति । सोयब्रह्मविद्वरीयान् । तदेतद्भूमिद्वयसुषुप्तिरितिचाभिधीयते ॥ असम्प्रज्ञातप्रतिपादकानि योगशास्त्राणिसप्तभूमिकाप्राप्तं योगिन्यं वपथ्यं वदन्ति । सोयमीदृशो योगोव्युत्थानरहितोनिर्विकल्पकसमाधिस्थ परमहंस सप्तमभूमौब्रह्मविद्वरिष्ठइतिचोच्यते ॥ इति ॥ भूमिकापञ्चकमप्याहु । यथा । क्षिप्त मूढंविक्षिप्तमेकाग्र निरुद्धमिति ॥ तत्र । आसुरसम्पल्लोकशास्त्रदेहवासनानुवर्त्तमानचित्त क्षिप्तभूमिकानिद्रातन्द्रादिग्रस्त चित्त मूढभूमिका कदाचिद्ध्यानयुक्तचित्त क्षिप्ताद्विशिष्टतयाविक्षिप्तभूमिका । तत्रक्षिप्तमूढयो समाधिस्वशङ्कैवनास्ति । विक्षिप्ते तुसमाधिस्वभक्षगतदितरत्भूमिकाद्वयसमाधि ॥ एकाग्रे मनसिसद्भूतमर्थंप्रद्योतयति । क्लेशान्क्षिणोति । कर्मबन्धनानिश्लथयति । निरोधमभिमुखीकरोति । इतिसम्प्रज्ञातो योग एकाग्रभूमिका । सर्ववृत्तिनिरोधरूपासम्प्रज्ञातसमाधि • निरुद्धभूमिकेति ॥

भूमिकुष्माण्डी । स्त्री॰ लताविशेषे । विदार्याम् ॥

भूमिखर्जूरिका । स्त्री॰ क्षुद्रखर्जूर्याम् ॥ भूमिखर्जूरिकास्वाद्वीदुरारोहाम्लदुष्कदा । अयस्काम्भफलाकाककर्कटौस्वादुमस्तका ॥ पिण्डखर्जूरिका त्वन्यासादेशेपश्चिमेभवेत् ॥

भूमिखर्जूरी । स्त्री॰ भूमिखर्जूरिकायाम् ॥

भूमिगृहम् । न॰ वद्यस्तनागृहे ॥

भूमिचम्पक । पु॰ पुष्पवृक्षविशेषे । ताम्रपुष्पे । सन्धिवर्ध्ये । द्रुघणे भुँइचाँपा॰ इ॰ भा॰ ॥ भूच म्पा॰ इ॰ भा॰ ॥ अस्यमूलव्रणपाककारकम् ॥

भूमिच्छत्रम । न॰ शिलीन्ध्रे ॥

भूमिज । पुं॰ नरकासुरे । अङ्गारके । कुजे । भौमे ॥ भूमिकदम्बे ॥ मनुष्ये ॥ न॰ गौरसुवर्णे ॥ भूमेर्भूमौवाजात । त्रिलो॰ । ड ॥

भूमिजगुग्गुलुः । स्त्री॰ आग्रापुरसम्भवे । दैत्यमेदजे । महिषासुर सम्भवे । आग्रापुरीगूगुल॰ इ॰ भा ॥

तिक्तोसीकटुरुष्णश्च कफवातहरस्तथा। उमाप्रियश्चभूतघ्नोमेध्य सौरभ्यदायक ॥
भूमिजम्बु । स्त्री॰ भूमिजम्बुकायाम्। नादेय्याम्॥ भूमेर्जम्बु ॥
भूमिजम्बुका । स्त्री॰ चुद्रजम्ब्वाम्। नादेय्याम्॥ ह्रस्वत्वात्स्वार्थेकन्॥ यद्वा भूमिजन्माजम्बुका। शाकपार्थिवादि । भूमिजन्मपत्रत्वात्॥
भूमिजम्बू । स्त्री॰ चुद्रजम्ब्वाम्। ह्रस्वफलायाम्। भ्रमरेष्टायाम्। पिकभक्ष्यायाम्। काष्ठजम्ब्वाम्॥
भूमिजा । स्त्री॰ जनकात्मजायाम । सीतादेव्याम्॥ भूमेर्जाता । जनी॰ । ड । टाप्॥
भूमिजीवी । स्त्री॰ विश्वि ॥
भूमिदानम्। न॰ दानोत्तमे॥ यथा। दुग्धुभिसन्तताभूमियवगोधूमशालिनीम्। ददातिवेदविदुषेसनभूयोभिजायते॥ भूमिदानात्परदान नभूतनभविष्यतीति ॥
भूमिदेव । पु॰ ब्राह्मणे। भूदेवे॥ भूमेर्भूमौवादेव ॥
भूमिप । पु॰ राजनि॥
भूमिपक्ष । पु॰ वाताश्वे॥
भूमिपिशाच । पुं॰ तालवृक्षे॥
भूमिपिशाची। स्त्री॰ माधवीलतायाम्॥
भूमिपुत्र । पु॰ आरे। मङ्गले॥ भूमेपुत्र
भूमिमण्ड । पु॰ अष्टपादिकायाम्। मदनमाली॰ द्वापरमाली॰ इ॰ गौ॰ दे॰ भा॰ ॥
भूमिमण्डपभूषणा। स्त्री॰ माधवीलतायाम्। अतिमुक्ते। पुण्ड्रके॥
भूमिमान्। त्रि॰ भूमिविशिष्टे। यवादित्वाद्वत्व न॥
भूमिरक्षक । पु॰ वाताश्व ॥
भूमिलाभ । पु॰ मृत्यौ॥ भूमेर्लाभोयेन॥ भूमिप्राप्तौ॥
भूमिलेपनम्। न॰ गोमये॥ भूमेर्लेपनंयेन॥ भूमेर्लेपे॥
भूमिवर्द्धन । पु॰ न॰ शवे।
भूमिसम्भवा। स्त्री॰ सीतायाम्॥
भूमिसुत । पु॰ मङ्गलग्रहे। नरकासुरे। भूमे सुत ।
भूमिसुता । स्त्री॰ जानक्याम्॥
भूमिस्पृक्। पुं॰ मानवे॥ वैश्ये॥ चौरविशेषे॥ अन्धे॥ खञ्जे॥ भूमिंस्पृशति। स्पृशस्पर्शने। स्पृशोऽनुदकेक्विन्॥
भूमी। स्त्री॰ भूमौ। क्षितौ॥ भवति। भू॰ भुव किदितिमि। कृदिकारादक्तिनइति॰ ङीष्।
भूमीन्द्र । पु॰ नृपे। राजनि॥
भूमिरुह । पु॰ वृक्षे॥ यथा। दीर्घास्तापयुतायथाविरहिणीश्वासास्तथावासरायामिन्यश्चपलायथाकुलवधू

दृष्टि सरोषाप्रिये । छायावाञ्छा तमानवोढवनितावायीवभूमीरुहा निष्पन्दा मुचिरायथामिलितयो र्यूनोर्मिथोदृष्टय ॥

भूमीसह । पु० द्रुमान्तरे । हारद्रा तौ ॥ भूमीसहस्तुशिशिरोरक्तपित्त प्रसादन ॥

भूम्यामलकी । स्त्री० क्षुपविशेषे । बहु पुष्पाम् । अडायाम् । अध्यण्डाया म् । तामलक्याम् । भूँइ्आमला इ० भा० ॥

भूम्यामली । स्त्री० तमालयाम् चा रव्याम् । भूम्यामलक्याम् । भुइँआ मलाइ० गौ० दे० भा० ॥ चरुनेली० इ० भा० ॥

भूम्याहुल्यम् । न० कुष्ठकेतौ । क्षुपे । मार्कण्डीये । महौषधे । भुजित खड० । इ० भा० ॥

भूय । अ० अधिकारे ॥ पुनरर्थे ॥

भूयान् । त्रि० बहुतरे । प्रचुरे ॥ अ- परिमितमहिमनि ॥ अयमनयोर तिशयेनबहु । द्विवचनविभज्योप पदेतरबीयसुनाविति० ईयसुन् । ब होर्लोपोभूचबहो ॥ स्त्री० भूयसी अतिमहत्याम् ॥ ङीप् ॥

भूयिष्ठ । त्रि० प्रचुरे । बहुतमे ॥ अ यमेषामतिशयेनबहु । अतिशायने इष्ठन् । इष्ठस्ययिट्चेति० बहो पर स्य इष्ठस्यलोप ।० यिडागमश्च० बहो स्थाने भूरादेशश्च ॥

भूयुक्ता । स्त्री० भूमिखर्जूर्याम् ॥

भूयोभूय । अ० वारंवारमर्थे ॥ यथा । भू योभूयोभाविनोभूमिपालान्नत्वान त्वायाचतेरामचन्द्र । सामान्योयं धर्मसेतुर्नृपाणां कालेकालेपालनी योभवद्भिरिति ॥

भूर् । अ० रेफान्तमव्ययम् । भूर्लोके ।

भूरि । पु० वासुदेवे । हरे ॥ परमे ष्ठिनि ॥ न० सुवर्णे ॥ त्रि० प्राज्ये । प्रचुरे ॥ भवति० भूयतेवा । भुस त्तायाम्० प्रासीवा । अदिशदिभूशु भिभ्य क्रिन ॥

भूरिगन्धा । स्त्री० पुरानामनिगन्धद्र- व्ये । गन्धाव्यायां ॥

भूरिगम । पु० खरे । गर्दभे ॥

भूरिदावा । पु० बहुदातरि ॥

भूरिपत्र । पु० उलपालतृणे ॥

भूरिपलितदा । स्त्री० पाण्डुरफल्या म् ॥

भूरिपुष्पा । स्त्री० शतपुष्पायाम् ॥

भूरिप्रेमा । पुं० चक्रवाके ॥

भूरिफेना । स्त्री० सप्तलायाम् । च र्मकषौषधौ ॥ भूरय फेनाय- स्या ॥

भूरिबला । स्त्री० अतिबलायाम् ॥ भूरिबलसामर्थ्यं यस्याम् ॥

भूरिभाग । त्रि० महाभाग्ये ॥

भूरिमल्ली । स्त्री० अम्बष्ठायाम् ॥

भूरिमाय । पुं० शृगाले ॥ भूरयो मायायस्य ॥

भूरिरस । पुं० इक्षौ ॥ ॥

भूरिश । अ० बहुशब्दस्यार्थे । बह्वर्था च्छस् कारकादन्यतरस्याम् ॥

भूरिश्रवा । पुं० चन्द्रवंशीयसोमदत्त पुत्रे ॥ त्रि० बहुयशोविशिष्टे । भूरिप्रचुरश्रवोयशोयस्य ॥

भूरुण्डी । स्त्री० श्रीहस्तिन्याम् । हस्तिकर्णपत्रायाम् ॥ शाकविशेषइतिस्वामी । भुवंरुण्डयति० आच्छादयति । रुटिलुटिस्तेयकरणे० इत्यस्य च० माधवीयायाहत्तौ० रुडिलुडी त्यपरे० इतिपाठान्तरमुपन्यस्तम । कर्मण्यण् ॥

भूरुट् । त्रि० भूरुहे ॥ भुविरोहयति । रुहजन्मनिप्रादुर्भावे । क्विप् ॥

भूरुह । पुं० वृक्षे ॥ रोहति । रुह० । इगुपधेतिक । भुविरुह सप्तमीसमास ॥

भूर्ज्ज । पुं० मृदुत्वचि । भूतघ्ने । रक्षापत्रे । भोजनपत्र इतिभाषा भूर्जोभूतग्रहघ्नश्चकर्णरुक्पित्तरक्तजित् । कषायोरावमघ्नश्चमेदोविषहर पर ॥ अर्जनमूर्ज ज र्ज्वलप्राणनयो । घञ् । भू अर्जोऽस्य ॥

भूर्ज्जकण्टक । पुं० सङ्करजात्यन्तरे । ब्राह्मणाद्व्रात्यात्सवर्णायामुत्पन्ने । आवन्त्ये ॥

भूर्ज्जपत्र । पुं०) स्वनामख्याप्रसि-
भूर्ज्जपत्रक । पुं०) द्धे । मृदुत्वचि ॥

भूर्मि । स्त्री० भूमौ । पृथिव्याम । मरुभूमौ ॥ विभक्ति । डुभृञ्० । घृणिपृश्निपार्ष्णिचूर्णिभूर्णीति० विभर्त्तेरुत्व निप्रत्ययश्च ॥

भूर्लोक । पुं० अन्तरीक्षादधोलोके । सप्तद्वीपसमुद्रसन्निवेशविशिष्टे ॥ पृथिव्याम् । मर्त्त्यलोके ॥ अस्यलक्षणं । यथा । पादगम्यञ्चयत्किञ्चित् वस्त्वस्तिपृथिवीमयम् । सभूर्लोक समाख्यातोविस्तारोस्यमयोदित ॥ इ० वि० पु० २ अंशे ५ अध्याय । विस्तारोमयोदितइति । सर्वतो लो कालोकावधि पञ्चविंशतिकोटि प्रमाण ॥ भू सञ्ज्ञकोलोक ॥

भूलग्ना । स्त्री० शङ्खपुष्प्याम् ॥

भूलता । स्त्री० किञ्चुलुके ॥

भूवायु । पुं० आवहाभिधेयपवने । भूमेर्व्वहिर्द्वादशयोजनान्यस्यस्थानमत्र । ब्दुदविद्युदादयश्चरन्तीतिशिरोमणि ॥

भूशय । पुं० नकुलगोधादौ ॥ विष्णौ ॥ लङ्काप्रतिमार्गान्वेषणाकुर्वन् समुद्र प्रतिव्रताचरणायतदुपकण्ठे भूमौशेतेदाशरथिरूपेणेतिभूशय । अधिकरणेशेतेरित्यच्प्रत्यय ॥ तथाचरामायणम् । तत , सागरवेलायादर्भानास्तीर्यराघव , । अञ्ज-

लिप्राङ्मुख कृत्वाप्रतिशिष्यं मही
दृधेरिति ॥

भूशेलु । पु॰ भूकर्बुदारे ॥

भूषणम् । न॰ अलङ्कारे ॥ तद्वारणफलयथा
भूषणभूषयेदङ्ग यथाभोग्यविधान-
त । शुचिसौभाग्यसन्तोषदायक
काञ्चनस्मृतम् ॥ ग्रहदृष्टिहरपुष्टि
करदु स्वप्रणाशनम् । पापदौर्भा
ग्यशमनरत्नाभरणधारणम् ॥ माणि
क्य तरणे सुजात्यममलंमुक्ताफलं
शीतगोर्माहेयस्यचविद्रुमौनिगद्रि-
त ॰ सौम्यस्यगारुत्मतम । देवेज्य
स्यचपुष्परागमसुराचार्यस्यवज्र शने
र्नीलनिर्मलमन्ययोश्चगदितेगोमेद-
वैदूर्य्यके ॥ वास . सगन्धरत्नानां
धारणप्रीतिवर्द्धनम् । रक्षोघ्नमर्घ्यं
मोजश्च सौभाग्यकरमुत्तमम् ॥ भू
ष्यते ऽनेन . भूषअलङ्कारे । ल्युट् ॥ भूषयतिवा । क्रुधमण्डार्थे
भ्यश्चेतिभूषियुच् ॥ यत्तोर्नाभूषणश्चा
नसन्तोषोहिद्विजन्मनाम् । उद्यम
श्च क्षननभूषणंभूतिमिच्छतामिति
पारिभाषिकम् ॥

भूषा । स्त्री॰ अलङ्क्रियायाम् । अलङ्का
रसाध्यशोभायाम् ॥ भूषणम् । गुरो
श्चहलइत्य : ॥

भूषित . । त्रि॰ अलङ्कृते । मण्डिते ॥
, भूष्यतेस्म । भूष॰ । क्त : । क्टट् ॥
भूसावुषिते ॥ भुविउषित ' स्थित

भूषिता । स्त्री॰ अलङ्कारैरलङ्कृतायाम्
। मण्डितायाम् ॥ टाप् ॥

भूष्णु । त्रि॰ भविष्णौ । भवनशील
। भू॰ । ग्लाजिस्थश्चग्स्नु, ॰ चाद्
भुव । क्ङितिचेत्यनगकारप्रश्लेषा
द्गुणाभाव ॥

भूसुत । पु॰ भौमे । मङ्गलग्रहे ॥ न
रकासुरे ॥

भूसुता । स्त्री॰ सीतायाम् । जानक्या
म् ॥

भूसुर । पु॰ ब्राह्मणे ॥

भूस्तृणम् । न॰ भूतृणे ॥ अस्यपर्या
यागुणाश्चयथा । गुह्यबीजश्चभूती
कसुगन्ध गोमयप्रियम् । भूस्तृणन्तु
भवेच्छत्रामालातृणकमित्यपि ॥ भू
स्तृणकटुकतिक्त तीक्ष्णोष्णरोचन
लघु । विदाहिदीपनंरूक्षमनेल्य मु
खशोधनम् ॥ अहृद्य बहुविट्काम्र
पित्तरक्तप्रदूषणम् ॥ इति ॥ भुव
स्तृणम् । पारस्करादित्वात्सुट् ॥
मालवदेशप्रसिद्धे ॰शाकविशेषे ॥

भूस्पृक् । पुं॰ मर्त्ये । पञ्चजने । मनु
ष्ये ॥ भुवस्पृशति । स्पृश॰ । क्विन् ।

भूस्वर्ग . । पुं॰ सुरपर्वते । सुमेरौ ॥

भूस्वामी । पु॰ भूपतौ ॥ भुवः स्वा-
मी ॥

भृकुंस : । पुं॰ स्त्रीवेशधरनर्त्तके ।
भ्रकुंसे ॥ पटपुटेतिदण्डकोक्तभा
षणार्थकुसिधातोर्भ्रु,रादिरन्त्यान्तात्॰

एरच । भ्रुवाकुसोभाषणमस्य । पृषोदरादि ॥

भ्रकुटि । स्त्री० भ्रुकुट्याम् । क्रोधादिनाभ्रुव कौटिल्ये ॥ कुटकौटिल्ये । इगुपधात्किदिति० इन् । भ्रुवो कुटि । पृषोदरादित्वातऋकार ॥

भ्रकुटी । स्त्री० भ्रुकौटिल्ये । क्रोधादिनाललाटसङ्कोचने ॥ कुट० । इगुपधादिति० इन् । कृदिकारादितिङीष् । पृषोदरादित्वाद् ऋकार ॥

भृगु । पु० ब्रह्मणस्त्वचोजातेमहर्षिविशेषे । महर्षीणाभृगुरहमितिभगवद्वचनाद्भगवद्विभूतौ । मनुपुत्रे ॥ वरुणतनये ॥ अग्नेर्भ्रष्टात्तेसउत्पन्नत्त्वात्भृगु ॥ हरे । शिवे ॥ शुक्राचार्ये ॥ यमदग्नौ ॥ सानौ । निरवलम्बनपर्वतपार्श्वे । यस्मात्पतने ऽवलम्बनक्रियाविशेषोनास्ति । तत्पर्यायौ । प्रपात । अतट । इति ॥ भ्रस्जति० तपसा० भृज्यतेवा । भ्रस्ज पाके । प्रथिम्रदिभ्रस्जासम्प्रसारणसलोपश्चेति० भ्रस्जे कुप्रत्यय ० सम्प्रसारणभ्रस्जे सलोपश्च न्यङ्क्वादित्वात्कुत्वम् ।

भृगुकच्छ । पु० शककारकवंशेजन्मस्थानपत्तनेविशेषे ॥

भृगुतुङ्गम् । न० तीर्थविशेषे ॥

भृगुपति । पु० परशुरामे ॥

भृगुप्रस्रवण । पु० हिमवत पादे ॥

भृगुभवा । स्त्री० भार्ग्याम् ॥

भृगुषट्क । पु० योगविशेषे ॥ लग्नात्षष्ठेभवेच्छुक्रोभृगुषट्क इतीरित

भृगुसुत । पु० शुक्रग्रहे ॥

भृगूणापति । पु० परशुरामे ॥

भृङ्ग । पु० भ्रमरे । मधुव्रते । भृङ्गराजे ॥ धूम्याटे । कलिङ्गपक्षिणि । फिङ्गा० इ० गौ० दे० भा० भृङ्गइवकृष्णत्वात्० भृङ्ग ॥ पिङ्गे ॥ न० गुडत्वचि । त्वक्पत्रे ॥ अभ्रके ॥ विभक्तिं । इभृञ्० । भृञ किन्नुट्चेति०गन् ॥

भृङ्गक । पु० राजवासनपक्षिणि ॥

भृङ्गजम् । न० अगुरुणि ॥

भृङ्गजा । स्त्री० भार्ग्याम् ॥

भृङ्गपर्णिका । स्त्री० सूक्ष्मैलायाम् ॥

भृङ्गप्रिया । स्त्री० वासन्त्याम् । माधवीलतायाम् ॥ भृङ्गाणाप्रियेव ॥

भृङ्गमूलिका । स्त्री० भ्रमरच्छल्याम् लतायाम् ॥

भृङ्गरज । पु० भृङ्गराजे ॥ भृङ्गइव

रजोऽस्य ॥

भृङ्गरजा । पु॰ भृङ्गराजे ॥ भृङ्ग इवरजोस्य ॥

भृङ्गराज । पु॰ मार्कवे । कुन्तल वर्द्धने । केशरञ्जने । भगरा॰ङ॰ भा॰ ॥ भृङ्गराज कटुस्तिक्तो रूक्षोष्णः कफवातनुत् । केश्यस्त्वच्य ' कृमिश्वासकासशोथामपाण्डुनुत् ॥ दन्त्योरसायनोबल्यः कुष्ठनेत्रशिरोर्त्तिजित् ॥ पक्षिविशेषे ॥ भ्रमरे ॥ वृक्षविशेषे ॥ भृङ्गइवराजते । राजृदीप्तौ । अच् ॥

भृङ्गराजादिचूर्णम् । न॰ भैषज्यरत्नावल्युक्ते चूर्णविशेषे ॥ यथा । सच्छोक्तेन भृङ्गराजस्यचूर्णं तिलार्द्धकं चामलकार्द्धकं च । समर्करं भक्षयते गुडेनानतस्यरोगोनजरा नमृत्यु ॥ अन्ध पञ्चेन्द्रमनरश्चितोमत्तमातङ्गगामीमूकोवाग्मी श्रवण रहितोदूरशब्दानुसारी । नीरुगमर्त्त्योभवतिपलितोनीलजीमूत केशोजोर्णादन्ता . पुनरपिनवा क्षीरगौराभवन्तीति ॥

भृङ्गरिट । पुं॰
भृङ्गरिटि । पु॰
भृङ्गरीट पु॰
} शिवद्वारपाले ॥

भृङ्गरोल ' । पु॰ कीटान्तरे । विषखापरायाम् । वरोलि । दृषघट्पदे । भोमरुल इ॰गौ॰भा॰ ॥

भृङ्गवल्लभ । पु॰ भूमिकदम्बे ॥ धाराकदम्बे ॥

भृङ्गवल्लभा । स्त्री॰ भूमिजम्ब्वाम् ॥

भृङ्गसोदर । पु॰ केशराजे । नागमारे ॥

भृङ्गानन्दा । स्त्री॰ यूथिकायाम् ॥

भृङ्गाभीष्ट । पुं॰ आम्रवृक्षे । रसाले ॥ न॰आम्रमुकुलफलयो ॥

भृङ्गार । पु॰ कनकालुकायाम् । स्वर्णघटितजलपात्रे । भृङ्गराजे । मार्कवे ॥ बिभर्त्तिजलम् । डुभृञ् । आरन् । भृङ्गारभृङ्गाराविति सा धु ॥ न॰लवङ्ग ॥ काञ्चने ।

भृङ्गारि । स्त्री॰ केविकापुष्पे ॥

भृङ्गारिका । स्त्री॰ झिल्लिकायाम् ॥

भृङ्गारी । स्त्री॰ झिल्लिकायाम् । झीँगुरइतिख्याते कीटे । भृङ्गभृङ्गरूपमाराति । राद्दाने । मूलविभुजादित्वात्क । गौरादि । यद्वा । बिभर्त्ति । डुभृञ्॰ । भृङ्गारभृङ्गाराविति॰भृञआरन्॰नुम्॰गुक्॰॰ङ्कस्य ॥ यद्वा ' रूपेणभृङ्गमृच्छति । ऋगतौ । कर्मण्यण् ॥

भृङ्गाह्व । पु॰ जीवके ॥ भृङ्गराजे ॥

भृङ्गाह्वा । स्त्री॰ भ्रमरच्छल्ल्याम् ॥

भृङ्गि . । पुं॰ भृङ्गिणि । शिवद्वाःस्थे ॥

भृङ्गिणी । स्त्री॰ वटीवृक्षे ॥

भृङ्गी । पुं॰ शिवद्वारपालविशेषे । अस्थिविग्रहे । नाडीदेहे ॥ वटद्रौ ॥

भृङ्गी । स्त्री० अतिविषायाम् ॥ गौरादित्वान्ङीष् ॥

भृङ्गीफल । पु० आम्रातकवृक्षे ॥

भृङ्गीश । पु० महादेवे । शिवे ॥

भृङ्गेरिटि । पु० भृङ्गरीटे । भृङ्गिणि ॥

भृङ्गेष्टा । स्त्री० काकजम्ब्वाम् ॥ घृतकुमार्य्याम् ॥ तरुण्याम् ॥ भार्ग्याम् ॥

भृज्जन । पु० न० अम्बरीषे । भर्जनपात्रे ॥ भृज्जन्त्यत्र । भृस्जपाके । भूसूधूभ्रस्जिभ्यश्छन्दसीतिक्युन् ॥

भृत । त्रि० भरिते । धारिते ॥ वेतनेनक्रीते ॥ भृञ् ० । क्त ॥ भरणीये ॥ पुष्टे ॥

भृतक । पु० वेतनग्राहिकर्म्मकर्त्तरि । भृतिभुजि । कर्म्मकरे । वैतनिके ॥ सचत्रिविध । यथा । उत्तमस्त्वायुधीयोऽत्रमध्यमस्तुकृषीवल । अधमोभारवाहीस्यादित्येवत्रिविधो भृत ॥ इति ॥ भ्रियतेस्म । भृञ् भरणे । क्त । स्वार्थेक ॥ यद्वा । भृतिं करोति । तत्करोतीतिणिजन्तात्क्वुन् ॥

भृतकाध्यापक । पु० अपाङ्क्तेये० द्विजाधमे ॥ भृतक सन्योऽध्यापक ॥ अयश्चसर्वानर्थकृत्त्वत्वात् ॥

भृतकाध्यापित । पु० वेतन दत्त्वापाठिते । अपाङ्क्तेयेद्विजाधमे ॥ भृतिवेतनम् । तद्ग्राहीभृतक । भृतक सन्योऽध्यापित सतथा ॥

भृति । स्त्री० भरणे । वेतने ॥ मूल्ये ॥ भ्रियन्तेकर्म्मकराअनया । भृञ् भरणे । कर्म्मणिक्तावितिनिर्देशात्क्तिन् ॥

भृतिभुक् । त्रि० भृतके । वैतनिके ॥ भृतिवेतनभुङ्क्ते । भुज० । क्विप् ॥

भृत्य । पु० किङ्करे । दासे ॥ भृत्यावहुविधाज्ञेयाउत्तमाधममध्यमा । नियोक्तव्यायथार्थेषु त्रिविधेष्वेवकर्म्मसु । भ्रियते । भृञ् ० । भृञोऽसञ्ज्ञायामितिक्यप् ॥ त्रि० पोष्ये । अवश्यभरणीयेवृद्धमातापित्रादौ ॥

भृत्या । स्त्री० भृतौ । वेतने ॥ भ्रियन्तेकर्म्मकराअनया० भरणंवा । भृञ् ० । सञ्ज्ञायासमजनिषदनिपतमनविदषुञ्शीङ्भृञिणइतिक्यप् ॥ चिकित्सायां ॥ यथा । कुमारभृत्याकुशलैरितिरघु ॥

भृमि । पु० वायुविशेषे । घुरन्वायु० इ० भाषा ॥ जलादिभ्रमणे ॥ भ्रमति० भ्राम्यतिवा । भ्रमुअनवस्थाने० भ्रमुचलनेवा । भ्रमे सम्प्रसारणञ्चेति० इन्० कित् ॥ भृमिभ्रमणशीलदरिद्र जनमितिवेदभाष्यम् ॥

भृशम् । न० अतिशये ॥ त्रि० अतिश यान्विते ॥ भृशति । भृशुभ्रंशुअध पतने । अन्तर्भावितण्यर्थादिगुपधे तिक ॥

भृशम् । अ० प्रकर्षार्थे ॥ शोभने ॥

भृषत्कृ । पु० पाषाणे ॥

भृष्टः । त्रि० अलोपसेकेनविनापक्वे ॥ भूना० भुजैना० इ० भा० ॥

भृष्टतण्डुल । पु० भर्जनविशिष्टधा न्यनिकरे । भूनाचावल० इ० भा० सुगन्धिः कफध्नश्च . पित्तलोभृ ष्टतण्डुल ॥

भृष्टमासम् । न० शूल्ये ॥ भृष्टंचत न्मासंच ॥

भृष्टयव । पु० धानासु । बहुरी०इ० भा० ॥ भृष्टश्चासौयवश्च ॥

भृष्टान्नम् । न० भृष्टतण्डुले ॥

भृष्टि । स्त्री० भर्जने ॥ शून्यवाटिका याम् ॥

भेक । पुं० मण्डूके । वर्षाभ्वि । मेघे ॥ त्रि० भीरौ ॥ बिभेति । ञिभी भये । इण्भीकेतिकन् ॥

भेकट । पुं० मत्स्यवि० ॥

भेकभुक् । पुं० कुम्भीनसे । सर्पे ॥ भेकान्भुङ्क्ते । भुज० । क्विप् ॥

भेकरावण । पुं० मेघे ॥ भेकान्राव यति । रुशब्दे । नन्द्यादित्वाल् ल्यु ॥

भेकल । पुं० वनस्पतिविशेषे ॥

भेकलि । पुं० मत्स्यविशेषे । भाकून इ० गौ० दे० भा० प्रसिद्धे ॥ भेक लिर्मधुर शीतोहृष्य श्रेष्मकारो- गुरु ॥

भेकी । स्त्री० भेकस्त्रियाम् । शिश्वाम् । मण्डूपर्ण्याम् । वर्षाभ्व्याम् ॥ क्षुद्र मण्डूके ॥ जातेरस्त्रीतिङीष् ॥ म ण्डूकपर्ण्याम् ॥

भेड । पुं० मेषे । मेंढा० इ० भा० ॥ इतिहे० ॥

भेडी । स्त्री० भेडस्त्रियाम् ॥

भेडीदुग्धम् । न० आविके ॥

भेत्ता । त्रि० भेदकर्त्तरि ॥ भिनत्ति । भिदिर्० । तृच् ॥

भेद । पु० उपजापे । शत्रोरमात्या दीनामुपायेन० परतोविश्लिष्यात्म सात्करणे । ऐकमत्यं नाश्यितानारा जामात्यादीनांभयजननादिनापृथक्क रणे ॥ तद्विशेषायथा । मत्स्यपुरा णे । परस्परन्तुयेदुष्टाः क्रुद्धाभीता वमानिताः । तेषांभेदंप्रयुञ्जीतभेद साध्याहितेमताः ॥ येतुयं नैवदोषे णापरस्मात्तुपराध्यति । तेतुतद्दोष पातेनभेदनीयाभृशंततः ॥ आत्मी यदर्शयेद्दोषंपरस्माद्दर्शयेद्भयम् । एव हिदर्शयेन्नित्यं यथावद्वशमानयेत् ॥ संहताहिविनाभेदंशक्रेणापिसुदुःस हाः । भेदमेवप्रशंसन्तितस्मान्नयवि शारदाः ॥ स्वमुखेनाश्रयेन्नित्यंभेदंपर

मुखेनच । परीक्ष्यसाधुमन्यन्ते भेद परसुखाच्छृतम् ॥ भेद्या स्वकार्यमुद्दिश्यकुशलैर्येहिभेदिता ।।भेदितास्ते विनिर्दिष्टानैवराजार्थवादिभि ।। अन्तःकोपोबहि कोपोयचस्यातामहीक्षिताम् । अन्तःकोपोमहान्स्तत्रनाशकः पृथिवीक्षिताम् ।। सामन्तकोपोबाह्यस्तुकोप प्रोक्तोमनीषिभि । महिषीयुवराजाभ्यातथासेनापतिर्द्विज । अमात्यामन्त्रिणश्चैवराजपुत्रास्तथैवच । अन्तःकोपोविनिर्दिष्टोदारुण पृथिवीक्षिताम् ॥ बाह्यकोपे समुत्पन्ने सुमहत्यपिपार्थिव । शुद्धान्तस्तुमहाभागशीघ्रमेवजयीभवेत् ॥ अपिशक्रसमोराजाअन्तःकोपेननश्यति । अन्तःकोपेसमुत्पन्ने तस्माद्रक्ष्यमहीक्षिताम् ॥ परतःकोपमुत्पाद्यभेदेनविजिगीषुणा । ज्ञातीनाभेदनकार्यं परेषाविजिगीषुणा ॥ रक्ष्यश्चैवप्रयत्ने नज्ञातिभिर्भेदस्तथात्मन । ज्ञातय . परितप्यन्ते सततपरितप्ययम् ॥ तथापितेषाकर्त्तव्य सुग भीरेणचेतसा । ग्रहणदानमानाभ्याभेदस्तेभ्योभयकार ॥ नज्ञातिरनुगृह्णातिनज्ञातिर्दग्धुमिच्छति । ज्ञातिभिर्भेदनीयास्तुरिपवस्तेनपार्थिवै ॥ भिन्नाहिशक्याग्पिव प्रभूता ' स्वल्पेन सैन्येननिहन्तुमाजौ । सुसहतानाहिततस्तुभेद कार्यं रिपूणानयशास्त्रविद्भि . ॥ इतिमात्स्येराजधर्मे १८७ अध्याय ॥ द्वैधे ॥ आपद्यात्मीयानात्मीययोर्भेद ॥ विशेषे ॥ विदारणे ॥ मन्त्रभेदेकार्यहानिरितिविद्दामतम् ॥ वधे ॥ भिद्यमानभावे ॥ भेदनम् । भिदिर् ० घञ् ॥ विरेके ॥

भेदकम् । न० व्यावर्त्तके । विशेषणे ॥ त्रि० नाशके ॥ विदारणे ॥ विरेचकौषधादौ ॥ पृथक्कारके ॥ यथा । भेदयति० अन्यपदार्थपृथक्करोतीतिभेदकम् । नाम्ना शिव गोत्रेणगार्ग्य । अपिच । भेद्यभेदकयो श्लिष्ट स म्बधोन्योन्यमिष्यते । द्विष्ठायदपिसम्बन्धषष्ठ्युत्पत्तिस्तुभेदकादितिभर्तृहरि ॥

भेददर्शी । त्रि० अपराधिनि ॥ यथा । यदस्तितन्नजानातियन्नेहास्तितदीक्षते । द्रूव्येवमपरावीक्ष्यविद्यते भेददर्शिन . ॥ किन्त्वजायतृष्णश्रोत्रविद्यावत्तिर्भान्तिरुपलम्भात् ० सुषुप्तिसमाध्योर्भ्रान्त्यभावेऽनुपलम्भान्मिथ्यात्वत्वभेदस्यसिद्धमित्यनुभवाचभेददर्शिनोमिथ्याज्ञादित्वात्तापराधत्वमितिनिश्चय . ॥

भेदनम् । न० विदारणे ॥ भिदेल्युट्

ट् ॥ हिङ्गुलि ॥ पु० अस्त्रं त
से । सूकरे ।

भेदनिम्न । त्रि० ससारानुगे ॥

भेदित । त्रि० दारिते । भिन्ने ॥
भेद्यते स्म । भिदिर्० । चुरादि
ण्यन्त । क्त ॥

भेदी । पु० अम्लवेतसे ॥ त्रि० भे
दकर्त्तरि । तद्विशिष्टे च ॥

भेदुरम् । न० भिदुरे । कुलिशे ॥

भेद्य । त्रि० व्यावर्त्त्ये । विशेष्ये ॥
अमानितजने ॥ भेत्तुं शक्ये ।
विघट्टनीये । वाच्ये ॥

भेर । पु० पटहे ॥ बिभेत्यस्मात्
। ञिभीभये । ऋज्रेन्द्राग्रेत्यादि
नारन् ॥ भेर्याम् ॥ दुन्दुभौ

भेरि । पु० वाद्यप्रभेदे । करणाल-
० ह्र० भा० ॥ बिभेत्यस्याः रवात् ।
ञिभी० । वङ्क्र्यादयश्चेति० क्रि
न । बाहुलकाद्गुणः ॥

भेरी । स्त्री० बृहड्ढक्कायाम् । आन-
के ॥ वाद्यविशेषे । करणालद्युति-
ख्याते ॥ कृदिकारादिति पक्षे ङीष् ॥
बिभेतेर्ऋज्रेन्द्रेतिरन् ॥ गौरादि-
त्वान्ङीष्० इति तु रामाश्रम ॥
वितस्तित्रयदीर्घाताम्रनिर्मिताचर्म
च्छन्नाचतुर्विंशत्यङ्गुलवदनद्वयाभे
रीति कश्चित् ॥ अन्तस्त्वीकाढक्का
भेरीति स्वामी ॥

भेरुण्ड । पुं खगे ॥ त्रि० भयानके

भेरुण्डा । स्त्री० देवतान्तरे ॥ यक्षिणी
विशेषे ॥

भेल । पु० प्लवे । डोंगा० इ० भा
ष० जलतरणसाधने मुनिविशे
षे । त्रि० भीरौ अज्ञे । बुद्धिविरहि
ते । मूर्खे ॥ बिभेत्यस्मात् । ञिभी
। ऋज्रेन्द्राग्रेत्यादिना रन् । निपात
नाल्लत्वम् चपले ॥

भेलक । पु० न० उडुपे । प्लवे ।
स्वल्पे जलतरणसाधने ॥ स्वार्थे क ॥

भेषजम् । न० औषधे । जार्थौ ॥ भेष
यति । भेषृ भये । ण्यन्त । अच्
भेषरोगं जयति । जि० । अन्येभ्यो
पीति ड ॥ भेषजायति वा । जैत्र
ये । आतोनुपेति क ॥ भिषजइद
म् । तस्येदमित्यण् । अनन्तावस
थेति इभेषजादिति निर्देशादत्वमित्य
न्ये ॥ संसाररोगस्य समाधात्कार
णाभेषज त भेषज निवर्त्तक त्वाभि
ज्ञात्मज्ञानम् ॥

भेषजाङ्गम् । न० अनुपाने ॥

भैक्षम् । न० भिक्षानिकुरम्बे ॥ भि
क्षाणासमूह । भिक्षादिभ्योण् ॥
ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वह
म् । सजातीयगृहेष्वेव सार्ववर्णिक
मेव वा ॥ सर्वं वापि चरेद्ग्रामपूर्वो
क्तानामसम्भवे । अन्त्यवर्जं महाभा
गशास्त्रे ष्वित्य विनिश्चय ॥ भैक्षे
णव्रतिनोवृत्तिरुपवाससमास्मृता ।

भैक्षचर्य्या । स्त्री० भिक्षासमूहाहरणे ॥

भैक्षजीविका । स्त्री० भिक्षयाजीवनो पाये पैशुन्ये ॥ इतित्रिकाण्डशेष ॥

भैक्षभुक् । त्रि० भैक्षाशिनि ॥ भैक्षभुनक्ति । भुज० । कर्त्तरिक्विप् ॥

भैक्षाण । पु० परिव्राजि । प्राणसन्धारणार्थंयथाशास्त्र माधूकरादिभिक्षाकुर्वाणे ॥

भैक्षुकम् । न० भिक्षुकवृन्दे ॥ भिक्षूणासमूह । खण्डिकादित्वादञ् ॥

भैमी । स्त्री० दमयन्त्याम् ॥ भीमतिथौ । माघशुक्लैकादश्याम् ॥ भीमोक्तलप्सिकाप्रभेदे ॥ यथा । श्रेष्ठगोधूमचूर्णंप्रचुरघृतयुतनालिकेरेणसार्द्धं द्राक्षाखर्जूरशुण्ठीत्वचमरिचयुतशर्करापूर्णगर्भम् । पक्वतास्रेक-टाहेटलविटलटलेपावकेमन्ददीप्तौधन्यैर्हेमन्तकालेसुजनपरिवृतैर्भुज्यतेलापनश्री । भीमस्येयम् । अण् । ङीप् ॥

भैरव । पु० शङ्करे । रुद्रे ॥ रागविशेषे ॥ नदविशेषे ॥ भयानकरसे ॥ भैरवपर्वतइतिप्रसिद्धे ॥ भैरवाख्येभैरवीदेवी ॥ सिद्धान्तविशेषे ॥ त्रि० भयानके । भीषणे । भीरोरिदम् । तस्येदमित्यण् ॥

भैरवी । स्त्री० देवताभेदे । चामुण्डायाम् ॥ रागिणीविशेषे । भैरवरागपत्न्याम् ॥

भैषजम् । न० भेषजे ॥ लावकपक्षिणि ॥

भैषज्यम् न० औषधे ॥ भेषजमेव । अनन्तावसथेतिहभेषजाञ्ञ्य

भो । अ० सम्बोधने ।

भोक्तव्य । त्रि० भोजनीये ॥ भोज्ये । यथा० । यत्नेनभगिनीहस्ताद्भोक्तव्य पुष्टिवर्द्धनम् ॥

भोक्ता । पु० पत्यौ ॥ शरीरेन्द्रियमनोभि सयुक्तआत्मनि०संसारिणि । अवस्थात्रयविशिष्टजीवे ॥ भोक्तेत्यात्मानकर्त्तेतिसाङ्ख्या ॥ सुखादिभोगकर्त्ता० यथा कर्त्ताचदेहीभोक्ताचआत्माभोजयितासदा । भोगोविभवभेदश्चनिष्कृतिर्मुक्तिरेवचेति ब्र० वै० पु० वैश्वानरेग्नौ ॥ सर्वेषायज्ञानातपसाश्चकर्त्तृरूपेणदेवतारूपेणचभोगकर्त्तरि ॥ आनन्दमये ॥ बुद्धे सुखदुःखमोहात्मकान्प्रत्ययान्स्वरूपचैतन्येनप्रकाशयतीतिनिर्विकारएवोपलब्धरि ॥ त्रि० पालके ॥ भोगकर्त्तरि । भोजनकर्त्तरिचेतनेदेवदत्तादौ ॥ तस्य प्रकारोयथा । स्नात सुधौतमृदुसुन्दरशुक्लवासास्तत्कालधौतचरण सहपुत्र मित्रै । सम्वीप्रसन्नहृदयोरसपाकवेद्याभोक्ताविशेषचसततहिसर्वाण्यवेद्यो ॥ मृदुतूलमयेस्थलेचारुव

स्वावगुण्ठिते । आसनेप्राङ्मुखो-
भोक्तोपविश्याद्यादङ्मुख ॥ भुङ्
क्ते । भुज० । तच् ।

भोग । पुं० सुखे ॥ सुद्रसुखलवानु-
भवे ॥ सुखसाधनविषय० पञ्चशब्दादि
रस्यादौ ॥ नचानुत्साहवतामननु
तिष्ठतामलसानां भोगप्राप्तिर्लोकेह-
ष्टेतिपूज्यपादा ॥ सुखादिप्रभेदे ।
सुखदुःखानुभवे ॥ धने ॥ अहि
शरीरे ॥ अहेरितिप्रयोगबाहुल्याभि
प्रायम्०भोगशब्दस्यशक्तिसुशरीरमा
त्रे० कृत्याकार. ॥ अहि. फणायाम्
॥ पालने, अभ्यवहारे, योषिदा
दिभृतौ । वेश्यादिवेतने ॥ आदिना
हस्त्यश्वादिकर्मकराणाभृतौभाडा०-
कृ०भा० ॥ विषये । राज्ये ॥ भोज
नम०भुज्यतेवा । भुजपालनाभ्यवहा
रयो । भुजोकौटिल्येवा । भावे
कर्म्मणिवाघञ् ॥ योगिनोजौ०म-
हतीभिक्षाव्यापारे० वर्णाश्रमोचि-
तव्यापारेच ॥ यथा । चित्तस्यभो
गैर्भोगैर्भाग्योभाग्यैकंप्रपूरयेत् । गु
रुशुश्रूषयाभागमव्युत्पन्नस्यसत्तमः ॥
किञ्चिद्व्युत्पत्तियुक्तस्यभागभोगेन
पूरयेत् । गुरुशुश्रूषयाभागौभागाशा
स्त्रार्थचिन्तया । व्युत्पत्तिमनुयात
तस्यपूरयेच्चेतसोन्वहम । द्वौभागौ
शास्त्रवैराग्यैर्ध्यानगुरुपूजयोस्तव
षिष्ट . ॥ भूम्यादौभोगोयथा ।

विपुरुषभोगमाइव्यास । प्रपिता
महेनयद्युक्त तत्पुत्रं चविनाचतम् ।
तौविनायस्यपिचाचतस्यभोगस्त्रि
पौरुष ॥ पितापितामहोयश्चजो
वेच्चप्रपितामह । ययाजीवतो
भोगोविच्छे यस्त्वं कपूरुष ॥ नार
द । तथारूढविवादस्यप्रेतस्यव्यव
हारिण । पुत्रेणसोऽर्थ संशोध्यो
नतभोगोनिवर्त्तयेत् ॥ विभवभे-
दे ॥ म० । कस्याचिदेवीभोक्ताचया
त्वाभोजयितासदा । भोगोविभव
भेदश्चनिष्कृतिर्मुक्तिरेवच ॥

भोगगृहम । न० वासगृहे ॥

भोगदेह । पु० स्वर्गनरकादिभोगार्थ
सूक्ष्मशरीरे ॥ यथा । कृतेसपिण्डी
करणेनर. संवत्सरात्परम् । प्रेतदे
हपरित्यज्यभोगदेहंप्रपद्यते० कृति ॥

भोगपाल : । पुं० अश्वरक्षके ॥ चि०
भोगरक्षके ॥

भोगपिशाचिका । स्त्री० क्षुधायाम् ॥

भोगभूमि । स्त्री० सुखस्थाने ॥ भा
रतवर्षातिरिक्तवर्षे ॥ यथा । तत्रापि
भारतंश्रेष्ठंजम्बुद्वीपेमहामुने । य-
तोहिकर्मभूरेषाततोन्याभोगभूम-
य . ॥

भोगवान् । पुं०अहौ । सर्पे ॥ भोगो
स्यस्य । मतुप् । माव । त्रि०
भोगविशिष्टे ॥

भोगवती । स्त्री० नागपुर्याम् ॥ पा-

तालगगायाम् ॥ ङीप् ॥ वासुकि तीर्थे ॥

भोगसद्म । न० वासगृहे । भोगाय-सद्म ॥

भोगार्हम् । न० धने ॥ भोगायअर्हम् ।

भोगार्ह्यम् । न० धान्ये ॥

भोगावली । स्त्री० नागपुर्याम् । बन्दिनाम स्तुतौ । बन्दिपाठे ॥

भोगावास । पु० वासगृहे ॥ भोगस्थवास ॥

भोगिक । पु० भोगपाले । अश्वरक्षके ॥

भोगिकान्त । पु० कम्बलच्छमणि । वायौ ॥

भोगी । पु० जिह्मगे । भुजङ्गे । सर्पे ॥ भोग फणोवक्रगतिर्वाऽस्यास्ति । अतइनिठनाविती नि ॥ ग्राम-पात्रे । ग्रामण्याम् । ग्रामाधिपतौ ॥ नृपे । राज्ञि ॥ नापिते ॥ वैयावृत्तिकरे ॥ त्रि० सर्वैर्भोगोपकरणै रुपेते ।

भोगिनी । स्त्री० महिषीविहायान्य राजयोषिति ॥ अतिशयितोभोगोस्यया । इन्नन्तान्नान्तलक्षणोङीप् ॥

भोगिवल्लभम् । न० चन्दने ॥

भोगीन्द्र । पुं० )

भोगीश । पु० ) अनन्ते । नागराजे । शेषे ॥ वासुकौ ॥ भोगिनाम् ० इन्द्र ० ईशोवा ॥

भोग्यम् । न० धने ॥ धान्ये ॥ फले ॥ आधिविशेषे । फलभोग्ये ॥ त्रि० भोगार्हे । शब्दादिविषयेषु ॥ भोक्तुमर्हं । भुजेर्ण्यत् ॥

भोग्या । स्त्री० वेश्यायाम् ॥ भोक्तुमर्हायाम् ॥ टाप् ॥

भोज । पु० यादवे ॥ दूरेऽभवन्भोजवल ग्रगच्छतन्दतिमाघ ॥ देशविशेषे ॥ धारानगरीपतौ० कलिप्रसिद्धेनृपविशेषे ॥ देशविशेषे । भोजकटे ॥

भोजकट । पु० रुक्मिनिर्मितपुरे रुक्मिभोजकट नामपुर कृत्वाऽवसत्तदेतिवि० पु० ॥ देशविशेषे ॥

भोजकटीय । त्रि० भोजकटदेशोद्भवे ॥ वृद्धाच्छ. ॥

भोजनम् । न० आहारे । निघसे । जेमने । जीवन० इ० भा० ॥ बहूना पङ्क्तावशने ॥ भुज्यते । भुज० । ल्युट् ॥ भोज्यरूपतयाप्रकृतौ ॥ अग्रभोजनगुणविधानादियथा । भोजनाग्रे सदापथ्य जिह्वाकण्ठविशोधनम् । अग्निसन्दीपन हृद्य लवणार्द्रकभक्षणम् ॥ आयुर्घृतेगुडे रोगोमृत्युर्लौनो विदाहिषु । आरोग्य कटुतिक्तेषु वलमांसिपयस्सु-च ॥ अन्नादष्टगुणा पिष्ट पिष्टादष्टगु

ण पय । पञ्चमोऽष्टगुणं मांसं मांसा
दष्टगुणं घृतम् ॥ घृतादष्टगुणं त
लं मर्द्दनान्नचभक्षणात् । आहार
प्रीणनं सद्योबलकृद्देहधारणम् ।
फलमादौ प्रियाश्नीयाद्भोजनस्थ नरो
त्तम । विनामोचाफलं तद्वर्ज-
नीयाचकर्कटी ॥ मृणालविसशा-
लूकाकन्दं च प्रभृतीन्यपि । पूर्वमे
वहिभोज्यानिनतुभुक्त्वाकदाचन ॥
याममध्ये नभोक्तव्य यामयुग्मं न ल
ङ्घयेत् । याममध्ये रसोत्पत्तिर्यु-
ग्मेऽतीतेबलक्षय ॥ आयुष्यं प्रा
ङ्मुखोभुङ्क्ते यशस्य दक्षिणामु-
खः । श्रिय प्रत्यङ्मुखोभुङ्क्ते ऋ
तं भुङ्क्ते ह्युदङ्मुखः ॥ कुर्व्वी र-
न्नेनभागौद्वौ एकं पानेनपूरयेत् ।
वायोः सञ्चारणार्थं च चतुर्थमवशे
षयेत् ॥ दन्तैश्चावगतं चान्नं शीर्षं
नावहरेज्जलैः । कुर्यादनिर्गतं त
दिमुखस्थानिष्टगन्धताम् ॥ भुक्त्वापा
णितलं घृष्ट्वाचक्षुषोर्यदिदीयते । अ
चिरेणैवतद्वारितिमिराणिव्यपोह-
ति ॥ भुक्त्वाचम्यकरंवामदत्त्वाकु-
क्षौततः पठेत् । भुक्तं मयेन्द्रदत्तं
नवैश्वानरमुखेनच ॥ गरुडस्यचक-
ण्ठेनसमुद्रश्चवह्निना । वाता-
पिर्भक्षितोयेनपीतोयेनमहोदधि
॥ यस्मयाखादितपीततदगस्त्यो-
जरिष्यति । पठित्वैततसुखासीन.



चागतिष्ठ दनाकुन ॥ भुक्-
त्वापादशतगत्वावामपार्श्वेनसं
विशेत् एवञ्चाधोगतचान्नं सुखं
तिष्ठतिजीर्यते ॥ भुक्त्वासविश
तस्तुन्दं वलमुत्तानशायिन । आ
युश्चंक्रमसुप्तस्यमृत्युर्धावतिधावत
॥ अपिच । ततोभोजनवेलाया
कुर्यान्मङ्गलदर्शनम् । तस्यप्रदक्षि
णंनित्यमायुर्धर्मविवर्द्धनम् । लोके
ऽस्मिन्मङ्गलान्यष्टौब्राह्मणोगौर्हुता-
शन । हिरण्यं सर्पिरादित्य आपो
राजातथाष्टम ॥ पादुकारोहणंकु
यात्पूर्वंभोजनत परम् । पादरोग
हरंवृष्यं चक्षुष्यं चायुर्वर्द्धितम् अ
श्नीयात्तन्मनाभुत्वापूर्वन्तुमधुररस
म् । मध्ये लवणौ पश्चात्कटुतिक्तक
षायकान् ॥ विदाहीन्यन्नपानानि
यानिभुङ्क्ते हिमानव । तद्दाह
प्रशान्त्यर्थंभोजनान्ते पय पिबेत्
॥ एवंभुक्त्वासमाचामत्पूर्वोक्त
पूर्वकम् । भोजनदन्तलग्नानिनि
र्हृत्याचमनचरेत् ॥ दन्तलग्नमनि
र्हार्यलेपमन्ये तदन्तवत् । नतत्रबहु
श कुर्यात्यत्न निर्हरणे प्रति वि
स्तरस्त्वनाम ॥ अथातोगोमलभुङ्
क्ते अजपीयूषपोषितम् । यत्त्वात्
कृमिभुङ्क्ते भुक्त्वा विड्विभोजन
म् ॥ अघसकेवलभुङ्क्तेय पचत्या
त्मकारणात् । इन्द्रियप्रीतिजनकं

वृथापाकविवर्जयेदितिजावालि ॥ बालसुवासिनीवृडगर्भिण्यातुरकन्यका । सम्भोज्यातिथिभृत्यांश्चदम्पत्यो शेषभोजनम् इतियाज्ञवल्क्य ॥ नभोजनार्थंस्वेविप्र कुलगोत्रे निवेदयेत् भोजनार्थंहितेश सन्वान्ताशील्युच्यतेबुधैरितिमनु ॥
भोजनपात्रम् । पु० आहारभाजने ॥ हैमदोषहरपात्र चक्षुष्य राजतशुचि । कास्य बुद्धिप्रदरम्य पालाशरुचिकारकम् ॥
भोजपति । पु० कंसासुरे ॥ भोजानाक्षत्रियविशेषाणापति ॥
भोजपुरम् । न० स्वनामप्रसिद्धे देशवि० ॥
भोजयिता । त्रि०भोजनकारयितरि ॥ भोगप्रयोजके । पु० ईश्वरे ॥
भोजविद्या । स्त्री० ऐन्द्रजालिकविद्यायाम् ॥
भोजाधिप । पुं० कंसासुरे ॥ भोजानामधिप ॥
भोज्यम् । न० भोजनीयद्रव्ये । यत्कवलजिह्वयाविलोड्यनिगीर्यते सूपौदनादितस्मिन् । पायसादौ ॥ विषयमात्रे ॥ भुज्यते । भुज० । कर्म्मणि ण्यत् । भोज्य भक्ष्ये इतिण्यतिकवर्गाभावोनिपातनात् ॥ आहारादधिकभोज्य ब्रह्माण्डविभवेपिन ॥ अभ्युदयार्थब्राह्मणभोजने ॥ स्वाराज्यसाम्राज्ययोर्भोगभाक्त्वे ॥ सोमे ॥
भोज्यवित् । पु० सूपकारे ॥ सूपकारोहिभोज्यवस्तुत्वेनजानाति ॥
भोज्यसम्भव । पु० शरीरस्थरसधातौ ॥
भोज्या । स्त्री० भोजराजगोत्रापत्ये क्षत्रिये ॥ क्रौड्यादिभ्यश्च इत्यबभोजक्षत्रिये० इत्युक्तेष्यङादेश । ष्यङश्चाप् ॥
भोट । पु० भोटाङ्गे । भोटान्ते ॥
भोटाङ्ग । पु० स्वनामप्रसिद्धे देशविशे० । भोटान्० इ०भा० प्र०॥
भोटान्त । पु० देशविशेषे ॥ यथा । काश्मीरन्तुसमारभ्यकामरूपात्तुपश्चिमे । भोटान्तदेशोदेवेशिमानसेशात्ररदक्षिणे ॥
भोभो । अ० सम्बोधने ॥
भोलि । पु० वक्रग्रीवे । उष्ट्रे ॥
भो । अ० सम्बोधने विषादे ॥ प्रश्ने । भाति । भा० । बाहुलकात्० डोस् ॥
भौत । पु० देवले ॥ भूतयज्ञे ॥ न० भूतसङ्घे ॥ भूतानासमूह । भिक्षाद्यण् ॥ त्रि० भूतसम्बन्धिनि ॥
भौतिक । पु० स्थाणौ ॥ शिवे ॥ सर्वविशेषे ॥ यथा । अष्टविकल्पोदैवस्तैर्यग्योनिश्चपञ्चधाभवति । मानुष्यश्चैकविध समासतोभौतिक सर्ग ॥ भौतिकास्याग्ससर्गै

सचैतन्योत्कर्षनिष्कर्षतारतम्याभ्या मूर्ध्वाधोमध्यभावेन त्रैविध्यम् । यथा । ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः । मध्ये रजो विशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ न० सुतायाम् ॥ त्रि० भूतसम्बन्धिनि । रूपादिषु ॥ चक्षुरादिषु ॥ शरीरादिषु ॥

भौती । स्त्री० तम्याम् । रात्रौ । रजन्याम् ॥

भौत्य । पु० भूतिमुनेः पुत्रे चतुर्दशमनौ ॥

भौम । पुं० कुजग्रहे । मङ्गले । नरकासुरे ॥ अम्बरे । रक्तपुनर्नवायाम् ॥ न० पानीयविशेषे । भौमम-क्षीनिगदितप्रथमं त्रिविधं बुधैः । जाङ्गलं परमानूपं ततः साधारणं क्रमात् ॥ भौमानामम्भसां प्रायो यत्र संप्रातरिष्यते । शीतत्वं निर्मलत्वं च यतस्तेषां महान्गुणः ॥ त्रि० भूमिभवे । तले ॥ अन्नमयभूमिकार्ये ॥ भूमेरपत्यम् । शिवादित्वादण् ॥ भूमौ भवति शैषिकोऽण् ॥ भूमेरिदम् । तस्येदमित्यण् ॥

भौमवार । पु० पञ्चशरराशौ षष्ठाध्यायम् ॥

भौमन । पुं० विश्वकर्मणि ॥

भौमरत्नम् । न० प्रवाले ।

भौमावाश्या । स्त्री० गोसहस्रीतिविख्यातायाममायाम् यथा । अमावास्यां भवेद्वारो यदि भूमिसुतस्य च । गोसहस्रफलं दद्यात्स्नानमात्रेण जाह्नवीति व्यासः ॥

भौमी । स्त्री० सीतायाम् । जानक्याम् ॥

भौरिक । पु० कनकाध्यक्षे ॥ भूरिणि । सुवर्णे नियुक्तः । तत्र नियुक्त इति ठक् ॥

भ्रंश । पु० अध॰ पतने ॥

भ्रस । पु० भ्रशे ॥

भ्रकुंस । पु० स्त्रीवेशधारिणि नर्तके । भ्रुकुंसे ॥ पटपुटेतिदण्डकोक्तभाषार्थकुसिधातोर्भ्रुरादिर्यस्मात् देरच् । भ्रुवा कुंसो भाषणमस्य । कोऽस्योऽङ्योगालवस्येतिसूत्रे० च भ्रुकुंसादीनामितिवार्त्तिकात्पक्षे अकारो न विधीयत इति व्याख्यानान्तरात्० भ्रकुंस ॥

भ्रुकुटि । स्त्री० क्रोधादिना भ्रुवः कौटिल्ये । भ्रुकुट्याम् ॥ कुटकौटिल्ये । इगुपधात्किदिति० इन् । भ्रुवः कुटिः कोऽस्योऽह्रस्व इत्यत्र० चभ्रकुंसादीनामिति वार्त्तिकेनाकारो विधीयते ॥

भ्रकुटी । स्त्री० भ्रुकुटी । कुटेरिन्नन्त० कृदिकारादितिङीष् ॥ भ्रुवः कुटी ॥ कोऽह्रस्व इतिसूत्रे० चभ्रकुंसादीनामितिवार्त्तिकस्य०-

भक रोनेनविधीयतइत्यर्थादकार ॥
भ्रम । पु० भ्रमु निर्गमे । प्राकारगृह भित्तिषुजलनिर्गमनजाले ॥ कुन्दाख्यशिल्पियन्त्रे ॥ चरख० इ० भा० भ्रमणे। भ्रान्तौ। मिथ्याज्ञाने। मिथ्यामतौ। व्यसनहेतौ ॥ माविनश्यत्वऽयभोगोवर्द्धतामुत्तरोत्तरम्। माविघ्नाप्रतिबध्नातुधन्योस्म्यऽस्मादितिभ्रम ॥ भ्रमणम्। भ्रमुअनवस्थाने। भावेघञ् ॥ नद्यादावधस्थलस्रोर्द्धनिसरणे ॥ भ्रमन्तिजलान्यनेन । हलश्चेतिघञ् । नोदात्तोपदेशस्येति वृद्ध्यभाव ॥ देहेन्द्रियाद्यध्यासे ॥ न्यायमते० भ्रमस्वनामान्तरमप्रमा। भ्रमोद्विविध । विपर्यास ० सशयश्च । आद्योयथा । देहेआत्मबुद्धि ० शङ्खादौपीततामति । सानिश्चयरूपा ॥ द्वितीयोयथा । किंस्विन्नरोवा० स्थाणुर्वेत्यादिबुद्धि । तस्यकारणम्। पित्तदूरत्वमोहभयादिनानाविधदोष । यथा । अप्रमाचप्रमाचेतिज्ञानद्विविधमुच्यते । तच्छून्येतन्मतिर्यास्यादप्रमासाद्विरूपिता ॥ ततप्रपञ्चोविपर्यास सशयोपिप्रकीर्त्तित । आद्योदेहेआत्मबुद्धि शङ्खादौपीततामति ॥ भवेन्निश्चयरूपासासशयोथप्रदर्श्यते । । किंस्विन्नरोवास्थाणुर्वेत्यादिबुद्धिस्तुसशय ॥ तदभावाप्रकारा धीस्तत्प्रकारातुनिश्चय । सस शयोभवेद्याधीरेकत्राभावभावयो ॥ साधारणादिधर्मस्यज्ञानमशय कारणम् । दोषोऽप्रमायाजनक प्रमायास्तुगुणोभवेत् ॥ पित्तदूरत्वादिरूपोदोषोनानाविध स्मृत । इ० भा० प० ॥
भ्रमणम्। न० अनवस्थितौ ॥ गमनविशेषे । पर्यटने ॥
भ्रमणी । स्त्री० कारण्डिकायाम् । जलौकायाम् ॥ अधीशितु क्रीडाव्यायाम् । अधीशितु क्रीडादौ॥
भ्रमत्कुटी । स्त्री० तृणादिच्छत्रे ॥ कावार्याम् । जङ्गमकुट्याम् ॥
भ्रमर । पु० कीटविशेषे । मधुपे मधुव्रते । द्विरेफे । चञ्चरीके ॥ कामुके ॥ वेधनशस्त्रे । वर्मा० इ० भा०॥ भ्रमति । भ्रमु० । अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चिदित्यर ॥
भ्रमरक । पुं० भृङ्गे । मधुलिहि ॥ गिरिके । कालमूषिके ॥ चूर्णकेशे । अलके । ललाटलम्बितचूर्णकुन्तले ॥ जलभ्रमे ॥ भ्रमरइव । इवेप्रतिकृताविितिकन् ॥ भ्राम्यतिवा । भ्रमु० अर्तिकमीत्यर । स्वार्थेकन् ॥
भ्रमरकीट पु० कीटान्तरे । कुम्हारी० इ० भा० ॥
भ्रमरच्छली । स्त्री० लताविशेषे । भृङ्गाह्वायाम् ॥ भृङ्गच्छलीचकटुका

तिक्तादीपनरोचनीति॰ रा॰ नि॰

भ्रमरप्रिय । पु॰ धाराकदम्बे ॥

भ्रमरमारी । स्त्री॰ मालवदेशप्रसिद्धपुष्पवृक्षविशेषे । मासपुष्पिकायाम् ।

भ्रमरविलसितम् । न॰ भ्रमरविलसितायाम् । म्भौन्लौग स्याद्भ्रमरविलसितम् ॥

भ्रमरविलसिता । स्त्री॰ त्रिष्टुप् ११ छन्दः प्रभेदे । यथा । मौगोनौगो भ्रमरविलसिता ॥ य॰ मुग्धे मानपरिहरनचिरात्तारुण्यं सफलयतु हरि । फुल्लावल्लीभ्रमरविलसिताभाविशोभाकलयतिकिमुताम् ॥

भ्रमरा । स्त्री॰ भ्रमरच्छल्याम् ॥

भ्रमरातिथि । पु॰ चम्पके ।

भ्रमरानन्द । पु॰ बकुले । अतिमुक्तके ॥ रक्ताम्लाने ॥

भ्रमरालक । पु॰ भ्रमरके । कुरुले । ललाटस्थितचूर्णकुन्तले ॥

भ्रमरावलिका । स्त्री॰ भ्रमरावल्याम् ॥

भ्रमरावली । स्त्री॰ अतिशर्करीप्रभेदे ॥ भुजसङ्गतशङ्खसुवर्णलसद्वलया॰ कर पुष्पसुगन्धवतीरसनारुचिरा । कन कद्वयनूपुरचारुतराजयतिभ्रमराव-लिकाभुजगाधिपदुर्ललिता ॥ यथा । सखिसम्प्रतिकम्प्रतिमौनमिदंविहितम्॰ मदनेनधनुः सशरंसुकरे निहितम् । नतिशालिनिकिंवनमालिनिमानकथा॰ रतिनायकसायक

ट्ट खमुपतिष्ठथा ॥

भ्रमरिका । स्त्री॰ बालानाक्रीडाविशेषे ॥ येनभुरपिभ्रमतीवभाति । भाषामाञ्जी॰ इ॰ भा॰ ।

भ्रमरी । स्त्री॰ भ्रमरयोषिति । भौरी॰ इ॰ भा॰ ॥ षट्पद्याम् ॥ जतुकायाम् ॥ पुत्रदात्र्याम् ॥ भ्रामर्या स्थाने ॥

भ्रमरेष्ट । पु॰ श्योनाकप्रभेदे ॥

भ्रमरेष्टा । स्त्री॰ भूमिजम्ब्वाम् भार्ग्याम् ॥

भ्रमरोत्सवा । स्त्री॰ माधवीलतायाम् ॥

भ्रमासक्त । पु॰ शस्त्रमार्जके ॥

भ्रमि । स्त्री॰ भ्रमणे ॥ जलनिःसरणमार्गे ॥ यन्त्रविशेषे ॥ भ्रमणम् । भ्रमु॰ । इकक्रष्यादिभ्य ॥ भ्रमे सम्प्रसारणञ्चेतीन् । बाहुलकात्सम्प्रसारणाभाव ॥

भ्रमित । त्रि॰ घूर्णिते । भ्रमणकारिते ॥

भ्रमी । त्रि॰ भ्रमविशिष्टे ॥

भ्रष्ट । त्रि॰ गलिते । च्युते । हसादित . पतिते ॥ यर्थाद्भ्रष्टातीर्थयात्रानुगच्छेत्तस्याद्भ्रष्टोरौरवंवैव्रजेत् । योगभ्रष्ट सत्यधृतिस्तुगच्छेद्राज्याद्भ्रष्टोमृगयावैव्रजेत् ॥

भ्राज । पु॰ कात्यायनप्रणीतश्लोके ॥ भ्राजानामश्लोकाश्छन्दोभाष्यम् ॥

भ्राजकम् । न॰ पित्ते ॥

भ्राजमान । त्रि॰ दीप्यमाने ॥

भ्राजिष्णु । त्रि॰ अलङ्कारादिनादी

भ्रियुक्ते ॥ टीभ्राशालिनि । विभ्राजि ॥ भ्राजते । तच्छील । भ्राजृ दीप्तौ । भुवश्चेतिचकारात्० भ्राजेरपिष्णुच् ॥ स्वप्रकाशचिद्रूपे ॥

भ्राता । पु० सहोदरे ॥ भ्राजते० विभर्ति॑वा । भ्राजृ डुभृञ्० । वा । नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृपितृदुहितृ । इतिसाधुः ॥

भ्रातरौ । पु० २०० सहोक्त्याभ्रातृभगिन्यो । भ्राताचस्वसाच । । भ्रातृपुत्रौस्वसृदुहितृभ्यामित्येकशेष स्वसाचभ्राताचेतिवा ॥

भ्रातृकम् । त्रि० भ्रातुरागतेधनादौ ॥ ऋतठञ् ॥ ङीपि० भ्रातृकी ॥ भ्रातृयोग्ये ॥

भ्रातृज । पु० भ्रातृपुत्रे ॥ भ्रातुर्जात । पञ्चम्यामितिड ॥

भ्रातृजा । स्त्री० भ्रातृपुत्र्याम् । भ्रात्रीयायाम् ॥ टाप् ॥

भ्रातृजाया । स्त्री० भ्रातृपत्न्याम् । प्रजावत्याम् ॥ भ्रातुः जाया ॥

भ्रातृपत्नी । स्त्री० प्रजावत्याम् ॥ भ्रातापतिर्यस्याइतिविग्रहे० नित्य सपत्न्यादिष्विति० भ्रातृपतिशब्दस्य नान्तादेशे० ऋन्नेभ्यइतिङीप् ॥

भ्रातृपुत्र । पु० भ्रातृजे ॥

भ्रातृभगिन्यौ । स्त्री० भ्रात्रौ ॥ भ्राताचभगिनीच ॥

भ्रातृवल । त्रि० भ्रातृमति ॥ भ्राताऽस्यास्ति । अन्येभ्योपिदृश्यतइति० वलच् । सञ्ज्ञामित्यनुवृत्तेर्वलइतिनदीर्घ ॥

भ्रातृव्य । पु० भ्रातृपुत्रे ॥ भ्रातुरपत्यम् । भ्रातुर्व्यच्च ॥ शत्रौ ॥ व्यन्सपत्ने ॥

भ्रातृश्वशुर । पु० पतिज्येष्ठभ्रातरि । जेठ० भाशुर० इ० भा० ॥

भ्रातृस्थानम् । न० सहोदरगृहे ॥ लग्नात्तृतीयभवने ॥ भ्रातुः स्थानम् ॥

भ्रात्रीय । पु० भ्रातृजे ॥ भ्रातुरपत्यम् । भ्रातुर्व्यच्चेति० चाच्छ ॥

भ्रान्त । पु० मत्तद्विपे ॥ राजधुस्तूरे ॥ न० भ्रमणे ॥ त्रि० भ्रमान्विते ॥ भ्रान्तिमापन्ने ॥ अद्वितीयब्रह्मतत्वं नजानन्तियदातदा । भ्रान्ताएवाखिलास्तेषांक्वमुक्तिः क्वेह वासुखम् ॥ भ्रमे॑कर्त्तरिक्तः । अनुनासिकस्यक्विझलो क्ङितिदीर्घः ॥

भ्रान्ति । स्त्री० भ्रमे । मिथ्यामतौ । अतस्मिँस्तज्ज्ञाने ॥ युक्तिहीनप्रकाशत्वाद्भ्रान्तेर्नह्यस्तिलक्षणम् । यदिस्याल्लक्षणंकिञ्चिद्भ्रान्तिरेवनसिध्यति ॥ भ्रान्तिभाजिभवतिक्वविवेक॑ ॥ भ्रमणे । अनवस्थितौ ॥ भ्रमणम् । भ्रमु० । क्तिन् । अनुनासिकस्येतिदीर्घः ॥

भ्रान्तिदर्शनम् । न० असाधनेसाधनत्व

वुद्धौ ॥ साधर्म्यसाधनत्वबुद्धौ ॥ भ्रान्त्यादर्शनम् ॥ शुक्तिकायारजतवद्विपर्ययज्ञाने ॥

भ्रान्तिमान् । त्रि० भ्रान्तिविशिष्टे ॥ भ्रान्तिरस्यास्ति । मतुप् ॥ ङीपि० भ्रान्तिमती ॥ पु० अलङ्कारविशेषे ॥ भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने । तदिति० अन्यद्प्राकरणिकनिर्द्दिश्यते० तेनसमानम्वर्थादिष्टप्राकरणिकमाश्रीयते । तस्यतथाविधस्यदृष्टौसत्यांयदप्राकरणिकतयासंवेदनम्०सभ्रान्तिमान् । नचैवरूपकम्प्रथमातिशयोक्तिर्वा०तत्रवस्तुतोभ्रमस्याभावात् । रूपत्वार्थानुगमनेनसत्त्वाया प्रवृत्तेस्तत्त्वस्यस्पष्टमेव प्रतिपन्नत्वात् । उदाहरणम् । कपालमार्जार पयइतिकरान्लेढिशशिनस्तरुच्छिद्रप्रोतान्विसमितिकरीसङ्कलयति। रतान्ते तल्पस्थान्हरतिवनिताप्यंशुकमितिप्रभामत्तश्चन्द्रोजगदिदमहोविभ्रवयति ॥

भ्रान्तिहर । पु० मन्त्रिणि ॥ त्रि० भ्रमनाशके ॥

भ्रामक । पु० जम्बुके । फेरौ ॥ धूर्त्ते ॥ सूर्य्यावर्त्ते ॥ अश्मप्रभेदे । चुम्बक० इ० भा० प्र० ॥ त्रि० भ्रमजनके ॥

भ्रामर । पु० चुम्बक० इ० प्र० पाषाणे । भ्रामके ॥ न० शुक्लवर्णमधुनि ॥ भ्रमरैः कृतम् । क्षुद्राभ्रमरेत्यादिनाऽञ् ॥ किञ्चित्सूक्ष्मं प्रसिद्धं भ्य षट्पदेभ्योलिभिश्चितम् । निर्म्मलस्फटिकाभयत्तन्मधुभ्रामरस्मृतम् ॥ भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरंगुरु । स्वादुपाकमभिष्यन्दिविशेषात्पिच्छलंहिमम् ॥ रतबन्धान्तरे । यथा । तत्कटिसमधिरूढवल्लभ स्याद्बाद्विपर्यस्थितिस्थित । चक्रवद्भ्रमतिकुञ्चितचिकीर्भ्रामरंनिगदितमनुत्तमम् ॥ नृत्यविशेषे । रासे । मण्डलनृत्ये । हल्लीसे ॥ त्रि० भ्रमरसम्बन्धिनि ॥ अण् ॥

भ्रामरी । त्रि० अपस्मारिणि । इति कुल्लूकभट्टः ॥

भ्रामरी । स्त्री० पार्वत्याम् ॥

भ्रामित । त्रि० आघूर्णिते ॥

भ्राष्ट्र । पु० भर्जनपात्रे । अम्बरीषे । भड्सा० इ० भाड० इ० भा० ॥ भृज्ज्यतेऽत्र । भ्रस्जपाके । भ्रस्जिगमिनमिहनिविश्यशाम्वृत्तिविष्टि० ष्ट्रन्० इत्यस्य ॥

भ्रियमाण । पु० पोष्यमाणे ॥

भ्रुकुस । पु० भ्रकुसे ॥ भ्रूकुसे । स्त्रीवेशधारिणिनर्त्तके । नचनिआ० इ० भा० ॥ भ्रुवाकुंसोभाषणमस्य । इकोह्रस्वोऽङ्यो गालवस्य तिसूत्रे० इयङुवङ्भाविनामव्ययानाञ्चेति

वक्तव्यमितिनिषेधोत्तरपठितेन ०
अभ्रुकुसादीना मितिवक्तव्यमिति
वार्त्तिकेनतन्निषेधाद्ग्रस्व ॥ एवं
भ्रुकुटिशब्देपिबोध्यम् ॥
भ्रुकुटि । स्त्री० भ्रूकुटी । भ्रूकुट्या
म् । क्रोधादिनाललाटसङ्कोचने ॥
कुटेरिगुपधात्किदितीन । भ्रुवो
कुटि । भ्रुकुसवत्प्रक्रिया ॥
भ्रुकुटी । स्त्री० भ्रुकुटी । भ्रुवो
कौटिल्ये ॥ कुटेरिगुपधादितीन् ।
कृदिकारादितिङीष् । भ्रुवो
कुटी ॥ अभ्रुकुसादीनामितिवा
र्त्तिकाद्ग्रस्व ॥
भ्रू । स्त्री० नेत्रोपरिभागस्थरोमराज्या
चिल्लिकायाम् । भौ०इ० भा० ॥
भ्रमु० ।भ्रमेश्चडू । टिलोप ॥यद्वा।
भ्रमति । भ्रमुचलने । भ्रमेश्चडू
॥ यद्वा । भ्राम्यति । क्विप् । जङ्ग
मादीनामिति० गम ' क्वाविच्यश्च
वार्चिकेन०मलोपजङ्चादेश ॥
भ्रूकुस । पु० भ्रूकुसं । भ्रूकुसे
। नचनिआ० इ० भा०।। भाषया
र्थकचुरादिण्यन्तात कुसेरेरच् ।
भ्रुवाकु सोभाषणमस्य ।इकोह्रस्वो
ऽड्योगालवस्येतिसूत्रे०इयड्०वङ्
भाविनाम" धानाह्रस्वेनेतिवार्त्तिका
द्ध्रस्व नषेध ॥
भ्रूकुटि । स्त्री भ्रुकुट्याम् ॥ भ्रुवो
कुटि इयड्वङ्भाविनामिति

निषेधाद्ग्रस्वोनभवति ॥
भ्रूकुटी । स्त्री० भ्रकुट्याम् । भ्रुकुटी
॥ कुटेरिगुपधादितीन् । कृदिका
रादितिङीष् । भ्रुवो कुटी ।
इयङ्वङ्भाविनामितिह्रस्व नि
षेध ॥
भ्रूण । पु० स्त्रीगर्भे ।उदरस्थजन्तौ
॥ डिम्भे । अर्भके ॥ गर्भिण्याम्
॥ श्रोत्रियद्विजे ॥ भ्रूणते । भ्रूण
आशाविशङ्कयो । घञ् ॥
भ्रूणहत्या । स्त्री० गर्भस्थबालकहन
ने॥ यथा ।त्रिविवाह कृत येननकरो
तिचतुर्थकम् । कुलानिपातयेत्स
प्तभ्रूणहत्याव्रतञ्चरे त् ॥
भ्रूणहा । त्रि० गर्भस्थबालकहन्तरि
॥ भ्रूण हतवान् । हन० । ब्रह्म
भ्रूणवृत्रेषुक्विप् ॥ ब्रह्महणि ॥
भ्रूणहा० वरिष्ठब्राह्मणहन्तोच्यत
इतिव्याख्यानात् ॥
भ्रूभङ्ग । पु० भ्रूविक्षेपे । भ्रुवः
कौटिल्ये ॥ भ्रुवोभङ्ग ॥
भ्रेष । पु० अध पाते । यथोचि
तात्० भ्रंशे ॥ भ्रेषणम् । भ्रेषृच
लने । घञ् ॥ चलने ॥
भ्रेषणम् । न० चलने ॥
भ्रौणहत्यम् । न० भ्रूणघ्नोभावे ॥
ष्यञ् । दाण्डिनायनेतिनिपातना
त्तकारादेश ॥

+ —*— +

म । पुं० मकारे ॥ यमे ॥ समये ॥ विषे ॥ मधुसूदने ॥ चन्द्रशेखरे । शम्भौ ॥ ब्रह्मणि ॥ चन्द्रमसि ॥ मन्त्रे ॥ मङ्गले ॥ त्रिगुरौ०ऽऽऽ० ॥

महिष्ठ. । त्रि० महनीये । पूजनीये ॥

मकर । पु० नक्रे । यादःप्रभेदे । मगर० इतिभाषाप्रसिद्धे ० भाषायांमध्येभगवद्विभूतौ ॥ निधिप्रभेदे ॥ दशमराशौ । आलोकेवे ॥ कथाति । कुशिसायाम् । पचाद्यच् । मनुष्याणांकर. । पृषोदरादि ' ॥ यद्वा । मकते । मकिमण्डने । अच् । आगमशास्त्रस्यानित्यत्वान्नुम् । मकराति । राद्दाने । आतोनुपेतिक ' ॥ दर्पणेऽप्युक्त । सारस्वतकोषे ॥ अङ्कदृधुके ॥

मकरकुण्डलम् । न० मकराकृतिकर्णाभरणे ॥

मकरकेतन ' । पु० कामदेवे ॥ मकर' केतन यस्यस ॥

मकरध्वज । पु० कन्दर्पे । अनङ्गे ॥ मकरोनक्रोध्वजोयस्यस ॥ रससिन्दूरविशेषे । चन्द्रोदये ॥ तस्याकारप्रकारोन्यत्ररसेन्द्रचिन्तामणौ ॥

मकरन्द : । पुं० पुष्परसे ॥ मकरमपिद्यति०कामजनकत्वात् । दोअवखण्डने । आतोनुपेतिक. । पृषोदरादि. ॥ यद्वा । मकरमप्यन्दति । अदिबन्धने । कर्मण्यण् । शकन्ध्वादि ॥ कुन्दपुष्पवृक्षे ॥ न० किञ्जल्के ॥

मकरमुखी । स्त्री० प्रणाल्याम् । पयस पदव्याम् ॥

मकरन्दवती । स्त्री० कृष्णवृन्तायाम् । पाटलापुष्पे ॥ मधुविशिष्टायाम् ॥

मकरव्यूह : । पु० मकराकृतिवत्सैन्यविन्यासे ॥ वराहव्यूहविपर्ययेणमकरव्यूहोभवति । तेनाऽग्रे पश्चाज्ञोभयभयेसतिगच्छेत् ॥

मकराकर । पु० समुद्रे ॥ मकराणामाकर ॥

मकरावास. । पु० महाकरञ्जे । षण्ढपन्थे ॥

मकराङ्क. । पुं० समुद्रे ॥ कामदेवे ॥

मकराधिप. । पुं० ग्रनियपे ॥ मकरसदाभिविशेषस्याधिप. ॥

मकरालय । पुं० अब्धौ ॥ मकराणांमकरोपलक्षितानाजलजन्तूनामालय : ॥

मकरी । पुं० समुद्रे ॥ मकरा सन्त्यस्मिन् । अतइनिठनाविति०इनि. ॥

मकुटम् । न० मुकुटे । किरीटे ॥ मकतेऽनेनवा । मकि० । बाहुलकादुट: । आगमशास्त्रस्यानित्यात्वान्नुम् ॥

मकुति । स्त्री० शूद्रशासने ॥

मकुर । पु० मुकुरे । दर्पणे ॥ वकुलद्रुमे ॥ कुलालदण्डे ॥ कोरके ॥ मङ्कते । मकि० । मकुरदर्दुरावितिसाधु ॥

मकुल । पु० न० मुकुले ॥ वकुलद्रुमे ॥

मकुष्ठ । पु० वनमुद्गे । मौठ० हू० प्र० व्रीहिविशेषे ॥ मकुष्ठोवातलोग्राहीकफपित्तहरोलघु । वातिजिन्मधुर पाकेक्रमिकृज्ज्वरनाशन ॥ चि० मथरे ॥

मकुष्ठक । पु० वनमुद्गे । मयुष्ठके । मकुष्ठे ॥ मङ्कते० मङ्क्यतेवा । मकि० । बाहुलकादुनुमभावश्च । तिष्ठति । ष्ठा० । कुन् । मकुश्चासौस्थकश्च । पूर्वपदादितिष ॥

मकूलक । पु० मुकूलके । लघुदन्त्यामोषधौ ॥ मङ्कते । मकि० । खर्जपिञ्जादिभ्यउरोलचावितिo- पिञ्जादित्वादूलच् । स्वार्थेकन् ॥

मकल । पु० शूलरोगविशेषे ॥ यथा । सूतायाहृच्छिरोबस्तिशूलमक्कलसञ्ज्ञितम् । यवक्षारं पिबेत्तत्र मस्तुनोष्णोदकेनवा ।

मक्का । स्त्री० खुराशानाभिधेदेशे ॥

मक्कुलम् । न० शिलाजतुनि ॥

मकेश । पु० } खुराशानदेशस्थे
मकेश्वर । पु० } शिवे ॥

मक्कोल । पु० शिलाधातौ । सितोपले । मक्का० खडियामाटी० गोलू० हू० भा० ॥

मक्ष । पु० स्वदोषाच्छादने ॥

मक्षवीर्य्य । पु० पियालवृक्षे ॥

मक्षिका । स्त्री० कीटविशेषे । गन्धलोलुपायाम् । वमनीयायाम् । मक्खी० हू० भा० ॥ मशति । मशशब्देरोषकृतेच । हनिमशिभ्यासिकन् ॥ मक्षतिवा । मक्षरोषसङ्घाते । कुन्० खलु्वा ॥

मक्षिकामलम् । न० सिक्थके ॥

मक्षीका । स्त्री० मक्षिकायाम् ॥

मख । पु० यज्ञे ॥ मखन्तिदेवाअत्रअनेनवा । मखङ्गतौ । हलश्चेति० घञ् । सञ्ज्ञापूर्वकत्वान्नवृद्धि ॥ यद्वाक्वचिदपवादविषयेप्युत्सर्गोभिनिविशते० इतिघञ्विषयेपिप् सौतिघ । यद्वा । मह्यते । मह० । नपुंसकलोपश्च० तिखोहलोपश्च॥

मखत्राता । पु० श्रीरामचन्द्रे ॥ मखात्राता ॥

मखवह्नि । पु० प्रणीते । यज्ञाग्नौ ॥

मखानल । पु० महावीरे । यज्ञाग्नौ ॥

मखान्नम् । न० पद्मबीजाभे । पानीयफले । मखाना० हू० भा० ॥ मखान्न पद्मबीजस्यगुणैस्तुल्यविनिर्दिशेत् ।

मखासुहृत् । पु० शिवे । मखस्य दक्ष यज्ञस्य असुहृत् शत्रुः ॥

मगण । पु० त्रिगुरौ ऽऽऽ ॥

मगध । पु० वन्दिनि ॥ मागधे । वंशपरम्पराशंसकि ॥ मगध्यति या चते । मगधपरिवेष्टने । कण्ड्वादिर्य गन्त । अच् । यस्यहलइतियलोप ॥ मगधा पु० भूम्नि० कीकटदेशे ॥ यथा । व्यासेश्वरसमारभ्यतन्नकु गडान्तक शिवे । मगधाख्यो भवादेशो यात्रायानहिदुष्यति ॥ दक्षोत्तरक्र मेणैवक्रमात्कीकटमागधौ ॥ मगधा नानिवासोजनपद ० मगधा । निवासोऽस्यजनपदेलुप् । लुपियुक्त वद्भाव ॥

मगधा । स्त्री० पिप्पल्याम् ॥

मगधेश्वर । पु० जरासन्धनृपे । म गधदेशाधिपमात्रे ॥ मगधानादेश विशेषाणामीश्वर ॥

मगधोद्भव । त्रि० मगधदेशजाते ॥

मगधोद्भवा । स्त्री० पिप्पल्याम् ॥ मग धेउद्भवोयस्य ॥

मग्न । त्रि० जलान्त प्रविष्टे । आ प्लुते । स्नाते ॥ मज्जति । टुमस्जो शुद्धौ । क्त । ओदितश्चेति निष्ठा नत्वम् । तस्यासिद्धत्वात् स्कोरिति सलोप । चो कु ॥

मघ । पु० द्वीपान्तरे ॥ देशान्तरे । म ग० नामकान्ने क्षस्थाने ॥ न० पुष्प विशेषे ॥

मघवा । पु० इन्द्रे । शक्रे ॥ मह्यतेपू ज्यते । महपूजायाम् । श्वन्नुक्षन् पूषन्प्लीहन्निन्त्यादिना कनिन् । कवि रितिमनोरमायास्फुटम् ॥ निपा तनात् हस्यघोवुगागमश्च । मघवा नौ मघवान ॥ मघवावहुलमिति मितिआदशपर्यन्तु मघवान्मघ वन्तौ मघवन्त ० इत्यादिवो ध्यम् ॥ जिनानाद्वादशचक्रवर्त्यन्त र्गतचक्रवर्त्तिविशेषे

मघवती । स्त्री० इन्द्राण्याम् ॥

मघा । स्त्री० दशमनक्षत्रे ॥ अत्रजात स्यफलयथा । कठोरचित्त पितृमातृ भक्तस्तीव्रस्वभावस्वनवद्यविद्य चे ज्जन्मभ यस्यमघाऽनघ स्यान्मति सदारातिविनाशदक्षा ॥ वहुवचना न्तोप्यदृश्यते ॥ यथा नवोढवेनवा न्नं चगृहप्रच्छादनैतथा । पितर स्म श्यन्त्यन्नमष्टकासुमघासुचे ति ॥ म घायांपिण्डदानेनज्येष्ठपुत्रोविनश्य तीत्येकवचनान्तोपि ॥ औषधविशे षे ॥

मघाभव । पु० शुक्राचार्ये ॥

मघाभू । पु० शुक्राचार्ये ॥

मघी स्त्री० धान्यविशेषे ।

मघोनी । स्त्री० इन्द्राण्याम् ॥

मङ्कुर । पु० दर्पणे । मुकुरे । मङ्कते मण्डि० । वाहुलकादुरच् ॥

मङ्क्षि । त्रि० शठे ॥ मङ्क्षते । मङ्क्षि० । वङ्क्र्यादित्वात्साधु ॥

मङ्खणम् । न० लङ्घनार्थे ॥ इति हारावली ॥

मङ्क्षु । अ० शीघ्रे ॥ भृशार्थे ॥ मज्जति । टुमस्जोशुद्धौ । बाहुलकात् । मस्जिनशोरितिनुम् । स्कोरितिसलोप ॥

मङ्क्षुणम् । न० जङ्घात्राणे ॥ इति त्रिकाण्डशेष ॥

मङ्ग । पु० नौमस्तके ॥ मङ्गति । मगिसर्पणे । पचाद्यच् ॥

मङ्गल । पु० अङ्गारके । कुजे । हलीयुधे ॥ अस्यवारेजातस्यफलं यथा । उग्र प्रतापीक्षितिपोलमन्योरणप्रियोवक्रवचा सरोष । सत्वान्वित शूरगणप्रणेताकुजस्यवारेप्रभवोमनुष्य ॥ न०कल्याणे ॥ सर्वार्थरक्षणे ॥ अगर्हिताभिप्रेतार्थसिद्धौ ॥ यत्खलु क्रियमाणमेवमनप्रह्लादनं समीहितसाधनञ्चतन्मङ्गलमुच्यतइतिव्याख्याकारा ॥ आशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमित्यालङ्कारिकोक्ते. काव्यादिमुखे क्रियमाणे ॥ यथाहभगवान्भाष्यकार. । मङ्गलादीनिमङ्गलमध्यानिमङ्गलान्तानिशास्त्राणिप्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणिचभवन्तिअध्येतारश्चप्रवक्तारोभवन्ती तिमङ्गलानुष्ठानप्रयोजनानि ॥ प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् । एतद्धिमङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभि ॥ लोकेऽस्मिन्मङ्गलान्यष्टौ-ब्राह्मणोगौर्हुताशन । हिरण्यं सर्पिरादित्यआपोराजातथाष्टम ॥ एतानिसततं पश्येन्नोचेद्दर्व्यादिना यजेत् । प्रदक्षिणन्तुकुर्वीततथाचायुर्नहीयते ॥ अपिच । रोचनं चन्दनं हैममृदङ्गन्दर्पणं मणिम् । गुरुमग्निं तथासूर्यंप्रात पश्येत्सदाबुध ॥ मङ्गति०दुरदृष्टमनेन । मगि सर्पणे। गतौवा । मङ्गेरलच् ॥ अशुभानिनिराचष्टे तनोतिशुभसन्ततिम् । स्मृतिमात्रेणयत्पुंसाब्रह्मतन्मङ्गलं विदुरितिविष्णुपुराणम् ॥ त्रि०कल्याणवति ॥

मङ्गलग्रहम् । न० मेषराशौ ॥ वृश्चिकराशौ ॥ मङ्गलस्यतृतीयगृहस्यग्रहम् ॥

मङ्गलचण्डिका । स्त्री० ) दुर्गायाम् ॥
मङ्गलचण्डी । स्त्री० ) यथा। प्रधानांशस्वरूपांचदेवीमङ्गलचण्डिका । प्रकृतेर्मुखसम्भूतासर्व्वमङ्गलदासदा ॥ सृष्टौमङ्गलरूपाचसंहारेकोपरूपिणी । तेनमङ्गलचण्डीसापण्डितै. परिकीर्त्तितेतिभागवतम् ॥

मङ्गलच्छाय । पुं० प्लक्षवृक्षे ॥

मङ्गलपाठक । पु० स्तुतिपाठके । वन्दिनि ॥

मङ्गलप्रदा । पु० दुर्गायाम् ॥ हरिद्रायामितिकश्चित् ॥ त्रि० मङ्गलदातरि ॥

मङ्गलप्रस्थ । पु० भारतवर्षस्थपर्वतान्तरे ॥

मङ्गलमालिका । स्त्री० सखीभेदे ॥ मङ्गलायामालिका ॥

मङ्गला । स्त्री० उमायाम् । काम्यायन्याम् ॥ गयायांमङ्गलाख्यैतितिदेवीगीता ॥ सितदूर्वायाम् ॥ साध्व्याम् ॥ करञ्जभेदे ॥ हरिद्रायाम् ॥ नीलदूर्वायाम् ॥ ब्रसाहन्मादविशेषे ।

मङ्गलागुरु । न० अगुरुचतुष्टयान्तर्गतागुरुविशेषे ॥ यथा । मङ्गल्यामल्लिकागन्धामङ्गलागुरुवाच्या । मङ्गल्यागुरुशिशिरागन्धाढ्यायोगवाहिका ॥

मङ्गलाचरणम् । न० ग्रन्थाद्यारम्भे मङ्गलकरणे ॥ मङ्गलाचरणशिष्टाचारात्फलदर्शनाच्छ्रुतितश्चावश्यकर्त्तव्यमित्याहुर्व्याख्याकारा ॥

मङ्गलाह्वा । स्त्री० दूर्वायाम् ॥

मङ्गलिकाक्षेरणम् । न० असाहस्यकथायाम् ॥

मङ्गल्य । पु० त्रायमाणायाम् । अश्वत्थे ॥ बिल्वे ॥ मसूरके क्षीरके ॥ नारिकेले ॥ कपित्थे ॥ रीठाकरञ्जे ॥ न० दध्नि ॥ चन्दने ॥ मङ्गलागुरुणि ॥ सिन्दूरे ॥ स्वर्णे ॥ त्रि० प्रियकरे ॥ रुचिरे ॥ साधौ ॥ मङ्गलेसाधु । तत्रसाधुरितियत् ॥

मङ्गल्यक । पु० मसूरे । स्वार्थेकन् ॥

मङ्गल्यकुसुमा । स्त्री० शङ्खपुष्प्याम् ॥ मङ्गल्यानिकुसुमान्यस्या ॥

मङ्गल्यनामधेया । स्त्री० जीवन्त्याम् । शाकश्रेष्ठायाम् ॥

मङ्गल्या । स्त्री० मल्लिगन्धागुरुणि शम्याम् ॥ अधःपुष्प्याम् ॥ मिस्याम् ॥ शुक्लवचायाम् ॥ रोचनायाम् । प्रियङ्ग्वाम् ॥ शङ्खपुष्प्याम् । माषपर्ण्याम् ॥ जीवन्त्याम् ॥ ऋद्धिनामौषधौ ॥ वचायाम् ॥ हरिद्रायाम् ॥ चोरुयाम् ॥ दूर्वायाम् ॥ मङ्गलेसाधु । तत्रसाधुरितियत् ॥ गौर्याम् । शिवायाम् । भवान्याम् ॥ शोभनानिचश्रेष्ठानियादेवीददतेहरे । भक्तानामार्त्तिहरणीमङ्गल्यातेनसास्मृता ॥

मङ्गिनी । स्त्री० नावि । नौकायाम् ॥

मधर्चिका । स्त्री० प्रशस्ते ॥ मशब्दःचर्चति । चर्चअध्ययने । ख्वु

ल् ॥ यथा । प्रशस्तोब्राह्मण० ब्राह्मणमचर्चिकारूढिशब्दत्वात्० प्रशंसावचनैश्चेतिसमास ॥
मच्छ । पु० मत्स्ये ॥
मज्जका । स्त्री० मज्जायाम् ॥ मज्जैवस्वार्थेक ॥
मज्जकृत् । न० चस्थ्नि ॥
मज्जा । पु० वृक्षसारे । वृक्षादेरुत्तमस्थिरभागे ॥ फलमज्जगुणायथा । यस्ययस्यफलस्येहवीर्यंभवतियादृशम । तस्यतस्यैववीर्यंणमज्जानमपिनिर्दिशेत् ॥ अस्थिमध्यगतधातौ । अस्थिसारे ॥ मज्जस्वरूपमाह । अस्थियत्स्वाग्निनापक्व तस्यसारोद्रवोघन । य स्वेदवत् पृथग्भूत समज्जेत्यभिधीयते ॥ स्थानन्तु । स्थूलास्थिषु विशेषेण मज्जात्वभ्यन्तरेस्थित । इति ॥ अस्यगुणायथा । बलशुक्ररसश्लेष्म मेदोमज्जविवर्द्धन । मज्जाविशेषतोऽस्थ्नाञ्चबलकृत्स्नेहनेहित ॥ मज्जत्यस्थिषु । टुमस्जोशुद्धौ । श्वन्नुक्षिन्नितिसाधु ॥ शिरोस्थिमध्येपिण्डितस्नेहे । मस्तिष्के ॥
मज्जनम् । न० स्नाने ॥ मज्जत्यनेन । टुमस्जो० । बहुलमन्यत्रापीति युच् ॥ मज्जायामितिशब्दचन्द्रिका ॥
मज्जसमुद्भवम् । न० बीजे । शुक्रे ।
मज्जसम्भव । पुं० शुक्रे ॥
मज्जा । स्त्री० वृक्षसारे । अस्थिगतधातौ ॥ मज्जते पचाद्यजन्तात् टाप् । मज्जोक्तामज्जयासहेति० द्विरूप ॥
मञ्जाज । पु० भूमिजगुग्गुलौ ॥
मञ्जारस । पु० शुक्रे ॥
मञ्जासारम् । न० जातीफले ॥
मञ्जिका । स्त्री० मज्जकायाम ॥
मञ्च । पु० खटवायाम ॥ कर्णाटे । माचा०माजा० इ०भो० ॥ उच्चमण्डपविशेषे ॥ दोलायमान गोविन्द मञ्चस्थं मधुसूदनम् । रथस्थ वामन दृष्ट्वापुनर्जन्मनविद्यते इति पुराणम ॥ मञ्चते । मचिधारणोच्छायपूजनेषु । पचाद्यच् ॥
मञ्चक । पु० इन्द्रकोषे । उच्चमण्डपे ॥ खट्वायाम् ॥
मञ्चकाश्रय । पु० मत्कुणे ॥
मञ्चमण्डप । पु० शस्यरक्षार्थकुटीरे । कुटङ्गे ॥
मञ्चिका । स्त्री० आसन्द्याम् ॥
मञ्जर । पु० वल्लरी ॥ मुक्तायाम् ॥ तिलकद्रुमे ॥ वल्याम् । लतायाम् ॥
मञ्जरि । स्त्री० वल्लर्याम् ॥ मञ्जुत्वमृच्छति । ऋगतौ । अच् । शकन्ध्वादि ॥
मञ्जरी । स्त्री० तिलकद्रुमे ॥ स्थूलमुक्तायाम् ॥ वल्लरी ॥ तुलस्यामृडी ॥

ष् ॥

मञ्जरीनम्र । पु० वेतसवृक्षे ॥

मञ्जा । स्त्री० मञ्जर्याम् ॥

मञ्जि । पुं० मञ्जर्याम् ॥

मञ्जिका । स्त्री० वारसुन्दर्याम् । वेश्यायाम् ॥

मञ्जिफला । स्त्री० कदल्याम् ॥

मञ्जिष्ठा । स्त्री० विकसायाम् । जिङ्ग्याम् । समङ्गायाम् । मजीठ० इ० भा० प्र० औषधी ॥ मञ्जिष्ठा मधुरातिक्ताकषायस्वर्यवर्णकृत् । गुरुरुष्णाविषश्लेष्मशोथयोन्यक्षिकर्णरुक् । रक्तातीसारकुष्ठास्रविसर्पव्रणमेहनुत् ॥ मञ्जौशोभनेवर्णे तिष्ठति । ष्ठा० । सुपिस्थइतिक । अम्बाम्बेतिषत्वम् ॥ यद्वा । अतिशयेनतमञ्जिष्ठमी ॥

मञ्जी । स्त्री० मञ्जर्याम् ॥

मञ्जीर । पुं० मन्थानदण्डरज्जुबन्धनार्थस्तम्भे । कुटरे ॥ पुं० न० नूपुरे ॥ मञ्जति । मजिधृनौ० सौत्र । बाहुलकादीरन् ॥ शुर्वस्वरे०ऽ, ॥

मञ्जरीघ । स्त्री० वर्णवृत्तान्तरे ॥

मञ्जु: । त्रि० मनोज्ञे ॥ मञ्ज्यते । मजि० । बाहुलकादु, ॥

मञ्जुकेशी । पुं० श्रीकृष्णे ॥ त्रि० मनोज्ञचिकुरविशिष्टे ॥

मञ्जुकेशी । स्त्री० स्वर्गवेश्याभेदे ॥

मञ्जुगमना । स्त्री० हंस्याम् ॥ त्रि० सुन्दरगामिनि ॥

मञ्जुघोष । पु० शिवे ॥ उपास्यदेवताविशेषे ॥ पूर्वजिने ॥ बुद्धानां देवताभेदे ॥ मञ्जु घोष शब्दोऽस्य ॥ शोभनशब्दे ॥ त्रि० शोभनशब्दवति ॥

मञ्जुपाठक । पु० शुके । कीरे ॥ त्रि० सुन्दरपाठकर्त्तरि ॥

मञ्जुप्राण । पु० ब्रह्मणि ॥

मञ्जुभद्र । पु० पूर्वजिनविशेषे ॥ कामदर्पणे । मञ्जुघोषे ॥ शिवे ॥

मञ्जुभाषिणी । स्त्री० अतिजगतीछन्द प्रभेदे ॥ यथा सजसाजगौ अयदिमञ्जुभाषिणी ॥ अमृतोर्मि शीतलकरेणलालयस्तनुकान्तिरोचितविलोचनोहरे । नियतकलानिधिरसीतिवक्षवीमुदमच्युते व्यधितमञ्जुभाषिणी ॥ सुनन्दिनीतिशम्भौ॥

मञ्जुमणि । पु० पुष्परागे । पोखराज० इ० भा० ॥

मञ्जुल । पुं० जलरङ्कौ ॥ न० जलाभ्यसे । शैवाले ॥ निकुञ्जे ॥ त्रि० मञ्जुनी ॥ मञ्जु० मञ्जुत्वंलाति । ला० । क ॥ मञ्जु मञ्जुत्वमस्त्यस्मिन्वा । सिध्मादित्वाल्लच् ।

मञ्जुवक्त्र । त्रि० सौम्याननयुक्त ॥

मञ्जुवाक् । त्रि० मधुरवचने ॥

मञ्जुश्री । पु० मञ्जुघोषे ॥ म-

अजुर्मनोज्ञाश्रीर्यस्य ॥

मञ्जुषा । स्त्री० मञ्जूषायाम् । पिटके ।

मञ्जूषा । स्त्री० पिटके । दार्वादिनिर्मितपेटके ॥ पाषाणे । प्रस्तरे ॥ मञ्जिष्ठायाम् ॥ हिरण्यादिनिचेपाधारे ॥ मञ्जन्त्यत्रवा । टुमस्जोमस्जेनुम्चेत्यूषन् ॥

मटची । स्त्री० मर्दनहेतुभूतेपाषाणवृष्ट्यादौ ॥ अशन्याम् ॥

मटस्फटि । पु० दर्पारम्भे ॥

मट्टकम् । न० गृहमस्तके ॥

मठ । पु० छात्रादिनिलये ॥ मठन्त्यत्र । मठमदनिवासयो हलश्चेतिघञ् । सञ्ज्ञापूर्वकत्वान्नवृद्धि ॥ यद्वा । मठतिनिवासयति । पचाद्यच् ॥ माठ० इतिख्यातेपक्वान्नविशेषे ॥ यथा । समितामर्दयेदाज्यैर्जलेनापिचसन्नयेत् । तस्यास्तुवटकङ्कृत्वापचेत्सर्पिषिनीरसम् ॥ एलालवङ्गकर्पूरमरिचाद्यैरलङ्कृते । मज्जयित्वासितापाकेतलस्थसमुद्धरेत् ॥ अयप्रकार ससिद्धोमठइत्यभिधीयते ॥ मठस्तुबृंहणोवृष्योबल्यसुमधुरोगुरु । पित्तानिलहरोरुच्योदीप्ताग्नीनासुपूजित । समिताशर्करासर्पिर्निर्मिताघपरेप्रिये । प्रकाराअमुनातुस्यात्पिष्टैतद्वृत्यास्मृता ।

मठर । पु० मुनिविशेषे ॥ शौरडे ॥ मन्यते । मनज्ञाने । मनुतेवा । मनुअवबोधनेवा । वचिमनिभ्याकिच्चेतिअरष्ठोन्तादेशश्च ॥

मडक । पु० मडुवा० इ०प्र० शस्ये

मड्डु । पु० वाद्यप्रभेदे मज्जति० मज्जन्तिशब्दाअत्रवा । टुमस्जोशुद्धौ ॥ भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्यउ । पृषोदरादि ॥ डमरुरेवमड्डुमड्डुइत्युच्यते ॥ चुचुक० इ० गौडेषुयस्यप्रसिद्धि ॥

मड्डुक । पु० मड्डुवाद्ये ॥ स्वार्थेक ॥ मर्दले ॥

मणि । पु० स्त्री० अश्मजातौ । रत्ने ॥ मुक्तादौ ॥ अजागलस्तने ॥ लिङ्गाग्रे ॥ अलिञ्जरे ॥ योन्यग्रभागे ॥ स्तने । मणिवर्ध्ने ॥ मण्यते । मणशब्दे । सर्वधातुभ्यइन् ॥

मणिकम् । न० अलिञ्जरे , माट० इ० भा० प्र० ॥ मणति । मण० । इन् । स्वार्थेयावादित्वात्कन् । सञ्ज्ञायाकोवा ॥

मणिकार । पु० मणिकारे ॥

मणिकर्णिका । स्त्री० काश्यन्तर्गतप्रधानतीर्थे ॥ इश्लोविश्वेश्वरोदेवो स्नातव्यामणिकर्णिका ॥

मणिकर्णिकेश्वर । पु० काश्यन्तर्गतशिवलिङ्गविशेषे ॥ मणिकर्णिकाया ० मणिकर्णिकायावाईश्वर

मणिकाननम् । न० कण्ठे ॥ रत्नवने

मणिकार । पु० वैकटिके । मणिघटितालङ्कारादिकर्त्तरि । जौहरी इ० भा० । मणिकार० इतिच ॥ मणि करोति । कृञ् । कर्मण्यण् ॥ न्यायचिन्तामणिकर्त्तरि ॥

मणिकूट । पु० पर्वतविशेषे ॥ यथा । मणिकूटस्याथगिरेर्गन्धमादनकस्य च । मध्येसवतिलोहित्योब्रह्मपुत्र समाश्रित" ॥ ब्रह्मद्वीपस्थेगिरिविशेषे ॥

मणिखनि । स्त्री० मण्यारकरे ॥ मणे खनि ॥

मणिगुणनिकर । पुं० अतिशर्करी १५ प्रभेदे ॥ यथा । वसुमुनियतिरिति० मणिगुणनिकर. । यथा । नरकरिपुरवतु० निखिलसुरगति० रमितमहिमभरसहजनिवसति ' अनिबधिमणिगुणनिकरपरिचितिसरिदधिपतिरिवधृततनुविभव ॥

मणिग्रीव । पु० कुबेरात्मजे ॥ मणिरिवग्रीवायस्य ॥ त्रि० रत्नकन्धरे ॥

मणिच्छिद्रा । स्त्री० मेदायाम् ॥ ऋषभाख्यौषधौ ॥

मणितम् । न० रतिकूजिते । मैथुनकालीनवाक्ये ॥ रतिकालेस्त्रीणाक ठकूजितविशेषे ॥ मणनम् । मण० । भावेक्त . ॥

मणितारक । पुं० सारसपक्षिणि ॥

मणिद्वीप । पु० क्षीराब्धिमध्येपद्मरागादिमणिमयान्तरीपे । त्रिपुरसुन्दर्यावासस्थाने ॥ भुवनेश्वर्याश्चस्थानम्० देवीगीता । ब्रह्मलोकादूर्ध्वभागेसर्वलोकोस्तियः श्रुत । मणिद्वीप सएवास्तियत्रदेवीविराजते ॥ सर्वस्मादधिकोयस्मात्सर्वलोकस्तत स्मृत । पुरापराम्बयैवाय कल्पितोमनसेच्छया । सर्वादौनिजवासार्थं प्रकृत्यामूलभूतया । कैलासादधिकोलोकोवैकुण्ठादधिकोत्तम ॥ गोलोकादपिसर्वस्मात् सर्वलोकोधिक स्मृत ' । नैतत्समस्त्रिलोक्यान्तुसुन्दर विद्यतेक्वचिदित्यादिनादेवीभागवतेद्वादशस्कन्धे १० अध्यायेऽस्यवर्णन द्रष्टव्य ॥

मणिनाग । पु० तीर्थविशेषे ॥

मणिपर्वत । पु० गिरिविशेषे ॥

मणिपुष्पक । पुं० सहदेवाख्यपाण्डवस्य शङ्खे ॥

मणिपूरम् । न० षट्चक्रान्तर्गतनाभिमध्यस्थदशदलेतृतीयेचक्रे ॥ मणिवद्भिन्न तत्पद्म मणिपूर तथोच्यते ॥ देशविशेषे ॥

मणिबन्ध . । पुं० प्रकोष्ठपाण्यो . सन्धिस्थाने । करग्रन्थौ । कलाइ० इ० भा० । हस्तमूले ॥ मणिर्बध्यतेऽत्र । बन्धर्बन्धने । हलश्चेतिघञ् न० ॥ वृहती ६ छन्द . प्रभेदे ॥ यथा ।

आदितुरीय पञ्चमकषष्टमथान्त्य स्या दृग् यदि तु । इन्द्रियवेदैश्च विरतिस्तन्मणिबन्ध प्राक्फणी ॥ मणिमध्य मितिनामान्तरम् ॥

मणिबन्धनम् । न० हस्तमूले ॥

मणिभद्र । पु० जिनानाप्रूर्वं यक्षवि शेषे । जम्भले ॥ कुवेरसेनापती ॥

मणिभूमि । स्त्री० कुट्टिमे । रत्नस्य ख नौ ॥

मणिमञ्जीरम् । न० रत्नमयनूपुरे ॥

मणिमण्डप । पु० रत्नमयगृहे ॥

मणिमध्यम् । न० वृहती ९ छन्दोभेदे । मणिवन्ध ॥ लक्षणयथा । स्यान्मणिमध्यं चेद्भमसा । यथा । कालियभोगाभोगगतस्तन्मणिमध्यस्फोतरुचा । चित्रपदाभोनन्दसुतस्ताण्डवनृत्तं स्मेरमुख ' ॥

मणिमन्थम् । न० सैन्धवलवणे ॥ पर्वतविशेषे ॥

मणिमान् । त्रि० मणिविशिष्टे । रत्नभूषिते ॥ पु० तीर्थं स्वे नवर्णितेपर्वतविशेषे ॥

मणिमन्दिरम् । न० बहुमूल्यप्रस्तरयुक्तगृहे ॥

मणिमाला । स्त्री० हारे ॥ स्त्रीणाद्न्तक्षतान्तरे ॥ लक्ष्म्याम् ॥ जगती-१२ छन्दोभेदे । यथा । त्यौत्यौमणिमालाछिन्नागुहवक्त्रैः ' ॥ यथा । प्रह्वामरमौलौरत्नोपलक्ऌप्ते ०जातप्रतिबिम्बाशोणाममणिमाला । गोविन्दपदाब्जे राजीनखराणामास्तामममचित्ते ध्वान्तं शमयन्ती ॥ मणीनां०मा ला०मालेववा ॥

मणिरागम् न० हिङ्गुले ॥

मणिव । पु० नागविशेषे ॥ मणि रस्यास्ति । अन्येभ्योपिदृश्यतइति व ॥

मणिवर । पु० हीरके ॥

मणिबीज । पु० दाडिमवृक्षे ॥

मणिसर । पु० मुक्ताहारे॥

मणी । स्त्री० मणौ ॥

मणीचकम् । न० इन्दुकान्ते । चन्द्रकान्त्यां रूप्ये ॥ पु० मत्स्यरङ्कखगे ॥

मणीव । अ० मणितुल्ये ॥

मणीवकम् । न० पुष्पे । कुसुमे ॥

मण्टपी । स्त्री० क्षुद्रोपोदक्याम् ॥

मण्ठ । पु० पक्वान्नविशेषे । मठे । माठ० इ० भा० ॥ मण्ठते । मठि शोके । शोकदृष्टाध्यानम् । पचाद्यच् ॥

मण्ड । पुं० पञ्चाङ्गुले । एरण्डवृक्षे ॥ शाकभेदे ॥ मस्तुनि ॥ भूषायाम् ॥ सारे ॥ पिच्छे ॥ दर्दुरे ॥ भक्तादिभवरसे ॥ तल्लक्षण यथा भक्तैर्विनाद्रवोमण्ड पेयभक्तसमन्वितम् ॥ अपिचास्यलक्षणविधि

गुणाश्च तण्डुलानां सुसिद्धानां चतुर्द्दशगुणे जले। रसः सिक्थैर्विरहितो मण्ड इत्यभिधीयते॥ शुण्ठीसैन्धवसंयुक्तो दीपनः पाचनश्च सः। अन्नस्य सम्यक् सिद्धस्य यो मण्डस्स सिततः॥ पेयायूषयवागूनां विलेपीभक्तयोरपि। तस्य गुणाः। मण्डो ग्राही लघुः शीतो दीपनो धातुसाम्यकृत्॥ ज्वरस्य सर्पिषोवस्य पित्तश्लेष्मापहः। अपि च शुद्धो धनो वस्तिविशोधनः प्राणप्रदः शोणितवर्द्धनश्च। ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः॥ लाजमण्डोऽग्निजननो दाहतृष्णानिवारणः ज्वरातीसारशमनोऽशेषदोषामपाचनः॥ वाट्यमण्डोऽग्निजननः, शूलानाहविनाशनः। पाचनो दीपनो हृद्यः, पित्तश्लेष्मानिलापहः, वाट्यमण्डो भृष्टयवमण्डः॥ न० मस्तुनि॥ मण्डने॥ पुं० न० सर्व्वेषामन्नदध्यादीनामग्ररसे। मांड० इ० भा०॥ सारे॥ पिच्छे॥ मण्डयति। मडि भूषायाम्। पचाद्यच्॥ मण्डति० मण्ड्यते वा। अच्० घञ् वा॥ मन्यते वा। मनप्राणे। अमन्ताड्डः॥

मण्डकः। पुं० मांडे० माडा० मण्डाकृतिप्रसिद्धखाद्यपदार्थः॥ तद्विधानं यथा। वारिणा कोमलां कृत्वा समितां साधु मर्द्दयेत्। हस्तेनालालयात् स्थाल्याः पृष्ठे सम्यक् प्रसारयेत्॥ अधोमुखघटस्योर्द्ध्वं तं प्रक्षिपेद्दृढं। मृदुना वह्निना साध्यः सिद्धो मण्डक उच्यते॥ दुग्धेन साज्यखण्डेन मण्डकं भक्षयेन्नरः। अथवा सिद्धमांसेन सतक्रवटकेन वा॥ मण्डकोऽत्र गुरुर्हृद्यो बल्यो रुचिकरो भृशम्। पाकेऽपि मधुरो ग्राही लघुर्दोषत्रयापहः॥ गीताङ्गविशेषः॥ यथा। जयप्रियः कलापश्च कमलः सुन्दरस्तथा। मङ्गलो वल्लभश्चेति मण्डकाः षट् प्रकीर्त्तिताः॥ एषां विशेषः सङ्गीतदामोदरे द्रष्टव्यः॥

मण्डनम्। न० प्रसाधनं। भूषणं॥ चतुर्धा मण्डनं वासोभूषामाल्यानुलेपनैः॥ मण्ड्यतेऽनेन। मडि० ल्युट्॥ नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां धृतिर्दम्पत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो गिराम्। लावण्यं वपुषः स्मृतिः सुमनसः शान्तिर्द्विजस्य क्षमा शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं सतां मण्डनम्॥ त्रि० भूषाकर्त्तरि अलङ्करिष्णौ। मण्डनशीले। मडि०। क्रुधमण्डार्थेभ्यश्चेति युच्॥

मण्डनता । स्त्री० प्रसाधनत्वे ॥
मण्डप । पु० न० जनाश्रये । जन विश्रामसद्मनि । मण्डनम् मडि । घञ् । मण्ड पाति । पारक्षणे । आतोऽनुपसर्गेक ॥ देवादिदत्तवेश्मनि ॥ त्रि० मण्डपानकर्त्तरि ॥ मण्ड पिबति । पा० । क ॥
मण्डपी । स्त्री० निष्पाव्याम् ।
मण्डयन्त । पु० नटे ॥ वधूसमूहे । अन्ने ॥ अलङ्कारे । भूषणे ॥ मण्डयति । मडिभूषायाम्श्चेच । तृभूवह्वसीत्यादिना० भच० सचषित ।
मण्डयन्ती । स्त्री० योषिति । वधाम् ॥ नव्याम् ॥ षित्वान्ङीष् ॥
मण्डयमान । त्रि० मण्डनकुर्वाणे ॥ मण्डयति० तच्छील । मडि० । ताच्छील्यवयोवचनशक्तिषु चानश् ॥
मण्डरी । स्त्री० झुर्झुर्याम् ॥
मण्डल । पु० कुक्कुरे ॥ सर्पप्रभेदे ॥ न० परिधौ चन्द्रसूर्ययोर्वेष्टिर्वेष्टने । चन्द्रसूर्ययोरुत्पातजरश्मिमण्डले ॥ य० वातेनमण्डलीभूता सूर्याचन्द्रमसो करा । मालाभाव्योम्नितन्वन्ते परिवेश प्रकीर्त्तितस्त्विति ॥ चक्रवाले । मण्डलाकारेणपरिणतेसमूहमात्रे ॥ चतुरस्रादौ ॥ यथा। चतुरस्रचिकोणवावर्त्तुलचार्द्धचन्द्रकम् । कर्त्तव्यमानुपूर्व्येणब्राह्मणादिषुमण्डलमिति ॥ कोठरोगे । मण्डलवत् कुष्ठे ॥ देशे ॥ समन्ताद्विंशतियोजने । चत्वारिंशद्योजनेवादेशइतिकेचित् ॥ द्वादशराजके ॥ द्वादशराजमु द्वादशराजमण्डलतुकामन्दकेनोक्त । यथा । अरिर्मित्रमरेर्मित्रमित्रमित्रमत परम् । तथारिमित्रमित्र च विजिगीषो पुर स्थिता ॥ पार्ष्णिग्राह स्मृत पश्चात्ताक्रन्दस्तदनन्तरम् । आसारावनयोश्च वविजिगीषोस्तुपृष्ठत मण्डलम् ॥ अरेश्चविजिगीषोश्चमध्यमोभूम्यनन्तर । अनुग्रहेसंहतयो समर्थौव्यस्तयोर्वधे ॥ मण्डलाद्बहिरेतेषामुदासीनोबलाधिक । अनुग्रहेसहताना व्यस्तानाञ्चवधेप्रभु ॥ पश्चविजिगीषो पुर . सरा । पार्ष्णिग्राहा क्रन्दपार्ष्णिग्राहासाराक्रान्दासारा श्चेतिपृष्ठतश्चत्वार । मध्यमोदासीनौद्वौ । विजिगीषुरेकइत्येवद्वादशराजमण्डलम्भवति ॥ गोले ॥ चक्रे॥ सङ्घाते ॥ नखाघाते । गदायुद्धेगतिभेदे ॥ धन्विकास्थानपञ्चकान्तर्गतस्थितिविशेषे ॥ यथा । मण्डलाकारपादाभ्यामण्डलस्थानमीरितम्॥ व्याघ्रनखाख्यगन्धद्रव्ये ॥ व्यूहविशेषे । यथा । तिर्यग्वृत्तिश्चदण्ड स्याद् भोगोन्वावृत्तिरेवच । मण्डलसर्वतोवृत्ति पृथग्वृत्तिरसहत ॥ मण्डयति। मडि० । वृषादित्त्वात्कल ॥ मण्ड

भूर्षालातिवा । मडते॰ इतिवा ॥ यद्वा । मडमस्यस्य । सिध्मादित्वा ल्लच् ॥ त्रि॰ निवद्धे । बिम्बे ॥

मण्डलकम् । न॰ बिंबे ॥ कुष्ठभेदे । मण्डलाकारकुष्ठे । कोठे ॥ दर्पणे ॥ मण्डलाकारव्यूहे ॥ पु॰ कुक्कुरे ॥ मण्डलमिव । इवेप्रतिकृताविति कन् ॥

मण्डलनृत्यम् । न॰हल्लीषे । मण्डलाकारनृत्ये ॥

मण्डलपत्रिका । स्त्री॰ रक्तपुनर्नवायाम् ॥

मंडलसङ्क्रम । पु॰ राशिसङ्क्रमे ॥

मण्डलाग्र । पु॰ कृपाणे । खड्गे ॥ मण्डलमग्रमस्य ॥

मण्डलायितम् । न॰ वर्तुले ॥

मण्डलाधीश । पु॰ मण्डलेश्वरे । मध्यमे ॥

मंडलिका । स्त्री॰परिधौ ॥ मण्डलात् स्वार्थेकः । कात्पूर्वस्येकारः ॥ मण्डल्याम् ॥ स्वार्थेके॰ केण ॥

मण्डली । पु॰ भुजङ्गे ॥ विडाले ॥ जाहके ॥ गोनासे॰ सर्पे ॥ वटवृक्षे ॥

मण्डली । स्त्री॰ मण्डलाकारेणपरिवृतसमूहे ॥ दूर्वायाम् ॥ गौरादित्वान्ङीष् ॥

मण्डलेश । पु॰ एकजन्मनि । भयापहे । मण्डलेश्वरे ॥ शाण्डक्यादेव्या स्थाने ॥ मण्डलस्यईश : ॥

मण्डलेश्वर । पु॰नृपान्तरे ॥ भूम्यादिशाधिपे ॥ चतुर्योजनपर्यन्तमधिकारीनृपस्यच । योराजातत्कृतगुणसएवमण्डलेश्वर ॥ मण्डलस्यपरिमित्यादिरूपस्यदेशस्येश्वर ॥

मण्डहारक । पु॰ शौण्डिके ॥ मण्डसुराग्रसहरति । हृञ्॰ । कर्मण्यण् । स्वार्थेक ॥

मण्डा । स्त्री॰ आमलक्याम् ॥ सुरायाम् ॥ मण्डे पचाद्यजन्ताट्टाप् ॥

मण्डित । पु॰ बौद्धगणाधिपविशेषे ॥ त्रि॰ भूषिते ॥ मंडते । मडि॰ क्त ॥

मण्डुक । पु॰ सङ्ग्रहे ॥

मण्डूक । पु॰ गढवर्चसि । दर्दुरे । भेके । शोणके ॥ मुनिविशेषे ॥ न॰ बन्धविशेषे ॥ मण्डयति॰ जलाशयम्॰ मण्डतेवा । मडि॰ । शलिमण्डिभ्यामूकण् ॥

मण्डूकपर्ण । पु॰ पत्तोर्णे । श्योनाकवृक्षे ॥ शोणके ॥ मण्डूकइवपर्णमस्य ॥ कपीतने ॥

मण्डूकपर्णी । स्त्री॰ मञ्जिष्ठायाम् ॥ ब्राह्म्याम् ॥ गोजिह्विकौषधौ ॥ आदित्यभक्तायाम् ॥ मण्डूकवत्पर्णमस्या । पाककर्णेतिङीष् ॥

मण्डूकमाता । स्त्री॰ ब्राह्म्याम् ॥

मण्डूका । स्त्री॰ मञ्जिष्ठायाम् ॥

मण्डूकी । स्त्री॰ मण्डूकपर्ण्याम् ॥ धृष्टयो

षिति । भेक्याम् ॥ ब्राह्मयाम् ॥ सूर्यभक्तायाम् ॥

मडूरम् । न० लोहमले । सिङ्घाणे । शिङ्घाणे ॥ ध्मायमानस्यलोहस्यमलमडूरउच्यते । यल्लोहयद्गुणप्रोक्तं तत्किट्टमपितद्गुणम् ॥ शतोर्द्धमुत्तमकिट्टंमध्यञ्चाशीतिवार्षिकम् । अधमम्षष्टिवर्षीयंततोहीनोविषोपमम् ॥ मूरुडते । मण्डि० । खर्जूरादित्वादूर ॥

मडोद्वाम् । न० चित्तरागे ॥ चातर्पणे । चालिम्पने ॥

मतम् । त्रि० सम्मते ॥ ज्ञाने ॥ अर्च्चिते ॥ शिष्टसमते ॥ तर्किते ॥ मन्यते । मनज्ञाने । मतिबुद्धिपूजार्थेभ्यश्चेतिवर्तमानेक्त ॥ न० अभिप्राये ॥ निश्चये ॥

मतङ्ग । पुं० मुनिविशेषे ॥ मेघे ॥

मतङ्गकेदार । पु० तीर्थविशेषे ॥

मतङ्गज । पु० गजे । हस्तिनि ॥ मतङ्गात्करपेजात । जनी० । पञ्चम्यामजातावितिड ॥

मतल्लिका । स्त्री० प्रशस्ते ॥ मत० मतिम्० चलति । अलंभूषणादौ । एवुल् । पृषोदरादित्वात्स्यल । प्रशस्त पुरुष ० पुरुषमतल्लिका । मतल्लिकायारूढिशब्दत्वात्० प्रशंसावचनैश्चेतिसमास ॥

मतानुज्ञा । स्त्री० निग्रहस्थानभेदे ॥ तल्लक्षणंयथा । स्वपक्षेदोषाभ्युपगमात्परपक्षेदोषप्रसङ्गोमतानुज्ञा । इ० गो० सूत्रम् । ६२ ॥ अस्यार्थं । दोषाभ्युपगमात्० दोषमनुज्ञेत्यर्थं । यथाशब्दोनित्य श्रावणत्वादित्युक्ते ०ध्वनावनैकान्तिकत्वेन हेत्वाभासोयमित्युक्तौ० शब्दोऽनित्य कृतकत्वादितिसाधितेध्वनेरपिपक्षत्वान्नदोष इत्युक्तौ० असिद्धत्वात्तवापिहेत्वाभासोयमित्युक्तौ० सोयंमतानुज्ञयानिगृहीत स्यादप्रतिषिद्धमनुमतंभवतीतिस्वपक्षे दोषाभ्युपगमात् ॥ इति ॥ ६२ ॥

मति । स्त्री० इच्छायाम् ॥ धियि ॥ बुद्धौ । यस्ययच्च [illegible] तस्मतिस्तादृशीभवेत् ॥ स्मृत्याम् ॥ ज्ञातस्यमनने ॥ मतिकरौषध यथा । पाठाहेजीरकेकुष्ठमश्वगन्धाजमोदकम् । वचात्रिकटुकञ्चैवलवणाचूर्णमुत्तमम् ॥ ब्राह्मीरसेभावितश्चसर्पिर्मधुसमन्वितम् । भक्षाहभक्षितकुर्यान्मे [illegible] मतिप्रदामितिगरुडपुराणम् ॥ मन्यतेऽनया । मनज्ञाने । क्तिन् ॥ मतिर्मनन तर्कोमन्तव्यविजयश्च दरइति छान्दोग्यमहाभाष्यम् ॥ आर्ये ॥ शाकभेदेइक्षजयपाल ॥ अतीतानुस्मृतिर्मेधातत्कालग्राहिणीमति । शुभाशुभविचारज्ञाप्रज्ञाधीरैवदाहृते तिविशेष ॥

मतिगर्भ । त्रि॰ प्रतिभासारे ॥
मतिदा । स्त्री॰ ज्योतिष्मत्याम् ॥ शि
 मृडीक्षुपे ॥
मतिभ्रम । पु॰ भ्रमे ॥ मतेर्भ्रम ॥
मतिभ्रान्ति । स्त्री॰ मतिभ्रमे । मि
 थ्यामतौ । मतेर्भ्रान्ति ॥
मतिमान् । त्रि॰ प्राज्ञे ॥
मतिविभ्रम । पु॰ उन्मादरोगे ।
 मतेर्भ्रंसोनाशोयेन ॥
मतुवर्थीय । पु॰ मत्वर्थीयेषुप्रत्ययेषु ॥
 बाहुलकान्मतुवर्थशब्दात्छ ॥ शेषि
 कान्मतुवर्थीयादितियथा ॥
मत्कुण । पु॰ मकनाइतिख्यातेनि-
 र्विषाणेभे । कालेप्यजातदन्ते गजे ॥
 नि श्मश्रुपुरुषे ॥ उद्दंशे । रक्त
 पायिनि । रक्ताङ्गे । मञ्चाश्रये॰
 कीटविशेषे । उडुस॰ माकुण॰
 खटमल॰ इ॰चभाषा ॥नारिकेले॥
 जङ्घात्राणे । जङ्घासम्बद्धवाससि ॥
मत्कुणा । पु॰ निर्लोमयोनौ ॥
मत्कुणारि । पु॰ इन्द्राशने । भङ्गा
 याम् ॥
मत्त । पु॰ प्रभिन्ने । क्षरन्मदेहस्ति
 नि । गर्जिते ॥ धुस्तूरे ॥ कोकिले ॥
 महिषे ॥ त्रि॰ हृष्टे ॥ मदिरामत्ते
 ॥ शौण्डे माद्यतिस्म । मदोहर्षे
 ; गत्यर्थेतिक्त । नध्याख्येतिनत्व ॥
मत्तकामिनी । स्त्री॰ अत्युत्तमनार्याम्
 । वरवर्णिन्याम् ॥ मत्ता॰ क्षीबे
 वकाशतेभाति । काशृदीप्तौ । कर्त्त
 र्युपमानइतिणिनि ॥
मत्तकासिनी । स्त्री॰ वरारोहायायो
 षिति ॥ मत्ते वकासते । कासृशब्द
 कुत्सायाम ॰ कसगतिशासनयोर्वा
 । कर्त्तर्युपमानइतिणिनि ॥
मत्तकीश । पु॰ हस्तिनि ॥
मत्तवारण । पु॰ प्रक्षिप्तकाटकुञ्जरे ।
 मत्तगजे ॥ न॰ प्रासादवीथीभावर
 गड़े । कोठेकाबरडा॰ इ॰भा॰ ॥
 अपाश्रये । प्राङ्गनावरणे ॥ पूगचूर्णे॥
मत्तमयूर । पु॰ अतिजगती १३ छ
 न्द प्रभेदे । यथा । वेदैरन्ध्रैर्म्तौस
 यगामत्तमयूर । यथा । लीला
 नृत्यन्मत्तमयूरध्वनिकान्तम् ॰ नृ
 त्यन्नीपामोदिपयोदानिलरम्यम् ।
 रासक्रीडाहृष्टमनागोपवधूभि ॰
 कंसध्वंसीनिर्जनवृन्दावनमाप ॥
मत्तमातङ्ग । पु॰दण्डकप्रभेदे ॥ यथा ।
 आदितोरागणाख्ये क्रयायत्र दृत्ता
 सन्नैमत्तमातङ्गनामामहादण्डक स
 म्मतः॰ स्वान्तरेन समादायमोदायचे
 तोविधेहिप्रभोभारतीरीतिविश्रान्ति
 भूस्त्वयत । विस्फुरत्सङ्गरप्राङ्ग
 णेनागराजीसचीत्कारफूत्कारधाराकु
 लेसावधानोयथा॰ पन्नगाधीशशुद्ध
 प्रबुद्धैकबुद्धिप्रकाशप्रवृत्तेहृद्हृत्तथा
 स्त्वेऽपिनित्ययथा ॥
मत्तमातङ्गलीलाकर । पु॰ दण्डकप्र

भेदे ॥ यथा। यत्तरेफ पर खे
च्छयागुम्फित ॥ सस्मृतोदधकोम
त्तमातङ्गलीलाकर ॥ हेमगौरे
वसानोऽशुकेइन्द्रनीलासितेवर्ष्मणि
स्पष्टदिव्यानुलेपाङ्कितो॰हारतारा
शुत्वोनभास्विचमालाञ्चितोभव्यभू
षोज्ज्वलाङ्ग समसौरिणा। अञ्ज-
नाभाम्बरेणेन्दु कुन्दाभदेहेनलीला
परीहाससहासोर्मिकौतूहले क
सरङ्गाद्रिग पातुनश्चक्रपाणिर्गति
क्रीडयामत्तमातङ्गलीलाकर ॥
मत्ता। स्त्री॰ मदिरायाम्॥ मदेनमू
ढायाम्॥ पङ्क्तिच्छन्द १० प्रभे
दे ॥यथा।चेयामत्तामभसगयुक्ता॥
यथा। पीत्वामत्तामधुमधुपाली॰-
कालिन्दीयेतटवनकुञ्जे। उद्दीव्य
न्तीव्रजजनरामाकामासक्तामधुजि
तिचक्रे ॥
मत्ताक्रीडम्। न॰ विकृतिच्छन्द, २३
प्रभेदे ॥ यथा। मत्ताक्रीड वक्षिप्वा
शायतिमयुगगयुगमनुलघु गुरुभि
॥ यथा। मुग्धोन्मीलन् मत्ताक्रीड
मधुसमयसुलभमधुरमधुरसात्॰गा
नेयानेकिञ्चितस्पन्दत्पदमरुणनयन
युगलसरसिजम्। रासोल्लासक्रीड-
त्कसद्रजयुवतिवलयविहितभुजरस
म॰सान्द्रानन्द वृन्दारण्ये स्मरजह
रिमनवचरणपरिचयम्॥
मत्तालम्ब। पु॰ प्राङ्गनावरणे। च

पाश्रये। प्रग्रीवे मत्तवारणे॥
मत्तेभगमना। स्त्री॰ स्त्रीविशेषे। म
त्तगजगामिन्याम्॥ मत्तेभवद्गम
नयस्या सा॥
मत्पूर्व। त्रि॰ मदीयप्राचीने॥
मत्यम्। न॰ दात्रादिमुष्टौ। वस्ते।
वैटा॰इ॰भा॰॥ मतस्यानम्॰तस्य
करणम्॰भाव साधन वा। मत
जनहलात्करणजल्पकर्षेषु॰इतिय
त्।
मत्वर्थीय। पु॰ मतुवर्थीयेप्रत्यये॥
मत्त्वर्थाच्छ। बहुलवचनाट्टकार-
लोप॥
मत्स। पु॰ मत्स्ये॥
मत्सगण्ड। पु॰ गलगण्डे। मत्सघण्ट
इ॰गौ॰दे॰प्र॰व्यञ्जनविशेषे॥
मत्सर। पु॰ मात्सर्ये। अन्यशुभद्वे
षे॥ क्रोधे॥ वैरे॥ त्रि॰असह्यप
रसम्पत्तौ।परोत्कर्षासहनपूर्विका
यात्मोत्कर्षवाञ्छायाम्। स्वप्रयो
जनप्रतिसन्धान विना पराभिमतनि
वारणेच्छायाम्॥ अन्यशुभद्वेषव
ति॥ कृपणे॥ माद्यतिपरवृद्धौ।
मदीहर्षे। कृधूमदिभ्य कित्इति
सर॥ मत्सरहर्षहेतुमितिवेदभा
ष्यम्॥ आत्मधिक्कारविशेषे॥ य-
था। निन्दन्तिमासदालोकाधिग-
स्तुममजीवनम्।इत्यात्मनिभवेद्य
स्तुधिक्कार सचमत्सर॥

मत्सरा । स्त्री० मक्षिकायाम् ॥

मत्सरी । त्रि० अन्यशुभद्वेष्टरि । कर्णे जपे । दुर्जने । पिशुने । सूचके । नीचे । द्विजिह्वे । खले ॥ मत्सरोऽस्यास्तीति मत्सर अस्त्यस्मिन् वा । इनि ॥

मत्सी । स्त्री० मत्स्यस्त्रियाम् ॥ मत्स्य शब्दात्स्त्रीत्वेच्छायां गौरादित्वात् ङीषि० सूर्यतिष्येति यलोपः स च मत्स्यस्य ङ्यामिति ॥

मत्स्य । पु० मीनान्तरे ॥ अभिमन्यु यादवे । नारायणे ॥ द्वादशराशौ । मीने ॥ अष्टादशपुराणान्तर्गते चतुर्दशसहस्रश्लोकात्मके पुराणविशेषे ॥ दशावतारान्तर्गते प्रथमावतारे ॥ मत्स्याः भूम्नि । देशविशेषे ॥ पुलिन्दादुत्तरे भागे कच्छाच्च पश्चिमे शिवे । मत्स्यदेश समाख्यातो मत्स्यवाञ्छल्यकारक ॥ मत्स्यानां निवासो जनपद मत्स्याः । अणो लुप । लुपि युक्तवद्भाव ॥ देशविशेषे ॥ विराटनगरे ॥ माद्यति । मदी० । ऋतन्यञ्जीति मदे स्यन् । जनिदेश्यादिना० स्यो वा । स्वरे भेद ॥ पु० स्त्री० जलजन्तुविशेषे । पृथुरोमणि । झषे । मीने । वैसारिणे । अण्डजे । मच्छी० इ० भाषा ॥ रोहिताद्यास्तु ये जीवास्ते मत्स्याः परिकीर्त्तिता ॥ अथैतेषां गुणा । यथा । मत्स्याः स्निग्धोष्णमधरा गुरव कफपित्तला । वातघ्नाश्च हृष्या वृष्या रोचका बलवर्द्धना ॥ अध्वव्यवायसक्तानां दीप्ताग्नीनाञ्च पूजिता ॥ शुष्कमत्स्या नवल्या स्युर्दुर्जरा विड्विबन्धना । दग्धमत्स्यो गुणे श्रेष्ठ पुष्टिकृद्बलवर्द्धन ॥ सूक्ष्ममत्स्यास्तु । भर्जितास्तिलतैलेन सर्वसम्भारसम्भृता । सूक्ष्मामत्स्या स्वादुरसा दोषत्रयनिवर्हणा । पर सूक्ष्मास्तु ये तेषु ते सर्वे पुंस्त्वनाशना ॥ अथ कूपादिमत्स्यानां गुणा । कौपमत्स्या शुक्रमूत्रकुष्ठश्लेष्मविबन्धदा । सरोजा मधुरा स्निग्धा बल्या वातविनाशना ॥ नादेयाश्च हृष्या मत्स्या गुरवोऽनिलनाशना ॥ रक्तपित्तकराश्च्या स्निग्धोष्णा स्वल्पवर्चस ॥ चौड्या पित्तहरा स्निग्धा मधुरा लघवो हिमा । ताडागा गुरवो वृष्या शीतला बलमूत्रदा ॥ ताडागवन्निर्भरजा बल्यायुर्मतिदक्करा ॥ अथर्त्तुविशेषे मत्स्यगुणा । यथा । हेमन्ते कूपजा मत्स्या ० शिशिरे सारसा हिता । वसन्ते तु नादेया ग्रीष्मे चौड्यासमुद्भवा ॥ तडागजास्तु वर्षासु ताश्च पथ्या नदीभवा । नैर्झरा शरदि श्रेष्ठा निश्चेयोऽयमुदाहृत ॥ अपि च । [illegible] शस्तानि

न्दितामत्स्या सर्वे शल्कयुताहिता । वपु स्थैर्यकरावीर्यबल पुष्टिविवर्द्धना ॥ क्षुद्रकुल्याजल निर्झरतडागवापीजलेषु येमत्स्या । तेऽतिजडानादेयायथोत्तर लघुतरास्तुदेया ॥ चाराम्बुमत्स्या गुरवोविदाहिनोविष्टम्भदास्तेलवणाम्बुवादिजा । नानाश्रिता स्वादुजलस्थिताश्चपिच्छ्रियाजडास्तेपितथाश्रिताद्रुमे ॥ क्षुद्रमत्स्या स्वादुरसादोषत्रयविनाशना । लघुपाकारुचिकरा सर्वदाते हितामता । अतिसूक्ष्मा पुंस्त्वहरारुच्या कासानिलापहा । मत्स्याण्डगुणास्तु । मत्स्यग र्भोभृश वृष्य स्निग्ध पुष्टिकरो गुरु । कफमेद प्रदोबल्योग्ला निक्लम्मेहनाशन ॥ अथरन्धन प्रकारा मत्स्यखण्डानिसङ्कृष्यचालयेत्प्रथम जलै । ततोविशनतक्राभ्यावहुश चालयेतपुन ॥ गन्धनाशनप्रकारस्तु । हरिद्रा शुण्ठीधान्याककटुतैलैर्विमर्दयेत् । प्रक्षाल्यहिङ्गुनालिम्पेद्गन्धस्तेनोपशाम्यति ॥ मत्स्योत्तमरन्धनन्तु । तप्ततैलेक्षिपेद्धान्य कास मर्दसहिङ्गुकम् । भृष्ट सलवणातक्रे मत्स्य क्षिप्त्वापुन पचेत् । अर्द्धपक्वे क्षिपेदम्ल सिद्धचूर्णस्तुनागरम् ।

दग्धहिङ्गुविनि क्षिप्यसाधयेन्मत्स्यमुत्तमम् ॥ मत्स्यपिष्टिकातु । गतत्वक्कण्टकोमत्स्योवेसवारेणसयुत । शिलायापेषितोभूय प्रोच्यतैमत्स्यपिष्टिका ॥ तैलेविपाचयेत्स्थाच्चतुर्थसाम्लसयुतम् । वेसवारेणसयुक्त शिलाय पेषयेत्पुन ॥ अनयापूर्ववत्कुर्यान्मासस्येवप्रकारका । वटिकावटकाद्याश्चसूपकारधियाचिता ॥ मत्स्यपूरणम् तक्रेणस्विन्नमत्स्यस्यखण्डान्प्रक्षाल्यपेषयेत् । वीजपूराद्र्रमरिचैर्हिङ्गुसैन्धवजीरकैः ॥ सयुक्तकटुतैलाद्यैर्घृतैपक्वाथचूर्णयेत् ॥ मत्स्यपुटपाकस्तु । गतत्वक्चालितमत्स्य कदलीफलवेष्टितम् । मृदालिप्तपुटेपक्व सस्कृतदाडिमादिना ॥ यत्रमत्स्य पुटेपक्वजीरतण्डुललेपितम् । तापिकायापुन पक्व समिश्रमरिचादिना किञ्चिदन्न्यस्तमस्तिपरेसुराणाकेचिदनिवनिताधरपल्लवेषु । ब्रूमोवयक्तकशास्त्रविचारबुद्धया-जम्बीरनीरपरिपूरितमत्स्यखण्डेहृतिमणिमिश्र ॥ मत्स्यभक्षणनिषेधो यथा । योयस्यमासमश्नातिसतन्मासादउच्यते । मत्स्याद सर्वमासादस्तस्मान्मत्स्यान्विवर्जयेत् ॥ श्रिव्यम्यमश्विमेभागेमत्स्यभुक्पतितोभवेत् । अन्यचकामतोजग्ध्वासोपवा

सस्त्याहवसेत्॥ अन्नानतस्तदर्ह्णम् ॥ मत्स्यभक्षणप्रतिप्रसवो यथा । मत्स्यान्सशल्कान्भुञ्जीतमांसरौरवमेव च । निवेद्यदेवताभ्यस्त्वब्राह्मणेभ्यस्त्वनान्यथा ॥ सफरंसिंहतुण्डञ्चतथा पाठीनरोहितौ । मत्स्यास्त्वेतेसमुद्दिष्टाभक्षणायतपोधनै ॥ प्रोक्षित भक्षयेदेषामांसञ्चद्विजकाम्यया । यथाविधिनियुक्तश्चप्राणानामपिचात्यये ॥ इतिकौर्मेउपरिभागे १६ अध्याय ॥ अपिच । पाठीनरोहितावाद्यौनियुक्तौहव्यकव्ययो । राजीवान्सिंहतुण्डाश्चशल्काश्चैवसर्वश ॥ इतिमनु ॥ अनिवेद्यनभोक्तव्यमत्स्यमांसञ्चशक्तवित् । अत्र विष्णपयोमूत्र यद्विष्णोरनिवेदितम ॥

मत्स्यकरण्डिका । स्त्री० मत्स्यरक्षणपात्रे । मत्स्याधान्याम् । कुवेण्याम् । खालु इ० इ० गौ० दे० भा० ॥

मत्स्यगन्धा । स्त्री० व्यासदेवस्यमातरि ॥ तोयपिप्पल्याम् । लाङ्गल्याम् ॥ मत्स्यस्यगन्धइवगन्धोस्या । उपमानाच्चेतिइत्त्वाभावश्छान्दस ॥

मत्स्यगर्भ । पुं० मत्स्याण्डे ॥

मत्स्यघण्ट । पु० मत्स्यघटितव्यञ्जनविशेषे । गलघण्ट ॥

मत्स्यजालम् । न० आनाये । जाले ॥

मत्स्यखण्डिका । स्त्री० मत्स्यखण्डाम् । राव० इ० भा० ॥ मत्स्यखण्डिकाखण्डसिता क्रमेणगुणवत्तराइतिवाग्भट । मत्स्यखण्डेव । स्वार्थेकन ॥

मत्स्यण्डी । स्त्री० फाणिते राव० इ० काशीभाषा ॥ तत्तखण्डम् ॥ यथा । इक्षोरसीय सम्यक्कोघन किञ्चिद्द्रवान्वित । मन्द यतस्यन्दतेतस्मान्मत्स्यण्डीतिनिगद्यते ॥ मत्स्यण्डीभेदिनीवल्यालघ्वीपित्तानिलापहा । मधुराच्छ्वणीवृष्यारक्तदोषापहास्मृता ॥ मत्स्याण्डाकारत्वात् । मत्स्यण्डी । शकन्ध्वादि ॥ मदमुदवास्यन्दते । स्यन्दू प्रस्रवणे । कर्मण्यण् । ङीप् । पृषोदरादि ॥

मत्स्यधानी । स्त्री० मत्स्याधान्याम् । कुवेण्याम् ॥ मत्स्याधीयन्तेच । करणाधिकरणयोरितिधाञोल्युट् ॥

मत्स्यध्वज । पु० मत्स्याकारेध्वजे ॥ गिरिकामरूपप्रसिद्धे पर्वते ॥ यथा । मणिकूटाचलात्पूर्वमत्स्यध्वजकुलाचल । निर्दग्धोयत्रमदनो हरनेत्राग्निनापुनरित्यादिकालिकापुराणे ॥ ८१ ऽध्यायेऽस्ति ॥

मत्स्यनाशक । पु० कुररपक्षिणि । त्रि० मीननाशकर्त्तरि ॥

मत्स्यनाशन । पु० कुररपक्षिणि ॥

मत्स्यपित्ता । स्त्री० कटुरोहिण्याम् कृष्णभेद्याम् । कटुक्याम् ।। मत्स्यानापित्तमिवतत्त्वादुत्वात् ॥
मत्स्यप्रलेह । पुं० मत्स्यसव्यञ्जनान्तरे ॥ विषेश प्रलेहे ॥
मत्स्यबन्धी । पु० कैवर्त्ते । धीवरे ॥
मत्स्यबन्धनी । स्त्री० कुवेण्याम् । मत्स्याधान्याम् ।
मत्स्यमण्डक । पुं० व्यञ्जनान्तरे । मत्स्यस्यपिष्टिकाकृत्वापर्णस्यामण्डलाकृतिम् । श्वासुरेणसमुत्स्विन्ना-सयुक्ताधूलनेनतु । मत्स्यमण्डक-इत्युक्त सूदशास्त्रे विचक्षणैः ॥
मत्स्यरङ्क । पु० )
मत्स्यरङ्कक । पु० ) पक्षिविशेषे । मत्स्याशिनि । जलमङ्गी । मणीचकि । माचराङ्गा० इ० गौ० दे० भा० । मच्छरङ्ग० इ० दे० भा० ॥
मत्स्यराज । पु० विराटनृपे ॥ रोहितमत्स्ये ॥ मत्स्यानाराजा । टच् ॥
मत्स्यविन्ना । स्त्री० कटुकायाम् ॥
मत्स्यवेधनम् । न० वडिशे ॥ विध्यतेनेन । विधविधाने । करणेतिल्युट् । मत्स्यानावेधनम् ॥
मत्स्यवेधनी । स्त्री० मद्गुपक्षिणि ॥ वडिशे ॥
मत्स्यसन्तानिक । पु० मत्स्यव्यञ्जनविशेषे ॥ यथा । दग्धोङ्गारेसलवणोवेसवारैरुपस्कृत । सार्द्रकं कटुतैलेनमत्स्यसन्तानिकोभवेत् ॥
मत्स्यसुता । स्त्री० उत्तरायाम् । परीक्षिन्मातरि ॥ सत्यवत्याम् ॥
मत्स्याक्षी । स्त्री० तोयपिप्पल्याम् ॥ सोमलतायाम् । ब्राह्म्याम् ॥ यथा ब्राह्मीवयस्थामत्स्याक्षीमीनाक्षीसोमवल्लरी । मत्स्याक्षीशिशिरारुच्याव्रणदोषक्षयापहा ॥ इतिराजनिघंट ॥ गण्डदूर्वायाम् ॥ हिलमोचिकायाम् ॥ मत्स्यस्याक्षीवपुष्पमस्या । मत्स्यशब्द स्वाङ्गावयवेगौण । बहुव्रीहाविति षच् । ङीष् ॥ मच्छेछी० इतिलोकप्रसिद्धौषधौ ॥ मत्स्याक्षीग्राहिणीशीताकुष्ठपित्तकफास्रजित् । लघुस्तिक्ताकषायाचस्वाद्वीकटुविपाकिनी ॥
मत्स्यात्खग । पु० मत्स्यान् अत्ति । अद० । क्विप् । मत्स्याचासौखगश्च ॥
मत्स्यादनी । स्त्री० लाङ्गल्याम् । तोयपिप्पल्याम् । मत्स्याक्ष्याम् ॥ मत्स्यैरद्यते । अद० । ल्युट् । क्विप् । ङीप् ॥
मत्स्याधानी । स्त्री० मत्स्यरक्षार्थपात्रे । कुवेण्याम् । खारयी० खालुइ० इ० गौ० देशभा० ॥ मत्स्याआधीयन्तेऽत्र । डुधाञ्० । करणाधिकरणयोरितिल्युट् ॥

वेत्ति । विद्० । क्किप् ॥ त्रि० मन्त्रज्ञातरि ॥

मन्त्रवेश्म । न० मन्त्रगृहे । चिन्तो द्वसिते ॥

मन्त्रशक्ति । स्त्री० राज्ञांशक्ति विशेषे । ज्ञानवले ॥ सन्ध्यादिषाड्गुण्यावस्थापन ज्ञानबलम न्त्रशक्ति । पञ्चाङ्गम न्त्रोमन्त्रश क्तिरित्यन्ये ॥

मन्त्रस्पृक् । त्रि० मन्त्रकारणकस्य शंकर्त्तरि ॥

मन्त्रित । त्रि० मन्त्रेणसंस्कृते । अभिमन्त्रिते ॥

मन्त्री । त्रि० उपदेष्टरि । साधके ॥ पु० मन्त्रजातकर्त्तव्यनिश्चयकर्त्तरि । धीसचिवे । अमात्ये ॥ कार्य सहाया सचिवाबुद्धिसहायाश्चम न्त्रिण प्रोक्तादूतिभेद । तल्लक्षणयथा । मन्त्रीभक्त शुचि शूरोऽनुक्तोबुद्धिमान्क्षमी । आन्वीक्षिक्यादिकुशल परिच्छेदीसुदेश ज ॥ विद्यादिगुणसम्पन्ना विप्रा कार्याश्चमन्त्रिण । यथोक्त कालिकापुराणे । मन्त्रिणस्तुनृप कुर्याद्विप्रान् विद्याविशारदान् । विशुद्धांश्चकुलीना श्चधर्मार्थकुशलानृजून् ॥ मन्त्रयेत्तै समकालेनात्यर्थबहुभिश्चरेत् एकैकेनैवकर्त्तव्य मन्त्रस्तुविनिश्चयम् ॥ व्यस्तैश्चैवसमस्तैश्चवान्यस्यव्यपदेशत । स्वयंवृत्त मन्त्रगृहस्थ लआरुह्यम न्त्रयेत् ॥ अरण्येनि शलाकेवान यामिन्याकदाचन । शिशून्शाखामृगान्पण्डान्शुकान्वैसारिकास्तथा ॥ वर्जयेत्मन्त्रगेहेषुमनुष्यानुन्नतास्तथा । दूषणमन्त्रभेदेषुनृपाणायच जायते ॥ नतत्सम्यक्समाधातुद्वैर्नृपशतैरपीति ॥ अपिचमत्स्यपुराणे । बहुभिर्मन्त्रयेत्कामराजामन्त्रपृथक्पृथक् । मन्त्रिणामपिनोकुर्यात् मन्त्रीमन्त्रप्रकाशनम् ॥ नक्वचित्कस्य विश्वासोभवतीहसदानृणाम । निश्चयश्चसदाम न्त्रेकार्यएकेनसूरिणा । भवेद्धानिश्चयावाप्ति परवुद्ध्युपजीवनात् । एकस्यैवमहीभर्त्तुर्भूय कार्योविनिश्चय ॥ इति ॥ मन्त्रोगुप्तभाषणमस्यास्ति । अतइनि ॥ गद्दा । अवश्यम न्त्रयते । मन्त्रिगुप्तभाषणे । आवश्यकेणिनि ॥ यज्ञादिणिन्यन्तोवा ॥

मन्थ । पु० मन्थानदण्डे ॥ दिवाकरे ॥ साक्तवे । द्रवद्रव्यसंयुक्तेषुसक्तुषु । यथा । सक्तुभि सर्पिषाभ्यक्तै शीतवारिपरिप्लुतै । नात्यच्छोनाति सान्द्रश्चमन्थइत्यभिधीयते ॥ पेयविशेषेयथा । जलेचतुष्पलेशीतेक्षुण्ण द्रव्य पलक्षिपेत । मृत्पात्रे मन्थयेत् सम्यक्तस्माच्चद्विपलपिवेत् ॥ क्षुण्ण चूर्णीकृतमन्थयेत्० मृद्नीयात् ॥

नेत्ररोगे । नेत्रमले ॥ मारणे ॥ मथ्यतेऽनेन । मथिहिंसासंक्लेशनयोः । हलश्चेतिघञ् ॥ मन्थने ॥

मन्थजम् । न० नवनीते ॥

मन्थदण्ड । पु० मन्थाने । मन्थानदण्डे । रई० हि० भा० ॥

मन्थनम् । न० विलोडने ॥ कुन्थने ॥ पु० मन्थानदण्डे ॥

मन्थनघटी । स्त्री० दधिमन्थनपात्रे ॥

मन्थनी । स्त्री० गर्गर्याम् । मन्थनपात्रे ॥ मथ्यतेऽस्याम् । मन्थविलोडने । करणेतिल्युट् ॥

मन्थर । पु० कोषे ॥ फले ॥ वाधे ॥ मन्थाने ॥ सूचके मन्दगामिनि । योर्वार ॥ कोपे ॥ केशे ॥ न० कुसुम्भाम् ॥ त्रि० मन्दे ॥ पृथौ ॥ वक्रे ॥ मन्दगामिनि । जडे ॥ सूचके ॥ नीचे ॥ मन्थतिपादौ । मथि० । वाहुलकादरन् ॥

मन्थरा । स्त्री० कैकेय्यादास्याम् ॥

मन्थरु । पु० कुठेरी । चामरवाते ॥

मन्थशैल । पु० मन्दराचले ॥

मन्था । स्त्री० मेथिकायाम् ॥

मन्थान । पु० मन्थदण्डे । वैशाखे रई० हि० भा० ॥ आरग्वधे ॥ न० गायत्रीछन्द ६ प्रभेदे ॥ यथा । कर्णध्वजानन्दमाधायनित्यञ्च । बधीरसैर्यत्तु मन्थानमेतत्तु ॥ यथा । शीतांशुवक्त्रायपाथोजनेत्राय । वन्दस्वनन्दस्यभव्यायपुत्राय ॥ मन्थति । मथि० । वाहुलकादानच् ॥

मन्थानक । पु० तृणभेदे । रहिते । दृढमूले । तृणाङ्घ्रिपे ॥

मन्थिनी । स्त्री० दधिमन्थनपात्रे । गर्गर्याम् । कलस्याम् । मथानी० हि० भा० ॥

मन्द । पु० शनैश्चरे ॥ हस्तिजात्यन्तरे ॥ शीर्षपादे । यमे ॥ प्रलये ॥ त्रि० अतीक्ष्णे । अलसे । शीतके ॥ मूर्खे ॥ स्वैरे ॥ अभाग्ये । भाग्यरहिते ॥ रोगिणि ॥ अल्पे ॥ मदरते ॥ खले ॥ अशुद्धचित्तत्वेनज्ञानाधिकारमप्राप्ते ॥ मन्दते । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु । पचाद्यच् ॥ न० ईषदर्थे ॥

मन्दग । त्रि० मृदुगामिनि । अशीघ्रगे ॥

मन्दगति । पु० शनौ ॥ त्रि० मन्दगामिनि ॥

मन्दगामी । त्रि० मन्दगमनशीले । मन्थरे ॥ मन्द गच्छति० तच्छील: । गम्लृ० । सुप्यजातावितिणिनि

मन्दजननी । स्त्री० सूर्यपत्न्याम् । शनिमातरि । छायायाम् । तपत्याम् ॥

मन्दट । पु० पारिभद्रवृक्षे ॥

मन्दता । स्त्री० आलस्ये । मन्दत्वे ॥

मन्दनम् । न० स्तोत्रे ॥ मन्दते । मदि । कृपृवृजिमन्दीत्यादिनाक्यु ॥

मन्दप्रज्ञ । त्रि॰ जडबुद्धौ ॥ मन्दाज्ञाप्रज्ञाधीर्यस्य ॥

मन्दभाग्य । त्रि॰ विघ्नाकुले ॥

मन्दभू । पुं॰ मन्दभूमौ ॥

मन्दर । पुं॰ मन्थशैले ॥ मन्दारपादपे । स्वर्गे ॥ हारभेदे ॥ मेरोर्दक्षिणप्राच्यादिभिन्ने तवर्षे पश्चाशत् सहस्रोच्छ्रायेविष्कम्भशैले ॥ तत्र योजनसहस्रोन्नतिमान्कदम्बपादपोस्ति । सुराङ्गनाक्रीडाप्रधानोहि

मन्दर । न॰ वर्णवृत्तान्तरे ॥ छन्दसिभोयदि । मन्दरमस्वति ॥ शङ्कुशङ्कर । वैरिभयङ्कर ॥ त्रि॰ बहुले ॥ मन्दे ॥

मन्दिरहरिण । पुं॰ जम्बुद्वीपोपद्वीपविशेषे ॥

मन्दसान । पुं॰ अग्नौ ॥ जीवे ॥ निद्रायाम् ॥ मन्दते । मदि॰ । च्छन्दिविमन्दिसहिभ्य किदित्यसानच् ॥ वेदभाष्ययौगिकार्थएवपुरस्कृत ॥

मन्दा । स्त्री॰ सङ्क्रान्तिविशेषे ॥ अजादित्वाट्टाप् ॥

मन्दाकम् । न॰ स्तवने ॥

मन्दाकिनी । स्त्री॰ वियद्गङ्गायाम् । स्वर्णदाम् । सुरदीर्घिकायाम् ॥ प्रधानधारायास्वर्गेसाचमन्दाकिनी स्मृता । योजनायुतविस्तीर्णाप्रस्थेनयोजनास्मृता ॥ क्षीरतुल्यजलाश्चद्रत्युत्तुङ्गतरङ्गिणी । वैकुण्ठात् ब्रह्मलोकश्चतत स्वर्गं समागता ॥ सङ्क्रान्तिविशेषे ॥ यथा । बुधेमैत्रसञ्ज्ञे तुमन्दाकिनीसानृपाणान्तुसौख्य भवेत्तत्रमासे ॥ जगतीच्छन्द १२ प्रभेदे ॥ ननररघटितातुमन्दाकिनी । यथा । बलिदमनविधौबभौसङ्गता॰ पदजलरुहियस्यमन्दाकिनी सुरनिहितसिताम्बुजस्रङ्निभाहरतुजगद्घ सपीताम्बर ॥ मन्दमकति॰ तच्छीला । चक्रकुटिलायागतौ । सुप्रीतिणिनि । ङीप् ॥

मन्दाक्रान्ता । स्त्री॰ अत्यष्टिच्छन्द १७ प्रभेदे ॥ मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौतौगयुग्मम । यथा । प्रेमालापे प्रियवितरणे प्रोषितालिङ्गनाद्यै मंदाक्रान्तातदनुनियतवश्यतामेतिबाला । एवशिक्षावचनसुधया-राधिकाया सखीनाप्रीत पायात् स्मितसुवदनोदेवकीनन्दनोन ॥

मन्दाक्षम् । न॰ लज्जायाम् ॥ मन्दमक्षबागाद्यत्र ॥

मन्दाग्नि । पुं॰ अन्ननिष्कासनाद्याग्निविशेषे ॥ कफद्वारात्पजठरानले ॥ तस्यनिदानादियथा । मन्दस्तीक्ष्णोथविषम समश्चेतिचतुर्विध । कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनल ॥ विषमोवातजान्रोगास्तीक्ष्ण पित्तसमुन्नतान् करो

स्यग्निस्तथामदीविकारान्कफसम्भवान् ।। समासमाग्नेरशितामात्रा सम्यग्विपच्यते । अल्पापिनैवमदाग्ने र्विषमाग्नेस्तुदेहिनः ॥ कदाचित्पच्यतेसम्यक् कदाचिन्नचपच्यते ॥ इति ॥ तस्यौषधंयथा । चित्रकस्याष्टभागानिशूरणस्यचषोडश । शुण्ठ्याश्चत्वारिभागानिमरिचानाद्दय तथा ॥ पिप्पलीपिप्पलीमूलविडङ्गानांचतुष्टयम् । अष्टौमूषलिभागाश्चत्रिफलायाश्चतुष्टयम् ॥ द्विगुणेनगुडेनैषांमोदकानिह्निकारयेत् । तद्भक्षणमजीर्णं हिपाण्डुरोगञ्चकामलाम् ॥ अतिशोणितमन्दाग्निप्लीहायञ्चनिवारयेत् । इ० ॥

मन्दायु । त्रि० अल्पायुषि ॥

मन्दार । पुं० सुरद्रुमविशेषे । पारिभद्रे । निम्बतरौ । वकायन० इ० भा० ॥ अर्कपर्णे । आक० इ० भा० ॥ मन्दते० मोदयति । मदिस्तुत्यादौ । अस्त्रिसदिमन्दिभ्यआरन् ॥ मन्दाघरायस्य ॥ यद्वा ॥ मन्दाआराधारायस्यसरलत्वात ॥ मन्दस्तच्छतिवा ऋगतौ ॥ कर्मण्यण् ॥ मन्दानियर्त्ति । अण् । मन्दैरर्यतेवा । घञ् ॥ तीर्थविशेषे ॥

मन्दारु । पु० पारिजाते ॥ मन्दते। मदि० । बाहुलकादारु ॥

मन्दिकुक्कुर । पु० मत्स्यविशेषे ॥

मन्दिर । पुं० मकरावासे । समुद्रे ॥ जानुपश्चाद्भागे ॥ न० नगरे ॥ अगारे । निशान्ते । वस्त्ये । सद्मनि ॥ देवतागृहे ॥ मन्दते० मन्द्यते० सुप्यतेऽत्रवा । मदि० । इषिमदिमुदीतिकिरच् ॥

मन्दिरपशु । पु० बिडाले ॥

मन्दिरा । स्त्री० मन्दिरे ॥ अजादित्वाट्टाप् ॥

मन्दुरा । स्त्री० वाजिशालायाम् ॥ शयनीयार्थवस्तुनि । मादरी० इ० भा० ॥ मन्दतेऽत्र । मदिस्तुत्यादौ । मन्दिवासीत्युरच् ॥

मन्देह । पु० राक्षसविशेषाणामसंख्यानाम् ॥ यथा । सन्ध्याकालेतुसम्प्राप्तेरौद्रेपरमदारुणे । मन्देहाराक्षसाघोरा सूर्यमिच्छन्तिखादितुम् ॥ प्रजापतिकृत शापस्तेषांमैत्रेयरक्षसाम् ॥ अक्षयत्वंशरीराणां मरणञ्चदिनेदिने ॥ ततः सूर्यस्यतैर्युद्धं भवत्यत्यन्तदारुणम् । ततो द्विजोत्तमास्तोय प्रक्षिपन्तिमहामुने । ओङ्कारब्रह्मस युक्तं गायत्र्याभिमन्त्रितम् । तेनदह्यन्तितेपापावज्रीभूतेनवारिणा इत्यादि- विष्णुपुराणे द्रष्टव्यम् ॥

मदोदरी । स्त्री० रावणस्यपत्न्याम् । मयासुरस्य पुत्र्याम् ॥

मदोदरीश । पु० रावणे ॥ मदो

र्यां 'ईश'॥
मन्दोदरीसुत । पु॰ इन्द्रजिति ॥
मन्दोष्णम् । न॰ ईषदुष्णे । मन्दञ्च तदुष्णञ्च ॥ वि॰ तद्वति ॥
मन्द्र । पुं॰ गम्भीरध्वनौ ॥ मेघादिशब्दे ॥ मन्द्रते । मदि॰ । स्फायितञ्चीतिरक् । वाद्यविशेषे । मृदङ्गके ॥ त्रि॰गम्भीरध्वनिवति ॥
मन्मथ । पु॰ कामदेवे । कुसुमायुधे ॥ कपित्थे ॥ मननमत् ॰चेतना । मन॰ । सम्पदादित्वात्क्विप् । गमादीनाङ्क्वितिनलोप । तुक्क्वसे तितुक् । मथतीतिमथ । मथि॰ । अच । मतोज्ञानस्यमथ मन्मथ ॥ मनोमथ्नातिवा । पृषोदरादि । मिथुनलग्ने ॥ वत्सरविशेषे । ७६॥ सरोग चतथादेविदाहज्वरसमन्वितम् । अभिभूत जगत्सर्वंमन्मथेसुरपूजिते ॥
मन्मथानन्द । पु॰ महाराजचूते ॥
मन्मथालय । पु॰ आम्रे ॥
मन्मन । पु॰ गद्गदध्वनौ ॥ न॰दम्पत्यो शनैभाषणे । सुरतेकर्णमूलेषुयच्चदेशीयभाषया । दम्पत्यो र्जल्पित मन्दमन्मनंतद्विदुर्बुधा ॥
मन्मनस्क । वि॰ मन्मनसि ॥ मय्येवमन सङ्कल्पात्मक यस्य ॥
मन्मय । वि॰ मदेकचित्ते ॥ मापरमात्मान तत्पदार्थंत्व पदार्थाभेदेनसाक्षात्करणशीले ॥
मन्या । स्त्री॰ ग्रीवाया पश्चाद्भागे॰-स्थितायाशिरायाम् ॥ गलपार्श्वशिरायाम् ॥ मन्यतेऽनया । सञ्ज्ञाया समजेतिक्यप् ॥
मन्याका । स्त्री॰ मन्यायाम् ॥
मन्यु । पु॰ क्रुधि ॥ दैन्ये ॥ शोके ॥ यज्ञे ॥ मन्यते । मनज्ञाने । यजिमनिशुन्धिदसिजनिभ्योयुच् ॥ मृगय्यादिर्वा ॥
मन्ये । अ॰ वितर्के ॥
मन्वन्तरम् । न॰ दिव्यानायुगानामेकसप्ततौ । किञ्चिदधिकैकसप्ततियुगात्मकेमनो कालविशेषे ॥ एवचतुर्युगाख्यानासाधिकाह्येकसप्ति । कृतत्रेतादियुक्तानामनोरन्तरमुच्यते ॥ मनव स्वायम्भुवादयस्तेषामन्तरमवकाश स्थितिरितियावत् ॥ एकसप्ततिरित्यमरोक्ति । अत्रयद्यपिगणनया॰अष्ट-युगेनाधिकासङ्ख्यासम्पद्यते॰ । यत ॰ दैविकानायुगानान्तुसहस्रब्रह्मणोदिनम् । मन्वन्तर तथैवैक तस्यभागाश्चतुर्दश॥ तत किञ्चिदधिकादिव्ययुगानामेकसप्ततिरिति॰नामविधानेसर्वज्ञनारायणेनोक्तत्वात् । तथापि॰अल्पत्वादिह-तथानोक्तमितिबोध्यम् । मन्वन्तर-स्यसङ्ख्यातवर्षाणियथा । त्रि श-

त्कोव्यस्तुवर्षाणामानुषेणद्विजोत्त-
मा । सप्तर्षिस्तथान्यानिनियुता
न्यधिकानितु ॥ विंशतिस्तुसहस्रा-
णिकालोय साधिकाविना । मन्व
न्तरस्यसङ्ख्येषालिङ्गेऽस्मिन्क-
थिताद्विजा ॥ यथाङ्का ॥
३०६७२०००० । एवं चतुर्द्दशमन्व
रैर्ब्रह्मदिनं भवति ॥ ब्रह्मणोदिन
मध्ये चतुर्द्दशमन्वन्तराणिभवन्ति-
। एकोमनुर्यावदधिकारीभवतिस
कालोमन्वन्तरसञ्ज्ञकोभवति । तत्र
मनूनानामानि यथा । स्वायम्भुवो
मनु पूर्वस्तत स्वारोचिषोमनु
। उत्तमस्तामसश्चैवरैवतश्चाक्षुषस्त
था ॥ षडेते मनवोऽतीताश्चथ
वैवस्वतोमनु । सावर्णा पञ्चरौ
च्यश्चभौत्यश्चागामिनस्त्वमी ॥ पुरा
णलक्षणं ॥ मन्वन्तर मनुर्देवामनु
पुत्रा सुरेश्वर । ऋषयोंऽशाव
तारश्चहरे षड्विधमुच्यते ॥

मन्वादि । स्त्री० मासविशेषेषुतिथि
विशेषे ॥ अश्वयुक्शुक्लनवमी०
कार्त्तिकीद्वादशीसिता । तृतीया
चैत्रमासस्य० तथाभाद्रपदस्यच ॥
श्रावणस्याष्टमीकृष्णा पौषस्यैकाद
शीतथा । आषाढस्यापिदशमी मा
घमासस्यसप्तमी ॥ कार्त्तिकीफा
ल्गुनीचैत्री ज्येष्ठोपञ्चदशीसिता ।
माघमासे कुहूश्चैवकार्त्तिकीचतथै

वच ॥ एतामन्वादय प्रोक्तादत्त
स्याक्षयकारिका ॥

मपष्ट । पु० )

मपष्टक । पु० ) वनमुद्गे ॥

मपुष्टक । पु० )

मम । अ० षष्ठ्यन्तकप्रतिरूपकमव्यय
म् । ममेत्यभिमाने ॥

ममता । स्त्री० मदीयत्वाभिमाने ॥
भावेतल् ॥ ममत्वे ॥

ममतायुक्त । त्रि० कृपणे ॥

ममत्वम् । न० ममतायाम् ॥ भावे
त्व ॥

ममापताल । पु० विषये ॥ मव्य
ति । मव्यबन्धने । मव्यतेर्यलोपो
मश्चापतुट्चालन्नतिमव्यतेरालप्र
त्ययस्तस्यापतुट्० आगमोधातोर्यलो
पोमकारश्चान्त्यस्य ॥

मय । पु० दैत्यानाशिल्पिनि । मा
याविनाशिल्पिनाञ्चाचार्ये ॥ वेसरे
। अश्वतरे ॥ उष्ट्रे । करभे ॥
मीनाति० मयतेवा । मीङ्हिंसा
याम्० मयगतौवा । पचाद्यच् ॥

मयट । पु० तृणहर्म्ये । तृणयुक्त
हर्म्ये ॥

मया स्त्री० चिकित्सायाम् ॥

मयु । पु० किन्नरे ॥ मृगे ॥ मिनो
ति । डुमिञ्प्रक्षेपणे । भृमृशीतृ
चरित्सरितनिधनिमिमस्जिभ्यउ
कृत्यु । मीनातीत्यात्वन्तुबाहुल
कान्न ॥

मयुराज । पुं० कुवेरे ॥ मयूनाराजा टच् ॥

मयुष्टक । पुं० वनमुद्गे । मकुष्टके । मोठ०इ०भा० ॥ तिष्ठति । ष्ठा० । क्कुन् । मयुष्वासौष्टकश्च । पूर्वपदादितिषत्वम् ॥

मयूख । पु० किरणे । मोख०इ०-भा० ॥ ज्वालायाम् ॥ शोभायाम् ॥ दीप्तौ ॥ मिमीते । माङ्माने । माङऊखोमयर्च्च्यूखप्रत्ययोमया देशश्च ॥

मयूर पु । वर्हिणे । नीलकण्ठे । शिखावले । केकिनि । मोर०इ०-भा० ॥ अस्यमासगुणा । यथा । मयूर श्रोत्रनेत्राग्निमेधावर्णस्वरायुषाम् । हितोवल्योगुरुस्त्रोष्णोवातघ्नः शुक्रमांसद ॥ हेमन्तकालेशिशिरे-वसन्तेसेव्य हिमायूरसुशन्तिमासम् । उष्णोहिवर्हिविषभोजनेश्ववर्षाशर-द्ग्रीष्मसुखंच्चपथ्य ॥ एतन्मासमे-रण्डतैलभृष्ट विषतुल्यम् ॥ वर्हिचूडाख्यौषधौ । खराश्वायाम् । का-रव्याम् ॥ अपामार्गे ॥ मिनातिरो गम् । मीञ्हिंसायाम् । मिनाते-रूरन् ॥ यद्दा । मयते । मयगतौ । खजादित्वादूर ॥ मह्यांरौतिवा । अन्येभ्योपोतिड । पृषोदरादि ॥

मयूरक । पुं० अपामार्गे ॥ मयूरे ॥ मयूरशिखायाम् ॥ न०तुत्याञ्जने ॥

मयूरप्रतिकृति ॥ कन् ॥ मयूर कायतिवासादृश्येन । कै० । आ-तद्वृतिक ॥

मयूरग्रीवकम् । न० तुत्थे ॥

मयूरग्रीवा । स्त्री० तुत्थे ॥

मयूरचटक । पुं० गृहकुक्कुटे ॥

मयूरचूडम् । न० स्थौणेयके ॥

मयूरचूडा । स्त्री० मयूरशिखायाम् ॥

मयूरजङ्घ । पु० श्योनाके ॥

मयूरतुत्थम् । न० तुत्थे ॥

मयूरपदकम् । न० स्तनादौनखाघाते ॥

मयूरविद्ला । स्त्री० अम्बष्ठायाम् ॥

मयूरशिखा । स्त्री० वर्हिचूडायाम् । शिखिन्याम् । शिखावलाख्यक्षुपे ॥ मयूराह्वाशिखाप्रोक्तासहस्राङ्घ्रिर्मरुच्छदा । नीलकण्ठशिखालक्ष्मीपित्तश्लेष्मातिसारजित् ॥

मयूरका । स्त्री० अम्बष्ठायाम् ॥

मयूरी । स्त्री० मयूरस्त्रीजातौ । मोर-णी०इतिभाषा ॥

मरक । पु० मार्याम् । मारके । मारी०इतिभाषाप्रसिद्धेमरणे ॥ तस्यकारणादियथा । यावन्मार्तण्डसूनुर्गविधनुषिभषेमन्मथेवास्ति-नार्यांतावद्दुर्भिक्षपीडाभवतिचम रकसंशयंयातिलोका । हाहाकारातथोर्वीमनुजभयकरीफेरुरावैश्च भीमैः शून्यग्रामाभवेयुर्नरपतिर-हिताभूरिकङ्कालमाला ॥ वक्रचारी

तिरविजोधरणीसुतोवामूलर्चश्चस्त-
मघरेवतिमैत्रभेषु । छचोपभङ्गप
तनानिवसैनिकानासवंचलोकम
रथजलधौतदेश ॥ ( ०*० )
मासाभ्यौनिसमादायश्मशानाद्गृह
वायसा । श्वाशृगालोथवामध्ये
पुरस्यप्रविशन्तिचेत् ॥ विकिर
न्तिगृहाद्दौचश्मशानसामग्रीभवेत्
। चोरैणहन्यतेलोक परचक्रस
मागम ॥ सङ्ग्रामश्चमहाघोरो
दुर्भिक्षमरकंतथा । अद्भुतानि
प्रसूयन्ते तस्यदेशस्यविद्रव ॥ दे
वीमाहात्म्यपाठेनभैरवस्यस्तवेनच
। चत्रशान्तिर्भवेन्नूनंतुलस्याविष्णु
पूजनात् ॥

मरकतम् । न॰ हरिद्वर्णमणिवि
शेषे । गारुत्मते । अश्मगर्भे-
। हरिन्मणौ । पन्ना॰ द्रू॰ सा
धारणलोकभाषाप्रसिद्धे ॥ अस्य
लक्षणंयथा ॥ स्वच्छंस्वच्छायस्नि
ग्धगात्रंचमार्दवसमेतम् । अव्य
ङ्गंबहुरङ्गंशृङ्गारीमरकतंशुभंबिभृ
यात् ॥ कुलक्षणंयथा । शर्करि
लकलिलरूक्षमलिनलघुहीनकान्ति
कल्माषम् । त्रासयुतंविकृताङ्गं
मरकतममरोपिनोपभुञ्जीत ॥ प
रीक्षादिकन्त्वन्यत्रद्रष्टव्यम् ॥ म
रकतरत्नमनेन । तु॰ । अ-
न्यत्रापीतिच ॥

मरकतपत्रिका । स्त्री॰ )
मरकतपत्री । स्त्री॰ पाच्याम् ॥
मरक्तम । न॰ मरकतमणौ ॥
मरणम् । न॰ वत्सनाभविषे ॥ प
ञ्चतायाम् । कालधर्मे । दिष्टा
न्ते । निधने । मृत्यौ ॥ मर
णंचेच्छयाकामदु खितोपिनवा
ञ्छति । रोगग्रस्तोपिदीनोपिन-
मुमूर्षतिकश्चनेतिभागवतम् ॥ अ-
पिच । मरणंत्वृषिभि प्रोक्त सङ्क
रैमङ्गलास्पदम् । यत्तत्समान
बलयोर्योधयोर्युध्यतो किलेति ॥
अनुष्ठानासमर्थस्यवानप्रस्थस्यजीर्य
त । भृग्वग्निजलसम्पातैर्मरण
मनुविधीयते ॥ न्यायमतेन॰ वि
जातीयात्ममन सयोगध्वंसे ॥
उपात्तानांपूर्वासांनिकायविशिष्टा-
नादेहेन्द्रियमनोबुद्ध्यहङ्कारबुद्धिवेद
नानांपरित्यागे ॥ नत्वात्मनोपि
नाश तस्यकूटत्वात ॥ मरण-
प्राणविच्छेदोनतुनाश सतोम
त । मृत्युप्राणत्यागइत्युक्त स्व
यनष्ट'कथंत्यजेत् ॥ मृङोल्युट्
॥ लग्नाष्टमभवने ॥

मरत. । पु॰ मरणे ॥ म्रियते।
मृङ्प्राणत्यागे । भृमृदृशियजिप
र्विपच्यमितमिनमिहर्यिभ्योऽतच् ॥

मरन्द । पु॰ )

मरन्दक पु॰ ) मकरन्दे ॥

मरहट्टा । पु॰ मात्राहत्तप्रभेदे ॥ यथा । यादौकुरुषट्कलमथचतुष्कलप्र स्तानन्दमितोपि॰दशवसुकादश भवतिवशमधिकशुभामवलोपि । वि शतिनवसङ्ख्यभणितसुमुख्यन म्दितगुणगणकोटिमरहट्टावृत्तकि लजयकृतत्तेकृतरिपुविनतकरोटि ॥ यथा । अभिमतधनदातासिवि धिधाताजगदन्तरगतशील॰दुरितद्रु मदाहीविश्वविगाहीकल्पत्रयकृत खेल॰भुवनत्रयवदितहरशिरसिस्थि रवास॰दहदुतवहपापदेहिदुरापथ मुक्ततिमिरविलास ॥

मरालालो । स्त्री॰ हस्तिकाल्याम् ॥

मराल । पु॰ राजहंसे ॥ कारण्डवे ॥ कज्जले ॥ वारिवाहे ॥ तुरङ्गमे ॥ दाडिमीविपिने ॥ त्रि॰ खले ॥ त्रि॰ मसृणे ॥

मरालक । पु॰ कलहंसे ॥

मरिचम् । न॰ कोलके । कृष्णे । ऊषणे । धर्मपत्तने । कालीमिरच॰ इतिभाषा॰ । मरिचकटुकं तीक्ष्णं दीपनकफवातजित् । उष्णं पित्तहरंरूक्षंश्वासशूलकृमीन्हरेत् ॥ तदार्द्रं मधुरपाकिनात्युष्णं कटुकगुरु । किञ्चित्तीक्ष्णगुणं श्लेष्मप्रसेकिस्यादपित्तलम् ॥ म्रियतेविषमनेन । मृङ्प्राणत्यागे । बाहुलका दिच ॥ कक्कोलि ॥ पु॰ मरुवक वृक्षे ॥

मरिचपत्रक । पु॰ अजकर्णे । सालतरौ प्रभेदे ॥

मरिमा । पु॰ मृत्यौ ॥ म्रियते । मृङ्॰ । जनिमृङ्भ्यामिमनिच् ॥

मरिष्यमाण । त्रि॰ आसन्नमरणे ॥

मरीचम् । न॰ वेल्लजे । मरिचे । कृष्णमरिच॰ इ॰ भा॰ ॥ म्रियतेविषमनेन । मृङ्॰ । बाहुलकादीच ॥

मरीचि । पु॰ ब्रह्मणोज्येष्ठमानसपुत्रे॰ मुनिविशेषे ॥ प्रजापतौ ॥ मरुतामध्येभगवद्विभूतौ ॥ पु॰ स्त्री॰ चन्द्रसूर्ययोः किरणे । गभस्तौ ॥ षट्त्रसरेणुपरिमाणे॰ इति वैद्याः । म्रियतेतमोऽस्मिन् । मृकणिभ्यामीचि ॥ त्रि॰कृपणे ॥

मरीचिका । स्त्री॰ मृगतृष्णायाम् ॥ ग्रीष्मे मरुदेशसिकतादावर्ककरा प्रतिफलिता दूरस्थानाज्जलत्वेना- भाति॰तद्वाचिकामृगतृष्णिकेति॰ टीकाकार ॥ मरीचिरिव । इवे- प्रतिकृताविति कन् ॥

मरीचिप । पु॰ तपोविशेषाख्ये- तिसज्ञे तापसान्तरे ॥ चद्रिकापायिनि ॥

मरु । पु॰ गिरौ । पर्वते ॥ धन्वनि । दुग्गरके । निरुदकदेशे । मारवाड॰ इ॰ भाषा ॥ गुर्जरातपूर्वभागेतुद्वारिकातोहिदक्षिणे । म

रुदेशीमवैशाभिडग्रोत्पत्तिपरायण ।। म्रियन्तेप्राणिनोच । मृङ्० । भ्रमृशीभ्य् ' ॥ मरुवकाव्रती ॥ सूर्य वंशीयभाविनृपविशेषे ॥

मरुक । पुं० मृगविशेषे ॥ मयूरे ॥

मरुकान्तारम् । न० रामबाणेनशोषि तेदेशविशेषे ॥ आफ्रिका० इ० इ ङ्ग्लभा० ॥

मरुज । पुं० नखीनामगन्धद्रव्ये व्याघ्रनखाख्ये ॥ त्रि० मरुदेशजा ते ॥

मरुजा । स्त्री० मृगेर्वारौ ॥

मरुटा । स्त्री० )

मरुण्डा । स्त्री० )उच्चललाटायामस्त्रि याम् ॥

मरुत् । पुं० समीरे । वायौ ॥ म्रियते ऽनेन० हृदेन० विनावा । मृङ्० । मृग्रोरुति ॥ देवे । सुरे ॥ सप्तस प्तकेगणे ॥ मरुवके । न० ग्रन्थिप र्णे ॥ स्त्री० पृक्कायाम् ॥ मरुदग्नि प्रदीप्तकृत्स्तिक्तोष्णा पित्तलोलघु । वृश्चिकादिविषश्लेष्मवातकुष्ठकृमि प्रणुत् ॥

मरुत । पुं० वायौ ॥ अव्युत्पन्नोयम् । मरुत स्पर्शन प्राणइतिविक्र मादित्यादिकोषात् । कोयबातिस दाक्षिणात्यमरुतइतिकविराज ॥ घण्टापाटलिवृक्षे ॥

मरुत्कर । पुं० राजमाषे ॥

मरुत्त । त्रि० वायुविशिष्टे । मरुत सन्त्यत्र । तप्पर्वमरुद्भ्यामितितप् ॥ चन्द्रवंशीयनृपविशेषे ॥

मरुत्तक । पुं० मरुवके ॥

मरुत्पथ । पुं० आकाशे ॥

मरुत्पुत्र । पुं० हनुमति ॥ भीमसेने ॥ मरुत वायो पुत्र ॥

मरुत्प्लव । पुं० कण्ठीरवे । सिंहे ॥

मरुत्फलम् । न० घनोपले ॥

मरुत्वान् । पुं० इन्द्र । शचीपतौ ॥ मरुतोदेवता सन्त्यस्य । मतुप् । झयइतिवत्वम् । तसौमत्वर्थइतिभ त्वाज्जश्त्वाभाव ॥

मरुत्वतीयम् । न० मरुत्वत्ये हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवीशु नासीरमरुत्वदग्नीषोमवास्तोष्पति गृहमेधाच्छचेति० छ० ॥

मरुत्वत्यम् । न० मरुत्वतीये० हविषि ॥ मरुत्वान्देवतास्य । द्यावापृथिवी त्यत्रस्यचकारात्०यत् ॥

मरुत्सख । पुं० इन्द्रे ॥ अग्नौ ॥

मरुदान्दोल । पुं० धवित्रे ॥

मरुदिष्ट । पुं० गुग्गुलौ ॥

मरुद्गण । पुं० आवहप्रवाहादिवायु समूहे ॥

मरुद्रुमम् । न० वाततूले । ग्रीष्मह्रा से । बुढियाकासूत० इ० भा० ॥

मरुद्भवा । स्त्री० ताम्रमूलाक्षुपे । खि राइ इ० गौ० दे० भा० ॥

मरुद्रथ । पुं॰ अश्वे । देवरथे ॥

मरुद्द्रुम । पु॰ विट्खदिरे । अरिमेदे ॥

मरुद्वर्त्म । न॰ आकाशे ॥

मरुद्वाह । पु॰ धूमे ॥ वह्नौ ॥

मरुद्विप । पु॰ उष्ट्रे ॥

मरुन्माला । स्त्री॰ पृक्कायाम् ॥ मरुद्भिर्म्लायते । मलधारणे । घञ् ॥

मरुप्रिय । पु॰ उष्ट्रे ॥ मरुदेशविशेष प्रियोऽस्य ॥

मरुभू । स्त्री॰ दशेरकेमारवाड॰ इ॰ प्र॰ ॥ निर्जलदेशे ॥

मरुभूरुह । पु॰ करीरवृक्षे ॥

मरुल । पु॰ कारण्डवपक्षिणि ॥

मरुला । स्त्री॰ केरलदेशप्रसिद्धाया नद्याम् ॥

मरुव । पु॰ मरुवके ॥

मरुवक । पु॰ समीरणे । प्रस्थपुष्पे । फणिज्झके मरुवा॰ इ॰ भा॰ प्र॰पुष्पे ॥ पिण्डीतके । श्वसने । करहाटके । मदनद्रुमे । मयनफल इ॰ भाषा ॥ मरु वाति । वा॰ । कृन्शिल्पिसञ्ज्ञयो ॥ व्याघ्रे ॥ राहौ ॥ खरपत्रे । नागदौना॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ क्षुपविशेषे ॥ त्रि॰ भयानके ॥

मरुसम्भवम् । न॰ चाणक्यमूलके ॥

मरुसम्भवा । स्त्री॰ महेन्द्रवारुण्याम् ॥ क्षुद्रदुरालभायाम् ॥

मरुस्था । स्त्री॰ क्षुद्रदुरालभायाम् ॥

मरूक । पु॰ मृगविशेषे ॥ मयूरे ॥ मर्त्ये ॥ मारयति॰ म्रियतेवा । मृङ्॰ । मृकणिभ्यामूकोकणावित्यूक ॥

मरूद्भवा । स्त्री॰ कार्पास्याम् ॥ यवासे । क्षुद्रखदिरे ॥

मरोलि । पु॰ मकरे । असिदंष्ट्रके । मगर॰ इ॰ भा॰ प्र॰ यादसि ॥

मरोलिक । पु॰ मकरे ॥

मर्क । पु॰ देहे । शरीरे ॥ वानरे ॥ वायौ ॥ मर्चति॰ मर्चयतिवा । मर्चिं सौत्रोधातुरितिवृत्त । मर्चशब्दे॰ चौरादिकइति॰ मिद्धोन्यात्सूत्रेकैयट । इणभीकापाशल्यतिमर्चिभ्य कन् । नचैवणिलोपस्यासिद्धत्वात्॰ कुत्वनस्यादितिवाच्यम्॰ पूर्वत्रासिद्धे तदभावात् ॥

मर्कक । पुं॰ गलेगण्डखगे । हाडगिल॰ इ॰ गौ॰ दे॰ भा॰ ॥

मर्कट । पु॰ वानरे ॥ लूतायाम् ॥ ऊर्णनाभे ॥ स्त्रीकरणान्तरे ॥ गलेगण्डे । हाडगिल॰ इ॰ भा॰ प्र॰ खगे ॥ मर्कति । मर्क सौत्रोधातुर्ग्रहणे । शकादिभ्योऽटन् ॥ स्थावरविषभेदे ॥

मर्कटक । पुं॰ शस्यप्रभेदे ॥ वानरे॥ लूतायाम् ॥ मत्स्यविशेषे॥ दैत्यवि

शेषे ॥ सञ्ज्ञायांकन् ॥

मर्कटतिन्दुक । पु० कुपीलौ ।

मर्कटपिप्पली । स्त्री० अपामार्गे ॥

मर्कटप्रिय । पु० क्षीरवृक्षे ॥

मर्कटवास । पु० आशावर्त्ते ॥ लूतातन्तौ । मकडीकाजाल० इ० भा० ॥

मर्कटशीर्षम् । न० हिङ्गुले ॥

मर्कटास्यम् । न० ताम्रे ॥ वानरमुखे ॥ पु० म्लेच्छविशेषे ॥ त्रि० वानरमुखसदृशमुखविशिष्टे ॥

मर्कटी । स्त्री० करञ्जप्रभेदे । मकडाकरैंजुवा० इ० भा० ॥ शूकशिम्ब्याम् ॥ मर्कटीवविविधचेष्टाहेतुत्वात् । अजमोदायाम् ॥ अपामार्गे ॥ वानर्याम् ॥ गौरादित्वान्ङीष् ॥

मर्कटेन्दु । पु० काकतिन्दुके ॥

मर्कर । पु० भृङ्गराजे ॥

मर्करा । स्त्री० निष्फलायाम् ॥ दर्य्याम् ॥ सुरङ्गायाम् ॥ भाण्डे ॥

मर्ज्जू । पु० धावके । रजके ॥ पीठमर्द्दे । स्त्री० शुद्धौ । मार्ष्टि । मृजूशुद्धौ । मृजेर्गुणश्चेत्यू ॥ मार्जनवा ॥

मर्त्त । पु० मर्त्यलोके ॥ मानुषे ॥ म्रियन्तेऽत्र । मृङ० । हसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्निति तन् ॥

मर्त्य । पु० मनुष्ये ॥ म्रियते । मृङ० । हसिमृग्रिणितन् । तत स्वार्थेयत् । प्राक्प्रवोधात्० सर्वोहिमर्त्य ॥ मध्यलोके ॥ म्रियन्तेऽत्रेतिमर्त्य । हसिमृग्रिणि० मृङ्धातोस्तन्० मर्त्त । ततोनवसूरमर्त्तयविष्ठेभ्य स्वार्थेयत् ॥ मर्त्ते भवोवा । दिगादेराकृतिगणत्वाद्यत् ॥

मर्त्यमुख । पु० यक्षे ॥

मर्त्या । स्त्री० मानुषस्त्रियाम् ॥

मर्त्येन्द्रा । स्त्री० मातरि ॥ अग्निदमन्याम् ॥ राजमातरि ॥

मर्द्दनम् । न० अङ्गस्यमर्द्दने । पादमर्द्दनादौ । संवाहने ॥ मृदक्षोदे । ल्युट् । कदने ॥ चूर्णने० । त्रि० मर्दयितरि ॥ मर्दयति । मृदक्षोदे० मृदमर्दनेवा । हेतुमण्णिजन्तात्कर्त्तरिल्युट्।बहुलमन्यत्रापीतियुक्त्वा ॥

मर्द्दल । पु० वाद्यप्रभेदे ॥ मर्दलोमादल इति० नेपालेख्यातो० मृदङ्गसजातीय ॥ मर्दमुपमर्दंलाति०। ला० । आतइतिक ॥

मर्द्दित । त्रि० चूर्णिते ॥ ग्रन्थिते ॥

मर्द्दिता । त्रि० मर्द्दिनि ॥

मर्द्दी । त्रि ० मर्द्दितरि ॥

मर्म्मकील । पु० भर्त्तरि ॥

मर्म्मज्ञ । त्रि० मर्मविदि । तत्त्वज्ञे ॥

मर्म्म । न० स्वरूपे । तत्त्वे ॥ यथा ।

मृगयानविगीयतैन्द्रपैरपिधर्मागम मर्म्मपारगे । स्मरसुन्दरमायद-त्यजलवधर्मं सद्योदयोज्ज्वला ॥ सन्धिस्थाने ॥ जीवस्थाने ॥ परन्ते-बेगावरत्नीनवावशीतकश्चित् । मसवसीत्सूतकेवनकवैममैणिस्पृ-शेत् ॥ अरुषि ॥

मर्म्मर । पु॰ वस्त्रविशेषे ॥ शुष्कप र्णध्वनौ ॥ वस्त्रपर्णानास्वनिते । मरमरमरडमरड्॰ इतिवभाषा ॥ ममैराति । रा॰ क ॥ अनुकरण-शब्दोवा ॥

मर्म्मरी । स्त्री॰ पीतदारुणि ॥

मर्म्मरीक । त्रि॰ दीनजने ॥ म्रियते । मृङ्॰ । पर्फरीकादित्वादीकन्॰धा तोर्हिस्वंरुक्चाभ्यासस्य ॥

मर्म्मवित् । पु॰ मर्म्मज्ञे । कार्पटि-के ॥

मर्म्मवेदी । पु॰ मर्मविदि ॥

मर्म्मस्पृक् । त्रि॰ मर्मपीडके । अरु-न्तुदे ॥ मर्म्मस्पृशति। स्पृशउपता पे । स्पृशोऽनुदकइति॰ क्विन् ॥

मर्म्माविद्॰ । त्रि॰ सन्धिस्थानवेधक र्त्तरि ॥ मर्म्मज्ञे ॥ मर्म्माणिविध्य ति । व्यधताडने । क्विप् । ग्रहिज्ये तिसम्प्रसारणम् । नहिवृतीतिदी-र्घं ॥

मर्म्मिक । त्रि॰ मर्मज्ञे ॥

मर्म्मुर । पु॰ तुषानले ।

मर्त्त्य । पु॰ मरणधर्म्मणि । मनु-ष्ये ॥

मर्य्या । अ॰ सीमायाम् ॥

मर्य्यादा । स्त्री॰ सीमनि । अवधौ । तेनविनेत्यर्थे ॥ स्थितौ । धारणा-याम् । सत्पथस्थितौ ॥ अनुल्लङ्घनी यायाव्यवस्थायाम् ॥ स्थित्यनतिक्र मे ॥ कुलभूमौ ॥ मर्येतिसीमार्थेऽ-व्ययम् । तन्नदीयते । डुदाञ्॰ । आतश्चोपसर्गेकृत्यङ् ॥

मर्ष । पु॰ क्षान्तौ ॥ मर्षणम् । मृ-षतितिक्षायाम् ॥ घञ् ॥

मर्षणम् । न॰ अपराधेसत्यपिकोपा नाविष्करणे । क्षमायाम् । मृष॰ भ।वेल्युट् ॥

मर्षित । त्रि॰ क्षान्तियुक्ते ॥ मृषे कर्त्तरिक्त । भावेक्तेक्लीबम् ॥

मर्षितवान् । त्रि॰ क्षान्ते ॥ मृषे कर्त्तरिक्तवतु ॥

मर्षी । त्रि॰ क्षमाशीले ।

मल । पु॰ न॰ पापे । किल्बिषे ॥ विशि । विष्ठायाम् । यथा । मला यत्त बलपुसाशुक्रायत्तन्तुजीवनम् । तस्माद्यत्ने नतरक्षेत्यच्छिमोमलरे-तसीइति ॥ किट्टे । मण्डूरादौ ॥ स्वेदादौ ॥ वसाशुक्रमसृङ्मज्जामू-त्रविट्कर्णविण्नखा । श्लेष्माश्रुदू षिकास्वेदोद्वादशैतेनृणामला ॥ वातादिषु ॥ यथा । शरीरदूषणाद्दो

षामलिनीकरणान्मला । धारणा
द्वातवस्तेषु वातपित्तकफास्त्रय ॥
सर्वेषामेवरोगाणानिदानकुपिता-
मला । तत्प्रकोपस्यतुप्रोक्त विवि-
धाहितसेवनम् । हरेद्वसन्तेश्लेष्माण
पित्त शरदिनिर्हरेत् बषासुशमये
द्वायुप्राग्विकारसमुच्छ्रयात् ॥ अत्र-
विशेषमाहमाधव · कफपित्तानि
ला पूर्वमध्यान्तेषुव्यवस्थिता ।
देहाहोराचिवयसासम्बिष्वपिकफा
निलाविति ॥ अस्यार्थ । कफपि-
त्तानिला देहाहोराचिवयसापूर्व
मध्यान्तेषुयथासङ्ख्यव्यवस्थिता ।
देहस्यपूर्वभागेशिरआरभ्यवक्षोन्ते-
कफोव्यवस्थित । मध्येआमाशय-
मारभ्यनाभ्यन्ते पित्त व्यवस्थितम् ।
अन्तेनाभ्यधोभागेवायुर्व्यवस्थित
। शिरोमूलत्वात्देहस्येवपूर्वादिक
ल्पना । अह्नस्त्रिधाविभक्तस्यपूर्व-
भागेकफोमध्ये पित्तमन्ते वायु ।
एवराचेरपिवयसोपिपूर्वभागेवाल्या
वस्थायाश्लेष्मामध्ये तरुणावस्थाया-
पित्तम्अन्ते वृद्धावस्थायावायु ।
सम्बिष्विति । देहाहोराचिवयसा-
मित्येव । तत्रदेहस्यपूर्वभागमध्य
भागयो सन्धौकफोव्यवस्थित म
ध्यभागान्त्यभागयो सन्धौपक्वाश-
याख्योवायु एतच्चयथासङ्ख्यमि
त्यतोलभ्यते । अह सन्धौराल्या-
साकमह सन्धि प्रात सञ्ज्ञक
स्तस्मिन्कफ । अह्नासाकराचे
सन्धि सायतस्मिन्वात । वय
सन्धौबाल्यतारुण्ययो सन्धौश्लेष्मा
तारुण्यवृद्धत्वयो सन्धौवायुरिति
॥ मृज्यतेऽसौ । मृजूशुद्धौ । मृजेष्टि
लोपश्चेतिकल ॥ मलयति । मल
तत्कृतौ॰ अदन्त । मलेवा ।
मलधारणे । पचाद्यच् ॥ कर्पूरे ॥
त्रि॰ कृपणे । कदर्य्ये ॥
मलघ्न । पु॰ शाल्मलीकन्दे ॥ त्रि॰
मलनाशके ॥
मलघ्नी । स्त्री॰ नागदमन्याम् ॥
मलजम् । न॰ पूये ॥ त्रि॰ मलोद्भवे ॥
मलदूषित । त्रि॰ मलिने ॥ मलेनदू
षित । कर्तृकरणेकृतिसमास ॥
मलद्रावी । पु॰ जयपाले ॥
मलधी । पु॰ कामिनि ॥
मलन । पु॰ पटवासे । अंशुकालये
॥ न॰ मर्द्दने । पीडना॰ मलना॰
बू॰ भा॰ ॥
मलपूः । स्त्री॰ काकोदुम्बरिकाया-
म् । मलयूस्तम्भकृत्तिक्ताशीतला
तुबराजयेत् । कफपित्तव्रणश्वित्रकु
ष्ठपाण्डुर्शकामला ॥ मलात्पापा
त् । पुनाति । पूञ्पवने । क्विप् ॥
मलभुक । पु॰ काके ॥
मलभेदिनी । स्त्री॰ कटुकायाम् ॥
मलमास । पुं॰ अधिमासे । मलि

स्तुषं ॥ यस्मिन् मासेनसङ्क्रान्ति सङ्क्रान्तिद्वयमेववा । मलमास सविज्ञेयोमासस्त्रि यसमोभवेत् ॥ गर्गस्तु । अमावास्याद्वय यत्ररवि सङ्क्रान्तिवर्ज्जितम् । मलमास सविज्ञेयोमास शुद्धाव्यउत्तर ॥ तथाचब्रह्मसिद्धान्ते । चान्द्रोमासो- ह्यसङ्क्रान्तोमलमास प्रकीर्त्ति- त ॥ सत्यव्रतस्तु । राशिद्वय यत्र मासिसङ्क्रमेतद्दिवाकर । नाधि मासोभवेदेवमलमासस्तुकेवलम् ॥ एकचमासद्वितय यद्दिखाखर्षेऽधि- कतश्चपरोऽधिमास : । अथोदशस्तु श्रुतिराहमास चतुर्दश क्वापिनचा- स्तिदृष्टम् ॥ अथ मासश्चान्द्रएवन- सौर । अस्तिचयोदशोमास सच शुख्यानिगद्यते । असौचान्द्रोनसौ र.स्याद्मास्तिसौरस्त्रयोदश ॥

मलमासत्वम् । न॰ रविसङ्क्रान्त्य भावविशिष्टचान्द्रमासत्वे ॥

मलय । पु॰ ऋष्यमूकप्रदेशान्तरे स्वनाम्नाप्रसिद्धेऽद्रिविशेषे । भाषा ढे । दक्षिणाचले । चन्दनाद्रौ क्तमालातास्रपर्णीप्रमुखामलयो- द्भवा ॥ शैलाङ्गे ॥ देशविशेषे । मलवार॰द्रू॰भा॰ ॥ आरामे न- न्दनवने ॥ अष्टादशोपद्वीपान्तर्ग- तद्वीपविशेषे ॥ मलते । मलधार- णे । अलिमलितनिश्य कयन् ॥

ऋषभदेवस्यपत्नमेपुत्रे ॥

मलयगन्धिनी । स्त्री॰ उमाया सखी विशेषे ॥

मलयज । पु॰ राहुग्रहे ॥ पु॰न॰ चन्दने ॥ मलयेजात । सप्तम्याज मेङ ॥

मलया । स्त्री॰ त्रिवृतायामोषधौ ॥

मलयाचल । पु॰ सह्याद्रिसमीप- स्थे॰शैलविशेषे । दक्षिणाचले ॥ सतांमिसेव्योहिमवान भोगिनाम- लयाचल ॥

मलयानिल । पु॰ वासन्ते । वसन्त कालिकवायौ ॥

मलयाल । पु॰ देशविशेषे ॥ यथा। सुराम्बिकांसमारभ्यमलयाद्यन्तग- शिवे । मलयालाभिधोदेशोजल्पसि द्धिप्रदर्शक . ॥

मलयू । स्त्री॰ मलय्वाम् । काकोदु म्बरिकायाम् ॥ मल यवति । युज् गुप्सायाम् । क्षिप् । बाहुलका- द्दीर्घ ॥ यद्वा । मलते । मलधा- रणे । बाहुलकादयू ॥

मलयोद्भवम् । न॰ चन्दने ॥

मलवर्म । न॰ गुदे ॥

मलविलासिनी । स्त्री॰शङ्खपुष्प्या म् ॥

मलहन्ता । पु॰ शाल्मलीकन्दे ॥

मला । स्त्री॰ भूम्यामलक्याम ॥

मलाका । स्त्री॰ दूत्याम् ॥ कामिन्या

म् ॥ हस्तिन्याम् ॥

मलापकर्षणम् । न० पापमोचने ॥ मलस्यदूरीकरणे ॥

मलापहा । स्त्री० नदीविशेषे ॥ यथा। मलापहाभीमरथीचघट्टगायथाचक्राख्याजलसाम्यगागुणे । मलापहाघट्टगयोस्तथापिपथ्य लघुत्वादुत्तरमुक्तान्विदम् ॥

मलावहम् । न० मलिनीकरणे । पापविशेषे ॥ यथा । कृमिकीटवयोहत्यामद्यानुगतभोजनम् । फलेध. कुसुमस्तेयमधैर्यंञ्चमलावहम् ॥

मलारि । पु० सर्वक्षारे । साबन० बु० भा० ॥

मलिनम् । न० दोषे ॥ टङ्कणे । घोले ॥ त्रि० मलयुक्तेवस्तुनि । मलीमसे । कच्चरे । मलदूषिते ॥ यथा । यथाभवतिबालानागगन मलिन मलं । तथाभवत्यबुद्धानामात्मापिमलिनीमलैरिति ॥ मलैः क्लिष्टकर्मफलैरात्मा । अन्यच्च लेघैर्नरजोधूमादिभिराकाशबृत्त्य यं ॥ नित्यनैमित्तिकक्रियात्यागिनि ॥ कृष्णे ॥ दूषिते ॥ मलोस्यास्ति । ज्योत्स्नातमिस्रेतिसाधु ॥ यथा । मलते । मल० । बहुलमन्यत्रापीतीनच् ।

मलिनमुख । पु० वन्हौ ॥ गोलाङ्गूले० मृगे ॥ प्रेते ॥ त्रि० क्रूरे

। खले ॥

मलिनात्मा । पु० कृष्णदेहे ॥ दुष्टचित्ते ॥ नपरिचयोमलिनात्मना प्रधानम् ॥

मलिनाम्बु । न० मस्याम् ॥

मलिनास्य । त्रि० खले ॥

मलिनिमा । पु० कृष्णत्वे ॥ मलिनत्वे ॥ मलिनस्वभाव । इमनिच् ।

मलिनी । स्त्री० रजस्वलायांनार्याम् । ऋतुमत्याम् ॥ मलोऽस्त्यस्या । अतइनिठनौ ।

मलिनीकरणम् । न० मलावहे ॥

मलिम्लुच । पुं० मलमासे ॥ यथा । तमतिक्रम्यतुरविर्यदागच्छेत् कथञ्चन । आद्योमलिम्लुचोज्ञेयो द्वितीय प्रकृत स्मृत ॥ यद्वा दर्शान्तमासमतिक्रम्यतत्पूर्वमासा न्त्यचणात्तत्तिराशिस्थ' सन्सूर्योऽतिवाह्यगच्छेत् मासान्तरे राश्यन्तरसयोग गच्छेत्० तदाआद्योऽतिक्रान्तमासोमलिम्लुचोज्ञेय ।मलो सन्म्लोचति० गच्छतीति० मलिम्लुच । द्वितीयस्तुप्रकृत शुभकर्मार्हत्वात् ॥ चौरे ॥ ज्वलने ॥ वाते ॥ मत्स्यर्ते । मल० । कृच् । मलि धृत म्लोचति । म्लुच स्तेये । मूलविभुजादित्वात्क ॥

मलिष्ठा । स्त्री० ऋतुमत्यानार्याम् ॥

मलीमस । पु॰ पुष्पकासीसे ॥ लौहे ॥ मलिने ॥ मलोऽस्यास्ति । ज्योत्स्नातमिस्रेतिसाधु ॥

मलूक । पु॰ क्रमिविशेषे ॥

मल्ल । पु॰ पात्रे ॥ कपोले ॥ मत्स्यभेदे ॥ बलीयसि ॥ झल्ल । निच्छिवी । बाहुयोधिनि॰ मल्लितिनाम्नाप्रसिद्धे ॥ अयश्चव्रात्यात् क्षत्रियात्सवर्णायाजात । यथा ह्मनु । झल्लोमल्लश्चराजन्याद्व्रात्या न्निच्छिविरेवच । नटश्चकरणश्चैव खसोद्रविडएवच ॥ श्रुति ॥ देशविशेषे ॥ यथा । दशार्णानवराष्ट्रञ्चमल्ला शाल्ला युगन्धरा । श्रुति । विराटपर्वणि १ अध्याय ॥ वर्ण सङ्करजातिविशेषे । माल्ला॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥ अयञ्च॰ लेटात्तीवरकन्यायाजात । इ॰ ब्र॰ वै॰ पु॰ ॥ तन्त्रवाय्याकुन्दकाराज्जात । इ॰ प॰ पु॰ ॥ नियुद्धकुशलोमल्ल स्तद्वृत्तिस्तपरायण ॥

मल्लक । पु॰ दन्ते ॥ पुं॰ स्त्री॰ दूपाधारे ॥ कौशिकायाम । नारिकेलफलनिर्मितेचषके । नरेली॰ इ॰ भा॰ ॥ मल्लते । मल्लधारणे । णवु,ल् ॥

मल्लतूर्यम् । न॰ वाद्यविशेषे । महा-स्तने ॥

मल्लनाग । पु॰ अभ्रमातङ्गे ॥ वात्स्यायनमुनौ ॥ कामशास्त्रविशेषे ॥ लेखहारे ॥

मल्लभू । स्त्री॰ मल्लभूमौ ॥

मल्लभूमि । स्त्री॰ रङ्गभूमौ । अखबाटे । अखाडा॰ इ॰ भा॰ ॥ देशविशेषे ॥

मल्लयात्रा । स्त्री॰ माल्लव्याम् । मल्लानायुद्धार्थंप्रयाणे ॥

मल्लयुद्धम् । न॰ नियुद्धे । बाहुयुद्धे । मल्लानासङ्ग्रामे ॥

मल्ला । स्त्री॰ नार्याम् ॥ पत्रवल्ल्याम् ॥ मल्लिकायाम् ॥

मल्लार । पु॰ षट्त्रारागाणामध्येद्वितीयरागे ॥ मेघमल्लाररागश्चगानवर्षासुसर्वदा ॥

मल्लारी । स्त्री॰ वसन्तरागस्यरागिण्याम् ॥ यथा । आन्दोलिताचदेशाख्या । लोलाप्रथममञ्जरी । मल्लारीचेतिरागिण्योवसन्तस्यसदानुगा ॥ मेघरागस्यरागिण्याम् ।

मल्लि । पु॰ वर्त्तार्हद्विशेषे ॥ स्त्री॰ मल्लिकायाम् ॥ मल्लते । मल्ल॰ । सर्वधातुभ्यइन् ॥

मल्लिक । पु॰ मलिनचञ्चुचरणयुक्तेहंसविशेषे । किञ्चिद्धूसरवर्णैश्चञ्चुचरणैरुपलक्षितेहंसप्रभेदे ॥ मल्लते । मल्ल॰ । इन् । स्वार्थेक ॥

मल्लिका । स्त्री॰ तणशून्ये । भूपद्याम् ।

। शतभीरौ । वेल्लि॰ वेला॰ वेली॰ इ॰ प्र॰ पुष्पवृक्षे ॥ मल्लतेगन्ध॰ मल्लतेवा । मल्ल॰ । सर्वधातुभ्य इन् । वाङीष् । स्वार्थे कन् । ह्रस्व । टाप् ॥ मल्लिकोष्णालघुर्वृष्याति क्ताचकटुकाहरेत् । वातपित्तास्यदृग्व्याधिकुष्ठारुचिविषव्रणान् ॥ मीनविशेषे ॥ मृत्पात्रविशेषे ॥ पानपात्रे ॥ सवैय्यान्तर्गतवृत्तविशेषे ॥ यथा । अशेषगुणाधिकशोभनशोभन सौरभयुद्धविशुद्धयगते॰विधेहिवि धेहिविवेकनिधेहिपुरोजगणानिश सगलगौस्तुमते । विशोभियशोभिरु पेतितयेतिविनिर्मितमल्लिकयेशर- ते॰ निधहिनिधेहिमुदहृदयेसदये यशवन्तधराधिपते ॥ वर्णवृत्तान्तरे ॥ यथा । हारशङ्खक्रमेणमण्डिताष्ट वर्णकेन । वर्णिताकुतूहलेनमल्लिके पिङ्गलेन ॥ यथा । वेदवेदिबालखि ल्यनारदादिसंस्तुताय । अस्तुमेन ति सदैवतुभ्यमम्बुजप्रियाय ॥ भूपदीपुष्पे ॥ मल्लिकाया पुष्पम् । पुष्पमूलेषुवहुलमिति॰ अनुदात्ता देरञोऽणस्यलुप् । लुपियुक्तवत् ॥ वर्णपात्रे ॥ इ॰ श॰ माला ॥

मल्लिकाक्ष । पु॰ किञ्चिद्धूम्रवर्णैश्चञ्चु चरणैरुपलक्षितेहंसविशेषे ॥ शुक्लवर्णवेष्टितचक्षुर्द्वययुक्ताश्वे ॥ मल्लिकाकारमक्षियस्यशुक्लापाङ्गत्वात् । बहुव्रीहौसक्थ्यक्ष्णोरितिषच् ॥

मल्लिकाख्य । पुं॰ मल्लिकाख्याभिधे हंसे ॥

मल्लिकाख्या । स्त्री॰ मोहिन्याम् । त्रिपुरमालीतिगौडदेशप्रसिद्धपुष्पे ॥

मल्लिकागन्धम् । न॰ मल्लिकागुरुणि

मल्लिकापुष्प । पु॰ कुटजवृक्षे ॥ कवचवृक्षे । करुणालेबु॰ इ॰ गौ॰ दे॰ भा॰ ॥ खनामाप्रसिद्धपुष्पवृक्षे ॥

मल्लिगन्धि । न॰ मल्लिकागुरुणि ॥ मल्लिकापुष्पस्येवगन्धोयस्य । उपमानाच्चेति॰ इत् ॥

मल्लिपत्रम् । न॰ छत्राके ॥

मल्ली । स्त्री॰ मल्लिकायाम् ॥

मल्लीकर । त्रि॰ चौरे ॥

मल्लु । पु॰ भालूकी ॥

मवित । त्रि॰ बद्धे ॥

मशक । पु॰ कीटविशेषे । वक्रतुण्डे । सूच्यास्ये । रात्रिजागरदे । मच्छर॰ इतिभाषा ॥ तन्नाशकधूपोयथा । त्रिफलार्जुनपुष्पाणिभल्लातकशिरीषकम् । लाक्षासर्जरसश्चैवविडङ्गश्चैवगुग्गुलु एतैर्धूपैर्मक्षिकाणांमशकानांविनाशनम् ॥ क्षुद्ररोगविशेषे । मशा॰ इ॰ भा॰ प्रसिद्धे ॥ यथा । अवेदनस्थिरश्चैव यस्यगात्रेप्रदृश्यते । माषवत्कृष्णमुत्सन्नं मलिनमशकदिशेत् ॥ स्थिर

म०अचलम् ॥ अश्वचिकित्सायथा । चर्मकीलजतुमणिमशकास्तिलका लकान् । उत्कृत्यमर्स्त्रैर्णदहेत्क्षा राग्निभ्यामशेषत ॥ अपिच । ल शुनानान्तुचूर्णं रूपघर्षैमशकनाशन ॥ इति ॥

मशकी । पु० उदुम्बरहृक्षे ॥

मशहरी । स्त्री० चतुष्क्याम् । शयन तिरस्करिण्याम् ॥

मशुन । पु० कुक्कुरे ॥

मसनम् । न० सोमराजीवृक्षे ॥

मसरा । स्त्री० मसूरे ॥

मसार । ) पु० इन्द्रनील
मसारक । ) पु० मणौ ॥

मसि । स्त्री० लिपिप्रयोजनायाम् । पत्राञ्जने । मस्याम् ॥ मस्यति । मसीपरिणामे । इन् ॥ शेफालिका हृक्ष ॥

मसिकूपी । ) स्त्री० मस्या-
मसिधानम् । ) न० धा-
मसीधाना । ) स्त्री० रे ।
मसिकूपिकायाम्

मसिनम् । न० सपिण्डके ॥

मसिपण्य । पु० लेखके ॥

मसिप्रसू । स्त्री० मस्याधारे ॥ मस्या प्रसू ॥ लेखन्याम् ॥

मसिमणि । पु० मस्याधारे ॥

मसिवर्द्धनम् । न० रसगन्धे ॥

मसी । स्त्री० मेलायाम् । लिपिसाधन द्रव्ये । कालौ० इ०गौ०भा० । स्याही० इ० भाषा० ॥ शेफालिका हृक्षे । मस्यति । मसौ० । पचाद्यच् । गौरादित्वान् ङीष् ॥

मसीजलम् । न० मस्याम् ॥

मसीधानम् । न० मस्याधारे ॥

मसीधानी । स्त्री० मस्याधारे ॥

मसीना । स्त्री० खनामाख्यातैधान्ये । उमायाम् ॥

मसीश । पु० कायस्थे ॥ मस्याईश ॥

मसुर । पु० मसूरे । मङ्गल्यके ॥ मस्यति० मस्यतेवा । मसौ० । मसे रुरन् ॥ उपधायै ॥ मसुरा । स्त्री० वेश्यायाम् ॥ व्रीहिप्रभेदे ॥ टाप् ॥

मसुरी । स्त्री० पापरोगे । मसूर्याम् ॥

मसूर । पु० व्रीहिप्रभेदे । मङ्गल्यके ॥ मसूरोमधुरः पाकेसङ्ग्राही शीतलोलघुः । कफपित्तास्रजिद्रूक्षोवातलोज्वरनाशन ॥ मस्यति० मस्यतेवा । मसौ० । मसेरूरन्निति पाञ्चमिकऊरन् । उपधाने ॥

मसूरक । पु० उपबर्हविशेषे । चातुरे । चक्रगण्डौ । गोलवालिश्री मा०इ०भा० ॥ मसूरे ॥ स्वार्थे क ॥

मसूरविदला । स्त्री० कृष्णात्रिवृतायाम् ॥ मसूरवद्विदलमस्या ॥

मसूरा । स्त्री॰ मसूर॰ द्र॰ प्रसिद्धे व्रीहिभेदे । मङ्गल्यके ॥ वेश्यायाम् ॥ टाप् ॥

मसूरिका । स्त्री॰ कुट्टन्याम् ॥ मङ्गल्यके ॥ मसूरीरोगे । शीतलाख्यरोगे ॥ मसूराकृतिसस्थाना पिडका स्युर्मसूरिका ॥ अतीसारे ॥ मशहर्याम् ॥ यथोक्तं पाश्चेक्रियायोगसारे । दंशाश्च मशकाश्चैव वर्षाकाले निवारयेत् । मसूरिकाभिः प्राज्ञस्य मञ्चशायिनमुच्युतमिति ॥

मसूरी । स्त्री॰ पापरोगे । रक्तवट्याम् । शीतलाख्यरोगे ॥ चिह्नति ॥ रक्तचिह्नति ॥

मसृण । पु॰ सोमे ॥ त्रि॰ अकर्कशे । अकठिने ॥ स्निग्धे ॥ मस्यति । मसी॰ बाहुलकात्॰ ऋण ॥ यद्वा । समृच्छति । ऋगतौ ॥ पृषोदरादित्वात् ॥

मसृणा । स्त्री॰ उमायाम् । अतस्याम् ॥

मस्कर । पु॰ वेणौ । वंशे ॥ मस्करोऽनेनवा । मस्कगतौ । बाहुलकादर ॥ यद्वा । मङ्कते । मस्किमण्डने । अर । आगमशास्त्रस्यानित्यत्वान्नुम् । मस्करमस्करिणौ वेणुपरिव्राजकयोरिति सुट् ॥ रङ्ग्यन्वे ॥

मस्करी । पु॰ परिव्राजके । भिक्षौ । सन्यासिनि ॥ मस्कनम् । मस्कगतौ । बाहुलकादर । मस्करो ज्ञानमतिर्वाऽस्यास्ति । मस्करमस्करिणावितीनि ॥ यद्वा । मस्करो वेणुरस्यास्ति । इनि ॥ यद्वा । मा कृत कर्म निषिद्धं शीलमस्य । मस्करमस्करिणावितिसाधु ॥ यद्वा । मकुरइवशुद्धमन्तःकरणमस्यास्ति । प्राग्वन्निपातः ॥ यद्वा । मङ्कते । मकि॰ । बाहुलकादरः । आगमशास्त्रस्यानित्यत्वान्नुम् ॥ मकरो निधिभेदो वाऽस्यास्ति । पूर्ववन्निपातः ॥ चन्द्रे ॥

मस्तम् । न॰ मस्तके ॥ मस्यतेऽस्मिन् । मसी॰ । क्त ॥

मस्तक । पु॰ न॰ उत्तमाङ्गे । शिरसि । मूर्द्धनि ॥ स्वार्थे कन् ॥

मस्तकस्नेह । पु॰ शिरोमज्जनि ॥

मस्तकाख्य । पु॰ शिखरे ॥ वृक्षशिरसि ॥ मस्तकमित्याख्यायस्य ॥

मस्तदारु । न॰ देवदारुणि ॥

मस्तमूलकम् । न॰ शिरोधौ ॥

मस्तिष्कम् । न॰ गोर्दे । मस्तकस्थघृताकारस्नेहे ॥ मस्यते॰ मसन वा॰ । मसी॰ । क्विन् । मस्ति मस्कते । मस्कगतौ । पचाद्यच् । पृषोदरादि ॥

मस्तु । न॰ दधिभवमण्डे । दधिजले । तोड॰ इ॰ भाषा ॥ दध्नस्तु परियोभागोघन स्नेहसमन्वित । स सोऽकीसरइत्युक्तोदध्नोमण्डस्तुमस्त्विति ॥ मस्तुक्रमकहरलघु लघुभुक्का-

भिलाषकृत् । स्रोतोविशोधनम्ला दिवफतृष्णानिलापहम् । अनष्य-प्रीणनशीघ्र भिन्नत्तिमलसङ्ग्रहम्॥ अपिच । उष्णाऽम्ल रुचिपित्तदश्रम हरबल्य कषायसरभुक्तिच्छन्दकरतृ षोदरगदशोषार्शसानाशनम् । स्रोत शुद्धिकरकफानिलहरविष्टम्भ शूलापहम्पाण्डु श्वासविकारगुल्म शमनमस्तुप्रशस्त लघु ॥ मस्यते । मसी० । सितनीतितुन् ॥

मस्तुलुङ्ग । पु० मस्तकस्यघृताकार वर्णे । मस्तिष्के ॥

मस्तुलुङ्गक । पु० मस्तिष्के ॥

मह । पु० उत्सवे॥ तेजसि ॥ महिषे ॥ महनम् । महपूजायाम् । घञ् । सञ्ज्ञापूर्वकत्वाद्वृद्ध्यभाव । घोवा ॥ यद्वा । महति । अच् । यज्ञे ॥

महक । पु० बकुलामोदे । महक० ह० भा० ॥

महत् । न० राज्ये ॥

महान् । पु० ज्ञानक्रियाशक्तिमतिम हत्तत्त्वे । बुद्धितत्त्वे । अध्यवसाय लक्षणे ॥ यथा । सविकारात्प्रधा नात्तु महत्तत्त्व प्रजायते । महानि-तियत ख्यातिर्लोकानांजायतेस दा ॥ सर्वकार्यापेक्षयाऽधिकत्वात् कारणे० हिरण्यगर्भे । प्रथमजे ॥ दुर्गायाम्॥ महान्व्याप्यस्थितासर्वं महान्वाप्रकृतिर्मतेतिदेवीपुराणा-त् ॥ उष्ट्रे ॥ नवधाभक्तियुक्ताशीक्त-भक्ते० शिवशेषधर्मादौ ॥ त्रि० दृढे । विशङ्कटे । बृहति । विशाले । बड्डे । विपुले ॥ उत्कटे ॥ अ तिप्रमाणे । अप्रमेये । आपातमधु रसांसारिकसुखनिस्पृहे ॥ यथा । महत्सेवाद्वारमाहुर्विमुक्तेस्तमोद्वा रयोषितासङ्गिसङ्गम् । महान्तस्ते समचित्ता प्रशान्ताविमन्यव सु हृद साधवोये ॥ महति । मह० । वर्त्तमानेपृषद्बृहन्महज्जगच्छतृवदिति निपा तित ॥ मह्यतेवा । महच्छब्दप्रयो गनिषेधोयथा । शङ्खेतैलेतथामांसेवैद्ये ज्योतिषिकेद्विजे । यात्रायापथिनिद्रायामहच्छब्दोनदीयते ॥ इ ति ॥ देशादिपरिच्छेदशून्ये सर्वगतेपरमात्मनि ॥

महती । स्त्री० नारदस्यवल्लक्याम् ॥ शततन्त्रीवीणामहतीति० स्वामी॥ विततायाम् ॥ बृहत्प्रमाणायाम् ॥ वृहत्याम् ॥ वार्त्ताक्याम् ॥ म-ह्यते । मह० । वर्त्तमानेपृषदिति साधु । गौरादि ॥

महतीद्वादशी । स्त्री० श्रवणद्वादश्याम् । वामनद्वादश्याम् ॥

महत्तत्त्वम् । न० चतुर्विंशतितत्त्व न्त र्गतद्वितीयतत्त्वे । प्रकृतेरुत्पन्ने सम ष्टिबुद्धिस्वरूपे ॥ तत्पर्यायाश्च । म

हाभारते । यथा । महानात्मामति
र्विष्णुर्जिष्णुः शम्भुश्ववीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तथाख्याति
र्धृतिः स्मृतिः ॥ पर्यायवाचकैः श
ब्दैर्महानात्माविभाव्यते ॥

महत्तर । पुं॰ शूद्रविशेषे । ग्रामकू
टे । महत्ता॰ इ॰ भा॰ ॥ इ॰ वि॰
काण्डशेष ॥

महत्युक्थम् । न॰ बृहतीसहस्राख्य
शस्त्रे ॥

महत्त्वम् । न॰ महतोभावे । यथा ।
महत्त्वषड्विधेहेतुरिन्द्रियकरणमतम्
। इ॰ भा॰ प॰ । महत्त्वषड्विधग्र
ति । द्रव्यप्रत्यक्षेमहत्त्वसमवायसम
वन्धेनकारणम् । द्रव्यसमवेतानां
गुणकर्मसामान्यानांप्रत्यक्षे॰ स्वाश्र
यसमवेतसमवायसम्बन्धेनकारणम्
। इ॰ सिद्धान्तमुक्तावली ॥ स्वाध्यस्त
सर्वसम्बन्धित्वे ॥ श्रेष्ठतायाम ॥

महत्पुष्पा । स्त्री॰ हस्तिघोषायाम् ॥

महद्ब्रह्म । न॰ अव्याकृते॰ प्रकृतौ॰
त्रिगुणात्मिकायांमायायाम् ॥ स
र्वकार्यापेक्षयाधिकत्वात्कारणमह
त्॰सर्वकार्याणाद्वृद्धिहेतुत्वरूपात्॰
बृहत्वाद्वा॰ ब्रह्मत्वाद्वा॰ ब्रह्मच
भवत्यव्याकृतम् ॥ महच्चतद्ब्रह्मचे
तिविग्रहः ॥

महद्भूतम् । न॰ परमात्मनि ॥ महत्
ब्रह्मविद्योत्कर्षेणवर्तमानत्वात्॰भू
तपरमार्थसत्यम् । महच्चतद्भूतञ्च ॥

महनीय । त्रि॰ पूजनीये ।

महर्घता । स्त्री॰ अधिकन्यूनत्वे ॥

महर्द्धि । स्त्री॰ समृद्धौ । स्वैराधि
क्ये ॥

महर्लोक पुं॰ भूरादिसप्तलोकान्त
र्गतचतुर्थलोके ॥ चतुर्मुखदिनस्या
न्तेजगदेतच्चराचरम् । तदादिद्दव्य
तेसर्वंचलोकत्रयभूर्भुवादिकम् । जन
म्ययान्तितापार्तामहर्लोकनिवासि
नः ॥ चतुर्थेतुमहर्लोकेतिष्ठन्तिकल्प
वासिनः ॥ अपिच । भर्लोकोटि
र्यमासेमरीच्यादिमुनिव्रजः ॥ भू
पृष्ठादिकोट्युच्छ्रायोमरीच्यादिमुनि
वृन्दस्थानमहर्लोकउत्थर्थः ॥

महर्षभी । स्त्री॰ कपिकच्छ्वाम् ॥

महर्षि । पुं॰ व्यासादिषु ॥ भृग्वा
दिसप्तसु ॥ वेदतदर्थद्रष्टृषु॰ सर्वज्ञे
षु॰ विद्यासम्प्रदायप्रवर्तकेषु ॥ भृ
गुमरीचिमत्रिञ्चपुलस्त्यं पुलहंक्रतु
म् । वसिष्ठञ्चमहातेजा सोऽसृजन्
मनसासुतान् ॥ सप्तब्रह्माणइत्येते
पुराणेनिश्चयङ्गता ॥ महाश्चासौ॰
ऋषिश्च । कृत्स्नस्यवेदस्यदर्शनात् ।
। अन्येतुवेदैकदेशदर्शनादृषय ॥

महल्लक । पुं॰ अन्तःपुररक्षके ।
सौविदल्ले । कञ्चुकिनि ॥ महती
लाति । ला॰ । क । क ॥

महल्लिक । पुं॰ अन्तःपुररक्षके

अस्त पुरस्थायिजने ॥ तल्लक्षण यथा । सुप्तशून्योऽनुपस्थेय ' स्त्री स्वभावोमहल्लिक ॥ इति ॥

मह । न॰ उत्सवे ॥ तेजसि ॥ मह-नम्॰ मह्यतेवा । महपूजायाम् । सर्वधातुभ्योऽसुन् ॥

महसम् । न॰ ज्ञाने ॥ महति॰ मह्यतेवा । मह॰ । अत्यविचमितमिन मिरभिलभिनभित पियतिपश्चिप-निमहिभ्योऽसच् ॥ प्रकारे ॥

महा । स्त्री॰ गोपवल्लयाम् । पृश्निप-र्णीविशेषे ॥ धेनौ । मह्यतेपूज्यते । मह॰ । खनोघचेति॰ घ ॥

महाकच्छ । पु॰ समुद्रे ॥ प्रचेतसि । वरुणे ॥ पर्वते ॥ महान् कच्छोयस्य स । आन्महतद्रूत्यात्वम् ॥

महाकण्टकिनी । स्त्री॰ क्षुद्रीभेदे । विश्वसारके । नागफणीथूहर॰ इ॰ भा॰ । फणिमनसा॰ दुर्गा॰ दे॰ भा॰ ॥

महाकन्द । पु॰ लशुने ॥ चाणक्य मूलके ॥ मूलके ॥ रक्तलशुने । राजपलाण्डौ ॥

महाकपित्थ । पु॰ बिल्ववृक्षे ॥ महांश्चासौकपित्थश्च । आन्महत ॥

महाकपित्थाख्य । पु॰ बिल्वे ॥

महाकरञ्ज । पु॰ हस्तिकरञ्जके ॥

महाकर्णिकार । पु॰ आरग्वधे ॥

महाकान्ता । स्त्री॰ पृथिव्याम् ॥

महाकाय । पु॰ वृषाणके । प्रमथविशेषे । शिवद्वारपाले ॥ वृहच्छरीरे ॥ त्रि॰ तद्वति ॥

महाकार्त्तिकी । स्त्री॰ रोहिणीनक्षत्रयुक्तायाकार्त्तिकपूर्णिमायाम् ॥

महाकाल । पु॰ महादेवे ॥ प्रमथविशेषे । महाभीमे ॥ लताविशेषे । किम्पाके ॥ अखण्डदण्डायमान विष्णुस्वरूपसमये ॥ उज्जयिन्यामहाकाल शाङ्करीतन्त्रदेवता ॥

महाकाली । स्त्री॰ परदेवतायाम् ॥ महाकालपत्न्याम् ॥ जिनानाचतुर्विंशतिशासनदेवतान्तर्गतदेवीविशेषे ॥

महाकाव्यम् । न॰ सर्गबन्धे ॥

महाकुमुदा । स्त्री॰ काश्मर्याम् ॥

महाकुम्भी । स्त्री॰ कट्फले ॥

महाकुल । त्रि॰ कुलीने । आर्ये । सभ्ये । सज्जने । साधौ ॥ महच्चतत् कुलञ्चमहाकुलम् । आन्महतद्रूत्यात्वम् । महाकुलमस्यास्ति । अच् ॥ महत्कुलमस्ये तिविग्रहोवा ॥ न॰ सत्कुले ॥

महाकुलीन । त्रि॰ महाकुले ॥ महाकुलस्यापत्यम् । कुलात्ख इत्यनुवृत्तौ महाकुलादञ्खञौ वितिपक्षेख ॥

महाकूप । पु॰ पादावर्त्ते ॥

महाकूल । पु॰ मत्कुले ॥

महाकोशफला । स्त्री॰ देवदालीलताम् ॥

महाकोशल । पु॰ देशविशेषे ॥ यथा । गोकर्णेशात्पूर्वभागेआयावर्त्तात्तुचोत्तरे । तीरभुक्तात्पश्चिमे तुमहापुर्याश्चसर्वतः । महाकोशलदेशश्चसूर्यवंशपरायणः ॥

महाकोशातकी । स्त्री॰ हस्तिघोषायाम् । मेनुवा॰ घीयातोरई॰ इ॰ भा॰ प्र॰ शाके ॥ महाकोषातकी स्निग्धासरापित्तानिलापहा ॥

महाक्रतु । पु॰ अश्वमेधे ॥ महांश्चासौक्रतुश्च ॥

महाखर । पु॰ अश्वतरे ॥

महागद । पु॰ ज्वरे ॥

महागन्ध । पु॰ कुटजवृक्षे ॥ अम्बुवेतसे । न॰ हरिचन्दने ॥ महान्गन्धोयस्य॰ यस्मिन्वा ॥ बोले ॥

महागन्धा । स्त्री॰ चामुण्डायादेव्याम ॥ केविकापुष्पे ॥ नागवलायाम् ॥

महागव । पु॰ गवये । वनगवे ॥

महागिरि । पु॰ बौद्धभेदे ॥ वृहत्पर्वते ॥

महागुरु । पु॰ मातरि । पितरि ॥ आचार्ये ॥ यथा । मातापिताब्रह्मदातामहान्तोगुरवः स्मृताः । इति ॥ महांश्चासौगुरुश्च । आत्मापदष्टत्वात्वम् ॥ स्त्रियाः पतिरेवमहागुरु ॥

महागुल्मा । स्त्री॰ सोमवल्ल्याम् ॥

महागुहा । स्त्री॰ पृश्निपर्ण्याम् ॥

महागोधूम । पु॰ पश्चाद्देशभवगोधूमविशेषे । बडा॰ गोहूं॰ इ॰ भाषा ॥

महाग्रह । पु॰ सूर्ये ॥

महाग्रीव । पु॰ उष्ट्रे ॥ त्रि॰ वृहद्ग्रीवायुक्ते ॥

महाघूर्णा । स्त्री॰ सुरायाम् ॥ महतीघूर्णायस्यायस्याः ॥

महाघोर । त्रि॰ अतिशयभयानके ॥

महाघोष । पु॰ अतिघोषणे । महाशब्दे । न॰ हट्टे । आपणे ॥ त्रि॰ वृहच्छब्दयुक्ते ॥

महाघोषा । स्त्री॰ कर्कटशृङ्ग्याम् ॥ कुन्दरुल्याम् ॥

महाङ्ग । पु॰ उष्ट्रे ॥ महान्त्यङ्गान्यस्य । अनेकमितिवहुव्रीहि ॥ गोक्षुरके ॥ महामृषिके ॥ रक्तचित्रके ॥ त्रि॰ वृहदवयवयुक्ते ॥

महाचञ्चु । पु॰ वृहच्चञ्चुमतिखगे ॥ शाकविशेषे । सुचञ्चुकायाम् । दीर्घपल्याम् । दिव्यगन्धायाम् ॥

महाचण्ड । पु॰ कालस्यभृत्ये ॥ त्रि॰ प्रचण्डे ॥

महाचीन । पु॰ देशविशेषे ॥ यथा कैलाशनीरसमारभ्यसरयूपरितः प

दे । अमरगामहेशानिमहाधीना भिधोभवेत् ॥

महाच्छन्द । पुं॰ देवताडवृक्षे । वृहत्पक्षे ॥

महाच्छाय । पुं॰ वटवृक्षे ॥ त्रि॰ वृहच्छायायुक्ते ॥ महतीच्छायाऽस्य ॥

महाच्छिद्रा । स्त्री॰ महामेदायाम् ॥ त्रि॰ वृहच्छिद्रयुक्ते ॥

महाज । पुं॰ वृहच्छागे ॥ त्रि॰ महाकुलोद्भवे । महांश्चासावजश्च ॥ महतोजायतेवा ॥

महाजटा । स्त्री॰ रुद्रजटायामोषधौ ॥ वृहत्स्त्रीजटायाम् ॥

महाजन । पुं॰ सज्जने । साधौ ॥ यथा । वेदाविभिन्नाः स्मृतयो विभिन्नानाऽसौमुनिर्यस्यमतं नभिन्नम् । धर्म्मस्यतत्त्वंनिहितं गुहायां महाजनोयेनगतः सपन्थाः ॥ महाजनोपर्य्यनुक्रोशयुक्ते सन्नादरेणाविवेके । यथा । आ पाप महामोहहतकसर्व्वथाहतस्त्वयाय महाजन । यतः । शान्तेऽनन्तमहिम्निनिर्म्मलचिदानन्दे तरङ्गावलीनिर्मुक्तेऽमृतसागरेऽम्भसिमनाक्मग्नोपिनाचामति । निःसारे मृगतृष्णिकार्णवजले श्रान्तोपिमूढः पिबत्याधावत्यवगाहतेऽभिरमते मज्जत्ययोमज्जतीति ॥ मन्वादौ । यथा । प्रायेणर्षे द्दतदिदंनम

हाजनोय देव्याविमोहितमतिर्य्यत मायायालम् । त्रय्याजडीकृतमतिर्म्मधुपुष्पितायांवैतानिकेमहतिकर्म्मणियुज्यमानः ॥

महाजम्बु । स्त्री॰ )

महाजम्बू । स्त्री॰ ) वृहज्जम्ब्वाम् । राजजम्ब्वाम् ॥

महाजव । पुं॰ शरभे ॥ श्रीकारिविमृगे ॥ त्रि॰ अतिशयवेगवति ॥

महाजाति । स्त्री॰ वासन्त्यामुक्तायाम् । माधव्याम् ॥ श्रेष्ठवर्णे ॥

महाजाली । स्त्री॰ पीतवर्णघोषायाम ॥ राजकोषातक्याम् ॥ जालयति । जालमाच्छादने । चु॰ । पचाद्यच् । गौरादि । महतीचासौजालीच ॥

महाज्यैष्ठी । स्त्री॰ नक्षत्रविशेषादियुक्तायाज्यैष्ठ्यांपूर्णिमायाम् ॥ पश्याचशब्दकल्पद्रुमम् ॥

महाज्योतिष्मती । स्त्री॰ लताविशेषे । तेजोवत्याम् । वङ्करसायाम् । कनकप्रभायाम् । लवणायाम् । वडीमालकांगणी॰ इ॰ भा॰ ॥

महाज्वाल । पुं॰ यज्ञवह्नौ ॥ त्रिव्याम् ॥

महाज्वाला । स्त्री॰ जिनानांविद्याधरीविशेषे ॥ वृहद्वह्निशिखायाम्।

महाडीनम् । न॰ पक्षिणः खद्रपतनेनप्रकृष्टावृत्तौ ।

महाढ्य । पु॰ कदम्ब ॥ त्रि॰ अतिशयधनवति ॥

महातपा । पु॰ विष्णौ ॥ महत्सृष्टिविषयं तपोज्ञानमस्य । ऐश्वर्यं प्रतापो वा महदस्य ॥

महातमप्रभा । स्त्री॰ अतिशयान्धकारमयेनरकविशेषे ॥

महातरु । पु॰ स्नुहीवृक्षे ॥ बृहद्वृक्षे ॥

महातलम् । न॰ पातालप्रभेदे ॥

महातारा । स्त्री॰ जिनानांदेवीविशेषे ॥

महाताली । स्त्री॰ आवर्त्तक्याम् ॥

महातिक्त । पुं॰ महानिम्बे ॥ त्रि॰ अतिशयतिक्तरसयुक्ते ॥

महातिक्ता । स्त्री॰ यवतिक्तायाम् ॥ पाठायाम् ॥

महातीक्ष्णा । स्त्री॰ भल्लातकवृक्षे ॥ त्रि॰ अतिशयतीक्ष्णे ।

महातुम्बी । स्त्री॰ राजालाब्वाम् ॥

महातेजा । पु॰ अग्नौ ॥ कार्त्तिकेये ॥ विष्णौ ॥ यथा । तेजस्विनोयदीयेनतेजसाभास्करादय । तत्तेजोमहदस्येतिमहातेजाउदीश्वर ॥ शौर्यशौर्यादिभिर्धर्मैर्महद्भि समलङ्कृत. । इतिवाख्यान्महातेजा अनुपातनईश्वर ॥ न॰ पारदे ॥ त्रि॰ अतिशयतेजस्विनि ॥ महत्प्रकृष्टंतेजश्चैत

न्यलक्षणमस्य ॥

महात्मा । त्रि॰ महामनसि । महाशये ॥ अत्यन्तशुद्धान्तःकरणत्वाज्जीवन्मुक्ते ॥ सर्वोत्कृष्टे ॥ रजस्तमोमलरहितान्तःकरणे । शुद्धसत्त्वे । समुत्पन्नसम्यग्दर्शने ॥ साधूनामभयदायके । परमोदारचित्ते ॥ परमकारुणिके ॥ सर्वेश्वरे॰ सर्वज्ञे॰ परमात्मनि ॥ अनुद्रबुद्धौ ॥ महानृषनैकजन्मसुकृते रकात चदुद्रक्ताभाद्यनभिभूत ॰ आत्मा ।॰ अन्त करणं यस्य स । महांश्चासावात्माचेतिवा ॥

महात्यय । पु॰ चतुर्थके॰ विषमज्वरे ॥ गम्भीरे ॥ महातिकष्टे ॥

महादण्ड । पु॰ यमदूतप्रभेदे ॥

महादन्त । पुं॰ गजदन्ते । ईशादन्ते । बृहद्दन्तमात्रे ॥ त्रि॰ तद्वति ।

महादानम् । न॰ श्रेष्ठदाने । तुलापुरुषादिषोडशप्रकारे । यथा । आद्यन्तुसर्वदानानांतुलापुरुषसञ्ज्ञितम् । हिरण्यगर्भदानञ्चब्रह्माण्डं तदनन्तरम् ॥ कल्पपादपदानञ्चगोसहस्रन्तुपञ्चमम् हिरण्यकामधेनुश्चहिरण्याश्वस्तथैवच ॥ पञ्चलाङ्गलकं तद्वद्धरादानंतथैवच । हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा ॥ द्वादशंविष्णुचक्रञ्चततकल्पलतात्मकम् । सप्तसागरदानञ्चरत्नधेनुस्तथैवच । महाभूतघटस्तथ

तृणोऽस्य परिकीर्त्तितः ॥

महादारु । न० देवदारुणि ॥

महादाह । पु० नरकान्तरे ॥

महादेव । पु० शिवे ॥ महांश्चासौ-देवश्च । आन्महतइत्यात्वम् । महान्देवोऽस्त्यादिरूपात्क्रीडायस्येतिवा ॥ ब्रह्मादीनांसुराणाञ्चमुनीनांब्रह्मवादिनाम् । तेषाञ्चमहतोदेवोमहादेवःप्रकीर्त्तितः ॥ महतीपूजिताविश्वे मूलप्रकृतिरीश्वरी। तस्यादेवःपूजितश्चमहादेवःसचस्मृतः ॥ इ० ब्र० वै० पु० ॥ सर्व्वदेवानामहनीयत्वाच्चमहादेवः । तथोक्तं मत्स्यपुराणे । पूज्यतेयस्मात्सर्व्वैर्महांश्चैव प्रमाणतः । धातुर्महेतिपूजायाम हादेवस्ततस्मृतः ॥ स्कान्देपि । महतामपिदेवनामहमेवमहान्यतः । नतुमत्तोमहानन्योमहादेवस्ततोह्यहमिति ॥ कोटयोब्रह्महत्यानामगम्यागमकोटयः । सद्यः प्रलयमायान्तिमहादेवेतिकीर्त्तनात् ॥ महादेवमहादेवमहादेवेतिवादिनम् । वत्सं गौरिवगौरीशोधावन्तमनुधावति ॥ यथोक्तमथर्वशिरसि । सर्व्वान्भावान्परित्यज्यात्मज्ञानयोगैश्वर्य्येमहतिमहीयतेतस्मादुच्यतेमहादेवइति । अस्यार्थोविष्णुसहस्रनामभाष्यटीकायांद्रष्टव्यः ॥

महादेवी । स्त्री० दुर्गायाम् ॥ महतोब्रह्मादीनपिदेवयतिसर्गादिभिर्व्यवहारयति० इतिमहादेवी। दिवु० । अच् । टित्वान्ङीप् ॥ पूज्यतेयासुरैः सर्व्वैर्महतीचप्रमाणतः । धातुर्महेतिपूजायांमहादेवीततःस्मृतेतिदेवीपुराणम् । सर्व्वद्रष्टव्यमहादेवी द्रष्टासाक्षीचसैवहीतिदेवीभागवतम् । द्रष्टाजीवः साक्षी० ईश्वरः० द्रष्टव्यसर्व्वंजगत्० इदंच सैवभगवती भवतीत्यर्थः ॥ राज्ञ्याम् । महिष्याम् । पट्टदेव्याम् ॥

महादैत्य । पु० भौत्यमन्वन्तरीयदैत्यविशेषे ॥ उत्कृष्टदैत्ये ॥

महाद्युति । त्रि० ईश्वरे ॥ महतीबाह्याभ्यन्तरव्यापिनीद्युतिर्यस्तन्य लक्षणस्यक्षामादिपराभवेनखण्डितसाधनोन्मुखे० पुरुषर्षभे । महती द्युतिरस्य ॥

महाद्रिधृक् । पु० हरौमहान्तमद्रिं मन्दरंगोवर्द्धनंबाऽमृतमथनेगोरक्षणेवाधृतवानितिव्युत्पत्तिः फलिताथैकथनपरा । वस्तुतस्तुमहाद्रयेधृष्णोति० धर्त्तुंमप्रगल्भते । ञिधृषाप्रागल्भ्ये । क्विप् । क्विन्प्रत्यय स्त्रकु ॥

महाद्रुम । पु० अश्वत्थे ॥ महांश्चासौद्रुमश्च ॥ इहद्वृक्षे ॥

महाद्रोणा । स्त्री० देवकुरुस्वायाम् । दिव्यपुष्पायाम् ॥

महाद्रुणी । स्त्री॰ महाद्रोणाक्षुपे ॥
महाद्भुत । पुं॰ युद्धवाद्ये ॥ अतिक्र सद्दे ॥
महाधनम् । न॰ महामूल्ये । बहुमूल्यवस्तुनि । महर्गो॰ ह॰ भा॰ । सुवर्णे ॥ सिह्लके ॥ चारुवाससि । महद्धनमूल्यमस्य ॥ कृषिकर्मणि ॥ त्रि॰ अतिशयधनयुक्ते ॥
महाधातु । पु॰ स्वर्णे ॥
महाध्वग । पु॰ उष्ट्रे ॥
महानट । पु॰ महादेवे ॥
महानद । पु॰ नदविशेषे ॥
महानदी । स्त्री॰ पुरुषोत्तमक्षेत्रान्तर्गतनदीविशेषे । चित्रोत्पलायाम् ॥ गङ्गायाम् ॥ यथा । अम्बुजमम्बुनिजातनजातुनजायतेम्बुजाटम्बु । सुरहरतवविपरीतपदाम्बुजाद्यन्महानदीजाता ॥
महानन्द । पु॰ मुक्तौ ॥ अधिकाह्लादे ।
महानन्दा । स्त्री॰ अमृतायाम् । सुरायाम् ॥ माघशुक्लनवम्याम् ॥ नदीविशेषे । देवीविशेषे । अट्टहासेमहानन्दादेवी ॥
महानन्दि । पु॰ नन्दिवर्द्धनाख्यराजपुत्रे ॥
महानरक । पु॰ अतिशयनारकाप्रकारयातनास्थाने ॥
महानल पु॰ वृहदग्नौ ॥ देवनले ।
महानवमी । स्त्री॰ आश्विनशुक्लनवम्याम् ॥
महानसम् । न॰ पाकस्थाने । रसवत्याम् ॥ तत्ररक्षणीयजनामाह्वेउक्ता । यथा । सूदशास्त्रविधानज्ञा पराऽभेद्या कुलोद्गता । सर्वमहानसेधार्या ऽक्षमकेशनखाजना ॥ इति ॥ पु स्त्रिज्ञोप्ययमिति कश्चित् ॥ महच्चतदनश्च । अनोश्माय सरसाजातिसञ्ज्ञयोरितिसंज्ञायाटच् ॥
महानसाधिकृत । त्रि॰ पौरोगवे ॥ महानसेऽधिकृत ॥
महानाटकम् । न॰ हनुमन्नाटके ॥ नाटकविशेषे ॥
महानाडी । स्त्री॰ कण्डरायाम् ॥
महानाद । पु॰ कुञ्जरे ॥ वर्षुकाब्दे ॥ महाशङ्खे ॥ ध्वनिराड्ढे । कर्णे ॥ सिंहे ॥ उष्ट्रे ॥ शङ्खे ॥ कोहलायाम् ॥ महान्नादोयस्य स ॥
महानिद्रा । स्त्री॰ मरणे ॥
महानिम्ब । पुं॰ प्रवकैष्टे । पार्वते । वकायन॰ ट्रेक॰ ङेक॰ ह॰ भाषा । महानिम्बोहिमोरूक्षस्तिक्तोग्राहीकषायक । कफपित्तकृमिच्छर्दिकुष्ठश्वासरक्तजित् । प्रमेहश्वासगुल्मार्शोमूषिकाविषनाशन ॥
महानिशा । स्त्री॰ निशामध्यभागे । निशीथे ॥ रात्रेर्मध्यस्थप्रहरद्वये ॥

यथा । महानिशातुविज्ञेयामध्यस्थप्रहरद्वयम् । तत्रस्नानन्नकुर्वीत काम्यनैमित्तिकादृते ॥ स्मृत्युक्तमहानिशासार्द्धप्रहरीपरिप्रहरद्वयमितिरघुनन्दन । देवलोकामहानिशारात्रिमध्यमदण्डद्वयात्मिकासाद्वितीयप्रहरशेषदण्डतृतीयप्रहरप्रथमदण्डरूपा ॥

महानीच । पु॰ रजके।अतिशयहीनवर्णे ॥

महानील । पु॰ भृङ्गराजे । नागविशेषे ॥ सिंहलद्वीपाकरोद्भूते॰ मणिविशेषे ॥ सिंहलस्याकरोद्भूतामहानीलास्तुतेस्मृताइत्यगस्त्योक्तेः । तल्लक्षण यथा । यस्तुवर्णस्यभूयस्त्वात् क्षीरेशतगुणेस्थित । नीलतातनुयात्सर्वंमहानील सउच्यते ॥ इतिगारुडे॰ ७२ अध्याय ॥

महानीला । स्त्री॰ महाजम्ब्वाम् ॥

महानीली । स्त्री॰ नीलापराजितायाम् ॥ दृहन्नील्याम् । श्रीफलिकायाम् । केशार्हायाम् ॥

महानुभाव । पु॰ श्रीहरौ ॥ महाशये । सुकृतिनि । महामाहात्म्ये ॥ महान्श्रुताध्ययनतपआचारादिनिबन्धनोऽनुभाव प्रभावोयस्यस ॥

महान्तक । पु॰ महेन्द्राचलपीठस्थे शिवे । स्त्री॰ देवीविशेषे ॥ महेन्द्रे चमहान्तका ॥

महापक्ष । पु॰ बहुपुत्रादिपरिजने ॥

महापञ्चमूलम् । न॰ वृहत्पञ्चमूले । तद्यथा । बिल्वोग्निमन्थ श्योनाक काश्मर्यं पाटलातथा । सर्वैस्तुमिलितैरेतै श्चान्महापञ्चमूलकम् ॥

महापञ्चविषम् । न॰ वृहद्विषपञ्चके ॥ तद्यथा । शृङ्गीवकालकूटञ्चमुस्तको वत्सनाभक । शङ्खकर्णीतियोगोयमहापञ्चविषाभिध ॥

महापञ्चाङ्गुल । पु॰ स्थूलैरण्डे

महापत्र । पु॰ शाकवृक्षे ॥ मानके । मानकचू॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ कन्दे ॥ त्रि॰वृहत्पर्णयुक्ते ॥ महान्तिपत्राणियस्यस ॥

महापत्रा । स्त्री॰ महाजम्ब्वाम् ॥

महापथ । पु॰ प्रधानेऽध्वनि । घण्टापथे । राजवर्त्मनि ॥ आकाशे ॥ विस्तीर्णपथि ॥ श्मशाने ॥ महताप न्था ॰ च ॥

महापथगम । पु॰ मरणे ॥

महापद्म । पु॰ अष्टनागान्तर्गतनागविशेषे । अतिशुक्ले । दशबिन्दुकमस्तके ॥ कुबेरस्यनवनिध्यन्तर्गत निधिविशेषे ॥ लक्षकोटिसङ्ख्यायाम् । १०००००००००००० ॥ न॰ सितपद्मे ॥

महापातकम् । न॰ ब्रह्महत्यादिषु ॥

यथा । ब्रह्महत्यासुरापानस्तेयगुर्व-ङ्गनागम । महान्तिपातकान्याहु स्संसर्गश्चापितैः सह ॥ महापातकजचिह्न सप्तजन्मसुजायते । बाधतेव्याधिरूपेणतस्यकृच्छ्रादिभिः श म ॥ मद्यन्तत्पातकञ्च ॥

महापातकी । स्त्री॰ ब्रह्महत्याद्यन्यतम पातकयस्ते ॥बीरहननाद्यन्यतममहा पातकयस्ते॥ यथा । बीरघातीतथा पायी गीराणांस्त्रीगमस्तथा । स्तेयीम हापातकिनस्तत्संसर्गीचपञ्चम ॥ सचपतित ॥ यथा । महापातकिनोयेचपतितास्तेप्रकीर्त्तिता । पतितानानदाह स्यान्नान्त्येष्टिर्नास्थिसञ्चयं । नचाश्रुपात पिण्डौ वाकार्यं श्राद्धादिक क्वचित् ॥ एतानिपतितानाञ्च करोतिविमोहित । तप्तकृच्छ्रद्वयेनैवतस्यशुद्धिर्नचान्यथा ॥ इतिशुद्धितत्त्वधृतविष्णुपुराणवचनम् ॥ महापातकिनो जीवतएवातस्योदकक्रियावच्यमा णरोत्यामपिण्डै समानोदकैश्चदा माहरिर्गत्वाग्राम्यत्विग्गुरुसन्निधानैरिक्तायांनवम्यातिथौदिनान्तेकर्त्तव्येत्याहमनु ॥ पतितस्योदककार्यंसपिण्डैर्बान्धवैर्बहि । निन्दितेहनिसायाह्नेज्ञात्यृत्विग्गुरुसन्निधौ ॥ दासीघटमपांपूर्णंपर्यस्येतप्रेतवत्पदा ॥ अहोरात्रमुपासीरन्नशौचबान्धवै सह ॥ निवर्त्तयेयुस्तस्मात्सम्भाषणसहासने । दायाद्यस्य प्रदानञ्चयात्राचैवहिलौकिकी ॥ ज्येष्ठताचनिवर्त्तेतज्येष्ठावाप्यञ्चयद्धनम् । ज्येष्ठांशप्राप्नुयाच्चास्ययवीयान्गुणतोधिक ॥ प्रायश्चित्तेतुचरितेपूर्णकुम्भमपानवम् । तेनैवसार्द्धंप्राप्स्येयु स्नात्वापुण्येजलाशये ॥ सत्त्वप्सुतघटप्रास्यप्रविश्यभवनस्वकम् । सर्वाणिज्ञातिकार्याणियथापूर्वं समाचरेत् ॥ एतदेवविधिंकुर्यात्योषित्सुपतितास्वपि । वस्त्रान्नपानदेयन्तुवसेयुश्चगृहान्तिके ॥ महापातकमस्त्यस्याइतिन्त्या । इनि ॥ पारिभाषिकमहापातकीयथा ॥ कृतप्राणप्रतिष्ठान्तुनीचैर्यःप्रतिमाद्विजदुर्गानप्रणमेद्यस्तुसमहापातकीस्मृत ॥ अपिच पितरमातरभार्यांगुरुपत्नींगुरुपरम। योनपुष्णातिकापट्यात्समहापातकीभवेत् ब्र॰ वै॰ पु॰ ॥

महापाप्मम् । न॰ महापातके ॥ अत्युत्कटपापे ॥

महापाप्मा । पु॰ अत्युग्रे ॥ कामे ॥ महत पापस्यहेतुत्वात् ॥

महापारेवतम् । न॰ बृहत्पारेवते । द्वीपखर्जूरे ॥

महापाश । पु॰ यमदूतविशेषे । वृहत्पाशे ॥

महापासक । प० गोर्मिनि । चेलुकी । वुद्दभिक्षुशिष्ये ॥

महापिण्डीतक । पु० कृष्णवर्णमदनद्रुमे । वाराहे ॥

महापिण्डीतरु । पु० वृक्षविशेषे । स्थितपिण्डीतके । ग्रस्तकोषतरौ । शरे । पिण्डीतरौ । पेंडिरा० इ० भा० ।

महापीठम् न० एकपञ्चाशत्पीठे ॥

महापीलु । पु० वृहत्पीलुवृक्षे । महाफले । मधुपीलौ ॥

महापुराणम् । न० एकादशलक्षणयुक्ते व्यासप्रणीतेऽष्टादशसङ्ख्यकपुराणविशेषे ॥ तल्लक्षणं यथा । सृष्टिश्चापिविसृष्टिश्चस्थितिस्तेषाञ्चपालनम् । कर्मणांवासनावार्त्तामनूनाञ्चक्रमेणच । वर्णनं प्रलयानाञ्चमोक्षस्यचनिरूपणम् । उत्कीर्त्तनं हरेरेवदेवानाञ्चपृथक् पृथक् ॥ दशाधिकलक्षणञ्चमहतापरिकीर्त्तितम् ॥ इतिब्रह्मवैवर्त्तेकृष्णजन्मखण्डे १३२ अध्याय ॥

महापुरुष । पु० नारायणे ॥ श्रेष्ठनरे ॥ लक्षणं वाराह्या ६७ अ० ॥ ब्रह्मात्माभेदज्ञानिनि० जीवन्मुक्ते ॥ महांश्चासौपुरुषश्च । सन्महदिति समास । आन्महतइत्यात्वम् ॥

महापुरुषदन्ता । स्त्री० शतमूल्याम् ॥

महापुरुषदन्तिका । स्त्री० महाशतावर्य्याम् ॥

महापुष्पा । स्त्री० अपराजितायाम् ॥

महापृष्ठ । पु० उष्ट्रे त्रि० वृहत्पृष्ठे ॥

महापौरुषिक । पु० वैकुण्ठनाथानुचरे ॥

महाप्रकृति । स्त्री० दुर्गायाम् ॥

महाप्रपञ्च । पु० स्थूलसूक्ष्मकारणप्रपञ्चानांसमष्टौ ॥ यथाऽवान्तरवनानांसमष्टिरेकं महद्वनम्० यथाऽवान्तरजलाशयानांसमष्टिरेकोमहान् जलाशयोभवति० तद्वत्स्थूलसूक्ष्मकारणशरीरप्रपञ्चानामपिसमष्टिरेकोमहान्प्रपञ्चोभवतीति ॥

महाप्रभ । त्रि० अतिशयदीप्तियुक्ते ॥

महाप्रभाव । त्रि० अतिशयतेजःशक्तिविशिष्टे ॥

महाप्रभु । पु० जगन्नाथे ॥

महाप्रलय । पु० सर्वसंहारे । एककालिकसमस्तजन्यपदार्थनाशे ॥ महांश्चासौप्रलयश्च ॥ न्यायमतेजन्यभावानधिकरणकालोमहाप्रलय • सचचरमध्वंसरूप • ॥

महाप्रसाद । पु० विष्णुनैवेद्यादौ ॥ यथा । पादोदकञ्चनिर्माल्यं नैवेद्यञ्चविशेषत । महाप्रसादइत्युक्त्वाग्राह्यं विष्णो प्रयत्नत ॥ ब्राह्मेचान्नममेवान्नमर्पितवस्तुनि । तन्माहात्म्यं महानिर्वाणतन्त्रेसम्यक्

निरूपितम्

महाप्रस्थानम् । न॰ शास्त्रीयेदेहत्या गविशेषे ॥ महत्॰आवृत्तिशून्यप्र स्थानम्॰सर्पेष्वपिकसि हव्याघ्रादि विषमभूम्याद्यपरिहारेणगमन याव च्छरीरपात तन्महाप्रस्थानम्॰इत्यु च्यते ॥

महाप्राण । पुं॰ द्रोणकाके ॥

महाप्रेत । पु॰ ब्रह्मादिषु ॥ यथा । ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशि व । एतेपञ्चमहाप्रेताभूताधिपतयो मता ॥ चत्वारोमञ्चचरणा'पञ्चम प्रच्छद पट । सच्चित्प्रकाशरूपेणशि वेनाभिन्नविग्रहा ॥ तत्रासनेसमा सीनानिर्भरानन्दरूपिणीति ॥

महाफल । पु॰ मालूरे । विल्वे ॥ त्रि॰ उत्कृष्टफले ॥ न॰ वृहत्फले ॥

महाफला । स्त्री॰ इन्द्रवारुण्याम् ॥ राजजम्ब्वाम् ॥ तुम्ब्याम् ॥ महा कोशातक्याम् ॥ मधुवीजपुरे ॥

महाफेना । स्त्री॰ अब्धिफेने । हिण्डी रे ॥

महाबल । पु॰ वायौ ॥ वुद्धे ॥ न॰ सीसके ॥ त्रि॰ वलोत्कटे । वलीय सि ॥ महासामर्थ्ये ॥ महत्प्रकृष्ट बलमस्य ॥

महाबला । स्त्री॰ अतिवलायाम् । पी तपुष्पाम । पीतवाट्यालके ॥

महाबोधि । पु॰ वुद्धे ॥

महाब्राह्मण । पु॰ निन्दितब्राह्मणे । कट्या॰ अचारज॰ इ॰ भा॰ ॥

महाभद्रा । स्त्री॰ काश्मर्याम् ॥ गङ्गा याम् ॥

महाभट । पु॰ अतिशययोद्धरि ॥

महाभाग । त्रि॰ अतिधन्ये ॥ दयाद्य ष्टगुणयोगोमहाभागता॰ तद्विशिष्टे । महान्भागोभाग्यमस्य ॥ महान् असाधारणोभागऐश्वर्यादिभगसमु दायोयस्यवा ॥

महाभागा । स्त्री॰ महालयतीर्थस्थावा देव्याम् ॥

महाभारतम् । न॰ व्यासप्रणीतेतिहास शास्त्रे ॥ तन्नामकारण यथा । एक तश्चतुरोवेदाभारतञ्चैतदेकत । पुराकिलसुरे सर्वैं समस्यतुलया धृतम् ॥ चतुर्भ्य सरहस्येभ्योदेवे भ्योभ्यधिकंयदा । तदाप्रभृतिलोके स्मिन्महाभारतमुच्यते ॥ महत्त्वा द्भारतत्वाच्चमहाभारतमुच्यते ॥

महाभाष्यम् । न॰ पातञ्जलेव्याकरण भाष्ये ॥

महाभिलाष । त्रि॰ महेच्छे ॥ महा नभिलाषोस्य ॥

महाभिष । पु॰ राजर्षिविशेषे । प्रा तीपे । शन्तनौ ॥ यथा । महाभि षोनृपोजात प्रतीपस्यसुतस्तदा । शन्तनुर्नामराजर्षिर्धर्मात्मासत्यसङ्ग रइति ॥

महाभीता । स्त्री॰ लज्जालुवृक्षे ॥ त्रि॰ अतिशयभययुक्ते ॥

महाभीम । पु॰ शान्तनुनृपे ॥ भृङ्गिनामकशिवद्वारपाले ॥ त्रि॰ अतिशयभयानके ॥

महाभीरु । पु॰ कीटविशेषे । गोपालिका॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ ग्वाली॰ इ॰ दे॰ भा॰ ॥ अतिशयभयशीले ॥

महाभीष्म । पु॰ शान्तनुनृपे ॥

महाभूतम् । न॰ व्योमादिपञ्चसु । भूम्यादिपञ्चसु ॥ महाभूतानिपञ्चैव खानिलाग्न्यम्बुभूमय ॥

महाभृङ्ग । पु॰ नीलभृङ्गराजे ॥

महाभैरव । पु॰ शरभरूपिशिवरे ॥

महाभोग । त्रि॰ नारायणे ॥ अतिसुखिनि ॥ महाभोग सुखरूपोऽस्य ॥

महाभोगा । स्त्री॰ दुर्गायाम् । महार्थसाधिनीदेवीमहाभोगाततस्मृता ॥

महामण्डूक । पु॰ पीतमण्डूके ॥

महामति । त्रि॰ अतिशयबुद्धिविशिष्टे ॥

महामद । पु॰ मत्तगजे ॥ त्रि॰ अतिशयहर्षयुक्ते ॥

महामना । त्रि॰ सदन्त करणे ॥ उत्कटे । महेच्छे । उदारे । महाशये । अक्षुद्रचित्ते ॥ सर्वश्रेष्ठोऽहमितिमन्यमाने ॥ महद्भिःसौरमन्यैरसममानमन्यमानमनोयस्यस ॥ परमेश्वरे ॥ सृष्टिस्थित्यन्तकर्माखिलजगतांमनसैवकरोतीतिमहामना ॥ मनसैवजगत्सृष्टिं संहारञ्चकरोतिय इतिविष्णुपुराणम् ॥ मनसैव॰ सङ्कल्पमात्रेणैव ।

महामाघ । पु॰ योगविशेषे ॥ माघीचमघसंयुक्तामघायाचगुरुर्यदा । महामाघस्तदाप्रोक्तोव्रतोद्वाहादिवर्ज्जयेत् ॥

महामात्र । पु॰ प्रधाने । अमात्ये । सेनान्यादौ ॥ समृद्धे । हस्तिपकाधिपे । हस्तिशिक्षाजीविनि ॥ महतीमात्रापरिच्छेदोऽस्य ॥

महामात्री । स्त्री॰ आचार्यपत्न्याम् ॥ महामात्रयोषायाम् ॥

महामानसी । स्त्री॰ जिनाननाविद्या देवीभेदे ॥

महामाय । पु॰ हरौ ॥ मायाविनामपिमायाकारित्वात् ॥ महतीप्रकृष्टामायास्य । महामायात्वचमायाविनामपिमयशम्बरप्रभृतीनांविविधप्रपञ्चविभ्रमकारिमायाप्रयोक्तृत्वात् ॥

महामाया । स्त्री॰ दुर्गायाम् ॥ ईश्वरशक्त्याम् ॥ विसदृशप्रतीतिसाधनमाया॰ तस्याश्चमहत्त्वसर्वविषयत्वमितिव्याख्यानात् तस्या स्वरूपयथा । कालिकापुराणे । गर्भान्तर्ज्ञानसम्पन्नं प्रेरितसूतिमारुतै

। उत्पन्न ज्ञानरहितकुरुतैयानिरन्त रम् ॥ पूर्वातिपूर्वसम्बन्धसंस्कारेण- नियोज्यच । आहारादौततोमोह ममत्वज्ञानसंशयम ॥ क्रोधोपरोध लोभेषुक्षिप्त्वाक्षिप्त्वापुन पुन । प श्चात्कामेनसयोज्यचिन्तायुक्तमहर्नि शम् ॥ आमोदयुक्त व्यसनासक्त ज- न्तु करोतिया । महामायेतिसाप्रो क्तातेनसाजगदीश्वरी ॥ इति ।

महामायी । पु॰ ईश्वरे ॥

महामायी । स्त्री॰ दुर्गायाम् ।

महामारी । स्त्री॰ महाकाल्याम् ॥ आ मर्थभूतायामहाजनक्षयकर्यादेव तायाम् । सहारशक्तौ ॥ महतोमा रयतीतितथा । महतीचासौमारी चेतिवा ॥ व्याप्तमयैतत्सकलब्रह्मा ण्ड मनुजेश्वर । महाकाल्यामहा कालीमहामारीस्वरूपया ॥ सैवका- लेमहामारोसैवसृष्टिर्भवत्यजा ॥ स्थि तिकरोभूतान।सैवकालेसनातनी तिमार्कण्डेयपुराणम् ॥ अतिशय मारके ॥

महामार्ग । पु॰ राजमार्गे ॥

महामालिनी । स्त्री॰ नाराचाभिधेवृ- त्तविशेषे ॥ यदिहनयुगलततोविरेफै र्महामालिनीतिलक्षणम् ॥

महामाष । पु॰ राजमाषे । चौरा॰ लोबिया॰ प्र॰ भा॰ ॥

महामुख । पु॰ कुम्भीरे ॥ बृह न्मुखे ॥ त्रि॰ तद्वति ॥

महामुण्डी । स्त्री॰ महाश्रावणिका- याम् ॥

महामुनि । पुं॰ नारायणे ॥ अग स्त्ये ॥ बुद्धे काले ॥ कृपाचार्ये ॥ व्यासे ॥ महांश्चासौमुनिश्च । सन्म हदितिसमास । आन्महतइत्या त्वम् ॥ ब्रह्मविदि ॥ तुम्बुरुवृक्षे ॥ न॰ कुस्तुम्बुरुणि । धन्याके ॥

महामूर्द्धा पु॰ शिवे ॥ त्रि॰ बृहन्मस्त कयुक्ते ॥

महामूल । पु॰ राजपलाण्डौ ॥ क्षि तिहिरटे ॥

महामूल्य । पुं॰ पद्मरागे ॥ न॰ म हार्घे ॥ त्रि॰ तद्वति ॥

महामूषिक । पु॰ बृहदुन्दुरौ । महा खु ॥

महामृग । पु॰ हस्तिनि ॥ शरभे ॥

महामृत्युञ्जय । पु॰ मृत्योर्मृत्युक रे शिवमन्त्रविशेषे ॥ नित्यमष्टशत जप्त्वामृत्युमृत्युपथ नयेत् ॥

महामेघ । पु॰ अतिशयमेघे ॥

महामेद । पु॰ अष्टवर्गाङ्गौषधे ॥ पुरोहवे ॥ बृहन्मेदे ॥

महामेदा । स्त्री॰ अष्टवर्गाङ्गौषधविशे षे । वसुच्छिद्रायाम् । जीवन्याम् । पाण्डुरागिण्याम् ॥ महामेदाभिध॰ कन्दोमोरङ्गादौप्रजायते । शुक्लार्द्र कनिभ कन्दोलताजात'सुपाण्डुर ।

महामेदाभिध प्रोक्तोदन्यैभावप्रकाशके। मेदागुण गुरुस्वादुवृष्य सान्यकफापहम्। हृत्शीतल पित्तरक्तवातज्वरप्रणुत्॥ तस्याश्च लाभ यस्या स्यात्तेशतावरीदिया॥

महामैत्र। पु॰ बुद्धभेदे॥ ॥

महामोह। पु॰ भोगेच्छारूपाज्ञाने॥ महामोहस्तुविज्ञेयोग्राम्यभोगसुखैषणा॥ रागे। विषयविशेषे सदशविध। शब्दादिषुपञ्चसु दिव्यादिव्यतयादशविधेषु विषयेषु रञ्जनीयेषुराग॰ आसक्तिर्महामोह॰ सचदशविधविषयत्वाद्दशविध॥

महामाडी पु॰ शिवप्रिये धत्तूरे॥ त्रि॰ महामोहविशिष्टे॥

महाम्बुज। पु॰ नरकान्तरे॥

महाम्लम्। न॰ तिन्तिडीके। वृक्षाम्ले॥

महायक्ष। पु॰ इन्द्रोपासकविशेषे॥

महायज्ञ। पु॰ अध्यापनादिपञ्चसु॥ पाठोहोमश्चातिथीनासपर्यातर्पण बलि। एतेपञ्चमहायज्ञाब्रह्मयज्ञादिनामका॥ अध्यापन ब्रह्मयज्ञ पितृयज्ञस्तुतर्पणम्। होमोदैवोबलिर्भौतोनृयज्ञोऽतिथिपूजनम्॥ अहुतञ्चहुतञ्चैवतथाप्रहुतमेवच। ब्राह्मंहुत प्राशितञ्चपञ्चयज्ञान्प्रचक्षते॥ जपोऽहुतो हुतोहोम प्रहुतोभौतिकोबलि। ब्राह्म्यहुतद्विजाग्र्यार्चाप्राशित पितृतर्पणम्॥ पञ्चैतान्योमहायज्ञान्नहापयतिशक्तित। सगृहेपिवसन्नित्य सूनादोषैर्नलिप्यते॥ देवताऽतिथिभृत्यानापितॄणामात्मनश्चय। ननिर्वपतिपञ्चानामुच्छ्वसन्नसजीवति॥ अपिच। एते पञ्चमहायज्ञाब्रह्मणानिर्मितापुरा। ब्राह्मणानाहितार्थायइतरेषाच तन्मुखा॥इतरेषाचवर्णानाब्राह्मणैकारिता शुभाः॥एव कृत्वानरोभुक्त्वाऽऽश्वरिपौविशुद्ध्यति। अन्यथाब्रीह्यौमितेएकेकृत्ग॰ध्यिप॥ मन्त्वव्यादात्मभोक्तृणामहामास तुलइवेन्॥ इ॰ वराहपुराणे॥

महायशा। पु॰ भूतादिविशेषे॥ न॰ कल्पभेदे॥ त्रि॰ लोकेवेदेच प्रसिद्धविभवे॥ अतिशययशोयुक्ते॥

महायशस्क। त्रि॰ अतिशययुक्ते॥

महायोगी। पु॰ अद्रिकूटपीठस्थे शिवे॥

महारजतम्। न॰ स्वर्णे॥ धुस्तूरे॥ वृहद्रौप्ये॥ महच्चतद्रजत च। सन्महदितिसमास। आन्महतइत्यात्वम्॥

महारजनम्। न॰ कुसुम्भे। कसूभा॰ इ॰ भा॰॥ शातकुम्भे। स्वर्णे॥ रज्यतेऽनेन। रञ्जरागे।

ल्युट्। रजकरजनरञ्जनरजस्सु प सङ्ख्यानान्नलोप ॥ रञ्जे क्युन् वा ॥ महच्चतद्रजन च। सन्महदिति समास ॥

महारण्यम्। न॰ अरण्यान्याम् ॥ महच्चतदरण्यञ्च। सन्महत्परमोत्तमोत्कृष्टा पूज्यमानैरितिसमास । आन्महतइत्यात्वम् ॥

महारत्नम्। न॰ मुक्तादिनवसु ॥ मुक्ताफल हीरकञ्चवैदूर्यपद्मरागकम्। पुष्परागञ्चगोमेदनीलगारुत्मत तथा ॥ प्रवालयुक्तान्युक्तानिमहारत्नानिवैनव ॥

महारथ । पु॰ रथिकविशेषे । अयुतधन्विभि सहयोद्धरि ॥ यथा। एकोदशसहस्राणियोधयेद्यस्तुधन्विनाम्। शस्त्रशास्त्रप्रवीणश्चमहारथइतिस्मृत ॥ अपिच। आत्मान सारथिञ्चाश्वान्रक्षन्युद्ध्येत योनर । समहारथसञ्ज्ञ स्यादित्याहुर्नीतिकोविदा । शिवे ॥ विष्णौ ॥ महान्महात्मा॰नन्दी॰गरुडोवारथोयस्यस ॥

महारम्भम्। न॰ गडलवणे । साम्भर॰हि॰भा॰ ॥

महारस । पु॰ खर्जूरे ॥ कोशकारे । इक्षुविशेषे । कौसिआर॰हि॰भा॰ ॥ कशेरुणि ॥ पारदे । रसेन्द्रे ॥ न॰काञ्जिके ॥

महारसाष्टकम्। न॰ हिङ्गुलाद्यष्टसु ॥ यथा। दरदपारद सस्यौवैक्रान्त कान्तमभ्रकम्। माक्षिक विमलश्चेतिस्युरेतेष्टौमहारसा ॥

महाराज । पु॰ बुद्धभेदे । मञ्जुघोषे ॥ असपत्नराज्यवति । नृपश्रेष्ठे ॥

महाराजचूत । पु॰ उत्तमाम्रे । मन्मथानन्दे ॥

महाराजद्रुम । पु॰ आरग्वधे

महाराजिक । पु॰ गणदेवताविशेषे ॥ सच्चसुधन्यसवनाद्योविंशत्यधिकशतद्वयसङ्ख्यातागौरवाद्युदर्शिता । महाराजिकनामानोद्विशतेविंशतिस्तथा ॥ महतीराजिपङ्क्तिर्येषामितितिविग्रहेहिंशादिभाषेतिकन् ॥

महारात्रि । स्त्री॰ महाष्टम्याम् । अर्द्धरात्रात्पर मुहूर्त्तद्वये ॥ ब्रह्मलयोपलक्षितायामहाप्रलयरात्राम् ॥ ब्रह्मणस्तुनिपातेचमहाकल्पो भवेन्नृप । प्रकीर्त्तितामहारात्रिसाएवचपुरातनैरितिब्र॰वै॰पु॰ ।

महाराष्ट्र । पु॰ देशविशेषे ॥ चिपलूणकसमारभ्यमध्येचोज्जयिनीशिवे। मार्जारतीर्थराजेन्द्रकोलापुरनिवासिनी ॥ तावद्देशोमहाराष्ट्र . कर्णाटस्वामिगोचर । इ॰शक्तिसङ्गमे ७ पटल ॥ अपिच। नैऋत्ये

विडानसमहाराष्ट्रास्वरैवत । ज-वन पल्लव सिन्धु पारसीबाद थोमता ॥ इ॰ज्योतिषतत्त्वे कूर्मचक्र ।।

महाराष्ट्री । स्त्री॰ जलपिप्पल्याम ।। शाकविशेषे । मरेठी॰इ॰भा॰ ।। भाषाप्रभेदे ।

महारिष्ट । पुं॰ महानिम्बे । गिरिनिम्बे ।

महारुद्र । पुं॰ महादेवे ।

महारूप । पुं॰ शिवे

महारूपकम् । न॰ नाटके ।।

मरारोग । पुं॰ पापरोगे ।। सचाष्टविधोयथा । उन्माद १ । त्वग्दोष २ । राजयक्ष्मा ३ । श्वास ४ । मधुमेह ५ । भगन्दर ६ । उदर ७ । अश्मरी ८ । इति ।।

महारोगी । त्रि॰ महारोगयुक्ते ॥

महारौरव । पुं॰ नरकान्तरे ॥ महारौरवसञ्ज्ञन्तु अधोर्द्धंतास्सम्पुटम् । धम्यतेखदिराङ्गारैर्गुरुदारापनायक ॥ देवद्रव्यापहारीचपच्यतेकालमच्ययम् ॥ महान्रौद्रोरवोऽत्र । अकन्यादित्वाद्रलोप । यहा । रुरुर्भारगुगुस्तस्योमृग । महतोरुरोरयम् । अण् ॥

महार्घ । पुं॰ लावकाख्यखगे ॥ त्रि॰ महामूल्ये ॥

महार्णव । पुं॰ महासमुद्रे ॥

महार्थ । पुं॰ परमार्थे ॥

महार्द्द । पुं॰ हद्मविशेषे । महाजा इ॰ गौ॰ दे॰ भा॰ ॥

महार्द्रम् । न॰ चन्दने ॥

महार्द्रकम् । न॰ वनार्द्रके ॥

महार्वुदम् । न॰ दशार्वुदे । शतकोटि १०००००००००० सङ्ख्यायाम् । अब्जे ॥

महार्ह । पुं॰ विष्णौ ॥ महः पूजाताम‍र्हति । अर्हइतिसूत्रात्र्यर्हतेकर्मण्युपपदेअच्प्रत्यय ॥ न॰ श्वेतचन्दने ॥

महालक्ष्मी । नारायणशक्त्याम् ॥ राधायाम् ॥ यन्मायायामोहिताश्च ब्रह्मविष्णुशिवादय । वैष्णवास्ता महालक्ष्मींपराराधावदन्तिते ॥ यद्वांशामहालक्ष्मी प्रियानारायणस्येति ब्र॰ वै॰ पुराणम् ॥

महालय । पुं॰ विहारे ॥ तीर्थमहाभागादेव्याश्चैवे ॥ परमात्मनि ॥ पितृणामुत्सवाश्रयेकन्यागतापरपक्षे कन्यागत॰ इ॰ भा॰ ॥

महालसा । स्त्री॰ देवीविशेषे ॥ दक्षिणदेशे॰ महादिस्थानमितिविख्याते॰ देवीस्थाने ॥

महालिकटभी । स्त्री॰ श्वेतकिणही वृक्षे ॥

महालीलसरस्वती । स्त्री॰ तारादेव्या प्रभेदे ॥ लीलयावाक्प्रदाचेतितेन

लीलसरस्वती ॥

महालोध्र । पु॰ लोध्रे । पटियालो ध॰ इ॰ भा॰ ॥

महालोल । पु॰ काके ॥ त्रि॰ अतिचञ्चले ॥

महालोहम् । न॰ अयस्कान्ते ॥

महावनम् । न॰ महारण्ये ॥ वृन्दावनस्यचतुरशीतिवनान्तर्गतवनविशेषे ।

महावय । पु॰ महामेदे ॥

महावरा । स्त्री॰ दूर्वायाम् ॥

महावराह । पु॰ आदिवराहे ॥ महांश्चासौवराहश्च । महत्त्वञ्चास्यातिविपुलशरीरधारणात्पृथिव्युद्धरणाय ॥

महावरोह । पु॰ प्लक्षवृक्षे ॥

महावलि । पु॰ नरवलौ ॥

महावल्ली । स्त्री॰ माधवीलतायाम् ।

महावस । पु॰ शिशुमारे ॥

महावाक्यम् । न॰ परमार्थबोधकेवैदिकोपदेशवाक्यविशेषे । सहस्थापरपर्यायेप्रतिष्ठाद्यवुत्सर्गवाक्ये ॥ योग्यताकाङ्क्षासक्तियुक्तवाक्यसमूहे ॥

महावारुणी । स्त्री॰ तिथिविशेषे । सायथा । शनिवारसमायुक्तासामहावारुणीस्मृता । गङ्गायांयदिलभ्येतकोटिसूर्य्यग्रहैः समा ॥ सा॰ वारुणीत्यर्थः ॥ महामहावारुणी तु । यथा । शुभयोगसमायुक्ताशनौ शतभिषायदि । महामहेतिविख्याता साचिकोटिकुलमुद्धरेत् ।

महावाहु । पु॰ स्कन्दे ॥ श्रीरामे ॥ महान्तौवाहूयस्य । अस्यवाहोर्महत्त्वञ्चोक्तंयुद्धकाण्डे । पिशाचान्दानवान्यक्षान्पृथिव्याञ्चैवराक्षसा अङ्गुल्यग्रेणतान्हन्यामिच्छन्हरिगणेश्वरेति ॥

महाविद्या । स्त्री॰ देवताविशेषे ॥ यथा । कालीतारामहाविद्याषोडशी भुवनेश्वरी । भैरवीछिन्नमस्ताचविद्याधूमावतीतथा । वगलासिद्धविद्याचमातङ्गीकमलात्मिका । एतादशमहाविद्या सिद्धविद्या प्रकीर्त्तिता ॥ तासांदशावतारत्वं यथा । प्रकृतिर्विष्णुरूपाचपुरुषश्च महेश्वर । एवंप्रकृतिभेदेनभेदास्तुप्रकृतेर्दश । कृष्णरूपाकालिकास्याद्रामरूपाचतारिणी । वगलाकूर्म्ममूर्त्तिःस्यान्मीनोधूमावतीभवेत् ॥ छिन्नमस्तानृसिंहः स्याद्वराहश्चैवभैरवी । सुन्दरीयामदग्न्यः स्याद्वामनोभुवनेश्वरी ॥ कमलाबौद्धरूपास्याद्दुर्गास्यात्कल्किरूपिणी । स्वयंभगवतीकालीकृष्णस्तुभगवान्स्वयम् ॥ स्वयंस्वभगवान्कृष्णः कालीरूपोभवद्विजे ॥

महाविराट् । पु॰ महाविष्णौ ॥

महाविलम् । न॰ नभसि हृच्छिद्रे ॥

महाविष । पु॰ द्विमुखसर्पे । काल

सर्पे ॥
महाविषम् । न० मेषसङ्क्रान्तौ ॥ मसूर निम्बपत्राभ्यांयोऽत्तिमेषग तेरवौ। अपिरोषान्वितस्तस्यतक्षकः किं करिष्यति ॥
महाविष्णु । पु० महाविराजि ॥
महावीचि । पु० नरकविशेषे । महावीचिय"वमहाकल्पोलिगतुमीय ते ॥
महावीर्ष्यम् । न० विटपे । मुष्कव ङ्क्षणयोरन्तरे ॥
महावीरः । पु० गरुडे ॥ शूरे ॥ सिंहे ॥ मखानले । यज्ञाग्नौ ॥ वज्रे ॥ श्वेततुरङ्गे । अन्तिमजिने ॥ कोकिले ॥ लक्ष्मणे । हनुमति ॥ एकवीरवृक्षे ॥ सन्नाभविहगे । जराटके ॥ कामदेवे । मारे ।
महावीरा । स्त्री० क्षीरकाकोल्याम् ॥
महावीर्य्य । पु० ब्रह्मणि । महदुत्पत्तिकारणमविद्यालक्षण वीर्य्यम स्य ॥ बुद्धभेदे ॥ वाराहीकन्दे ॥ त्रि० महाप्रभावे । अतिशयबलयुक्ते ॥
महावीर्य्या । स्त्री० संज्ञायाम् । सूर्य्यपत्न्याम् ॥ वनकार्पास्याम् ॥ महाशतावर्य्याम् ॥
महावृक्ष । पु० स्नुहीद्रुमे ॥
महावृहती । स्त्री० वार्ताक्याम् ॥
महावेग । त्रि० अधिकवेगवति ॥
महाव्याधि । पु० कुष्ठादिमहारोगे॥

महाव्रणम् । न० दुष्टव्रणे ॥
महाव्रतम । न० द्वादशवार्षिकव्रते॥ यथा । तेनवधकालादूर्ध्वं विंशत्यधिकशतस्त्रयावद्दविष्ट तावत्परिमाणमहाव्रतानुरूपार्धेनवोदात्या शरत्कालिकदुर्गापूजने ॥ यथा । महाव्रत महापुण्य शङ्कराद्यैरनुष्ठितम् । कर्त्तव्य सुरराजेन्द्र देवीभक्तिसमन्वितै ॥ अरुणोदयकालिकमाघस्नाने ॥ अस्तिचयोगशास्त्रेऽत्रविशेष । सयथा । अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहायमा ॥ ३० ॥ एतेजातिदेशकालसमयाऽनवच्छिन्ना सार्वभौमामहाव्रतम् ॥ ३१ ॥ येचाहिंसाद्या यमाउक्तास्तएवजात्याद्यनवच्छेदेन•दृढभूमयोमहाव्रतशब्दवाच्या तत्रहि साजात्यवच्छिन्नायथा• मृगयोमृगातिरिक्तान्नहनिष्यामीति • सैवकालावच्छिन्नायथा• नचतुर्दश्यानपुण्येऽह्नीतिसैवप्रयोजनविशेषरूपसमयावच्छिन्नायथा•क्षत्रियस्यदेवब्राह्मण प्रयोजनव्यतिरेकेणनहनिष्यामीति•युद्ध विनानहनिष्यामीतिच । एव विवाहादिप्रयोजनव्यतिरेकेणानृत नवदिष्यामीति । एवमापत्कालव्यतिरेकेण सुहृयाद्व्यतिरिक्त स्तेयनकरिष्यामीति । एवमृतुकालव्यतिरिक्त

कालेपलींनगमिष्यामीति । एव गुर्वादिप्रयोजनमन्तरेणनपरिग्रही ष्यामीति॰यथायोग्यमवच्छेदोद्रष्ट व्य । एतादृशवच्छेदोपरिहारेण यदासर्वजातिसर्वदेश सर्व्वकाल सर्वप्रयोजनेषुभवा सार्वभौमा अहि साद्योभवन्तिमहताप्रयत्नेन परिपाल्यमानत्वात्॰तदातेमहाव्र तशब्देनोच्यते । एव काष्ठमौना दिव्रतमपिद्रष्टव्यम् । एतादृशव्रत दार्ढ्येच॰कामक्रोधलोभमोहानाच तुर्णामपिनरकद्वारभूतानांनिवृत्ति। तत्राहिंसमयाक्षमयाचक्रोधस्य॰ब्रह्म- चर्य्येणवस्तुविचारेणचकामस्य॰अ- स्तेयापरिग्रहरूपेणसन्तोषेणलोभ- स्यसत्येनयथार्थज्ञानरूपेणविवेकि- नमोहस्य॰तन्मूलानाञ्चसर्वेषांनिवृ त्तिरितिद्रष्टव्यम् । इतराणिचफला निसकामानायोगशास्त्रेकथितानि॥

महाव्रती । पु॰ शिवे ॥ दरस्कटे ॥ त्रि॰महाव्रतयुक्ते ॥

महाशक्ति । पु॰ कार्तिकेये ॥ हा- रौ ॥ महतीशक्ति . सामर्थ्यमस्य॥ अतिशयपराक्रमे ॥ स्त्री॰मायाशब- लब्रह्मरूपिण्याम् । निर्गुणायाम् ॥ त्रि॰ तद्युक्ते ॥

महाशङ्ख । पु॰ नरास्थनि , कर्ण नेत्रयोर्मध्यगतास्थ्नि ॥ कर्णनेत्रान्त- रालास्थिमहाशङ्ख प्रकीर्त्ति- त ॥ दशनिखर्वे १०००००००००००० निधिप्रभे दे । अलिके । ललाटे ॥ वृहच्छङ्खे ॥ याज्ञायोगान्तरे । यथा । स्त्री स्वस्थेलाभगेशुक्रेचिपष्टे देवपूजिते । महाशङ्खाख्ययोग प्रतिप- द्यापमानद ॥

महाशठ । पु॰ राजधत्तूरे ॥ त्रि॰अ तिधूर्त्ते ।

महाशणपुष्पिका । स्त्री॰ वृहच्छणपु- ष्प्याम् । वृत्तपर्ण्याम् । श्वेतपुष्पा याम् ॥

महाशता । स्त्री॰ महाशतावर्य्याम् ॥

महाशतावरी । स्त्री॰ सहस्रवीयाया- म् । सुरसायाम् । शतवीयायाम् ॥ मह.शतावरीमेध्याहृद्यावृष्यारसाय नी । शीतवीर्यानिहन्त्यर्शोग्रहणी- नयनामयान् ॥

महाशन । पु॰ विष्णौ ॥ कल्पा- न्ते सर्वग्रसनात्महत्अशनमस्य॥ यं- मस्य । महाभैरवी । कमे ॥ मह- दशनविषयजातं यस्य ॥ अघा- सुरे । त्रि॰अतिभक्षणशीले ।

महाशफर । पु॰ पफसाख्यमत्स्ये ॥ महाशफरसञ्ज्ञस्तुतिक्त पित्तकफा पह । शिशिरोमधुरोरुच्योवात- साधारण स्मृत ॥

महाशय । त्रि॰ महेच्छे ॥ महान्- आशयोयस्य ॥ पु॰समुद्रे ॥

महाशय्या । स्त्री० राजतल्पे । वृह-
त्शय्यायाम् ॥

महाशर । पु० स्थूलशरे ॥

महाशल्क । पु० चिङ्गटमत्स्ये ॥

महाशाक । पु० शाकवृक्षे ॥

महाशाखा । स्त्री० नागवल्लायाम् ॥

महाशाल । पु० महागृहस्थे । विस्ती
र्णाभि शाखाभिर्युक्ते । सम्पन्ने ॥
महतीविस्तीर्णाशाला० गृहयस्यस ॥

महाशालि । पु० स्थूलशालौ ।
सुगन्धिके ॥ महान्श्रेष्ठ शालि ॥

महाशिव । पु० महादेवे ॥

महाशीता । स्त्री० शतमूल्याम् ॥

महाशुक्ति । पु० मुक्तामातरि ॥

महाशुक्ला । स्त्री० सरस्वत्याम् ॥ त्रि०
अतिशुक्लवर्णयुक्ते ॥

महाशुभ्र । त्रि० अतिशुभ्रवर्णयु
क्ते । न० रजते ॥

महाशूद्र पु० आभीरे ॥

महाशूद्रा । स्त्री० महत्यांशूद्रायाम् ॥
महतीशूद्रेतिविग्रहः ॥

महाशूद्री । स्त्री० आभीर्याम् ॥ महा
शूद्रस्यस्त्री० जातीयावा । पु० योगा
दिति० जातेरितिवाङीष् ॥

महाशौण्डी । स्त्री० श्वेतकिणिहीवृ-
क्षे ॥

महाशौषिर । पु० दन्तरोगविशेषे ॥
दन्ताश्चलन्तिवेष्टभ्यस्तालुचाप्यवदी
र्यते । दन्तमांसानिपच्यन्तेमुखञ्चप-
त्यते ॥ यस्मिन्ससर्वजोव्याधिर्म
हाशौषिरसञ्ज्ञित ॥

महाश्मशानम् । न० आनन्दवने । का
श्याम् ॥ महान्त्यपिचभूतानिप्रलये
समुपस्थिते । शेरतेऽत्रशवाभूत्वाश्म
शानन्तुततोभवेत् ॥ वाराणसीति
विख्यातारुद्रावासइतिद्विज । म
हाश्मशानमित्येवप्रोक्तमानन्दका
ननम् ॥

महाश्यामा । स्त्री० शिंशपावृक्षे ॥
श्यामल्याम् ॥

महाश्रम । पुं० तीर्थविशेषे ॥

महाश्रमण । पु० बुद्धभेदे । शाक्य
मुनौ ॥

महाश्रावणिका । स्त्री० कदम्बपुष्प्या
म् । महामुण्डाम् ॥

महाश्री । स्त्री० बुद्धशक्त्यन्तरे । ता
रायाम् ॥

महाश्रोत्रिय । पुं० महत्त्वेसतिश्रुता
ऽध्ययनवृत्तसम्पन्ने ॥ महांश्चासौश्रो
त्रियश्च ॥

महाश्वेता । स्त्री० शुक्लभूकूष्माण्डे ।
कृष्णगन्धिकायाम् ॥ श्वेताभूमिकू-
ष्माण्डे ॥ सरस्वत्याम् ॥ श्वेताप-
राजितायाम् ॥ सितायाम् ॥ मधुजा-
याम् । श्वेतकिणिहीवृक्षे । दुर्गायाम् ॥
महतीचासौश्वेताच ॥

महाषष्ठी । स्त्री० दुर्गायाम् ॥

महाष्टमी । स्त्री० आश्विनशुक्लाष्टम्याम्

॥ शरत्कालोद्भवायातुसैवप्रोक्ता महाष्टमी। महाराचिरितिख्यातातस्या मम्बायजेत्सुधी ॥ अष्टम्यारुधिरै र्मांसैर्महामासे सुगंधिभि । पू जयेद्बहुजातीयैर्वलिभिर्भोजनै श्शि वाम् । सिन्दूरै पट्टवासोभिर्नाना विधविलेपनै । पुष्पैरनेकजातीयै फलैर्बहुविधैरपि॥ उपवासमहाष्टम्या पुत्रवान्नसमाचरेत्। यथातथैवपूता त्मात्रतीदेवीप्रपूजयेत् ॥ पूजयि त्वामहाष्टम्यानवम्यावलिभिस्तथा । विसर्ज्जयेद्दशम्यान्तुश्रवणे तावरो त्सवै तनार्देराचपूजा यथा । कन्यास स्थेरवाविषे शुक्लाष्टम्याप्रपू जयेत् । सोपवासोनिशार्द्धेतुमहा विभवविस्तरै । पूजासमारभे द्देव्यानच्चर्वे बारुणे पिबा । पशुघा तसकत्तव्योगवलाअवधस्तथे तिदे वीपुराणे वाक्यपदेनपुर्वाषाढोच्यत इतिरघुनन्दन ॥ महाष्टम्युपवा से पारणन्तु । अष्टम्यासमुपोष्यैव नवम्यामपरेऽहनि। मध्यमासो पहारेणदद्यान्नैवेद्यमुत्तमम् ॥ तै नैवविधिनान्नन्तुस्वय भुञ्जीतनान्य थेति ॥

महासन्न । पुं॰ कुवेरे ॥ त्रि॰ अति- निकटे ॥

महासमङ्गा । स्त्री॰ ङ्गवलायाम् । खिरहिट्ष्याम् । वलायाम् । कगहि या॰ कघी॰ खरैटी॰ इ॰भा॰ ॥

महासर्ज्ज । पुं॰ असनवृक्षे ॥ प- नसे ॥

महासह । पुं॰ कुब्जकवृक्षे ॥ त्रि॰ अतिक्षमे ॥

महासहा । स्त्री॰ माषपर्ण्याम् ॥ अम्ला ने । कठसरैय्या॰इ॰भा॰ ॥ मह तीचासौसहाच । सन्महदितिसमा स । आन्महतइत्यात्त्वम् ॥

महासान्तापनम् । न॰ व्रतविशेषे ॥ अत्रयाज्ञवल्क्य । कुशोदकञ्चगो क्षीर दधिमूत्र शकृत्घृतम् । ज ग्ध्वापरेह्न्युपवसेत्कृच्छ्र सान्त पन चरन् ॥ द्रव्यसाध्यसान्तपनमु क्त्वाह । पृथक्सान्तपनद्रव्यै षड ह सोपवासक । सप्ताहेनेवक्र च्छ्रोय महासान्तपन स्मृतम् ॥ म- हासान्तपन धेनु षट्कादानसम म् ॥

महासार । पुं॰ इधूखदिरे ॥ त्रि॰ युक्तियुक्ते ॥

महासाहसम् । न॰ अतिवलात्कारकृत कार्ये ॥ अतिशयदण्डे ॥

महासाहसिक । त्रि॰ अतिसाहसयु क्ते ॥ प्रसह्यापहारिणि ॥ महाश्चा- सौसाहसिकश्च ॥

महासिंह । पुं॰ शरभे । पर्वताश्रये ॥ देव्या सिंहे ॥ यथा । तीक्ष्णदंष्ट्र करालास्य शटाशोभितकन्धर ।

चतुरङ्गिर्वेश्चनखोमहासिह : प्र-
कीर्शितहृति ॥

महासुख । पु॰ बुद्धे ॥ न॰ क्रीडा
रत्ने ॥ प्रचुरसुखे ॥ त्रि॰ तद्वति ॥

महासुगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥
त्रि॰ अतिसुगन्धयुक्ते ॥

महासूक्ष्मा । स्त्री॰ वालुकायाम् ॥
त्रि॰ अतिशयसूक्ष्मे ॥

महासेन । पुं॰ कार्त्तिकेये ॥ महासैन्य
पतौ ॥ बौद्धभेदे ॥ महतीसेनाऽस्य ॥

महास्कन्ध । पु॰ शरभे ॥ त्रि॰ महत्
स्कन्धयुक्ते ॥

महास्कन्धा । स्त्री॰ जम्बूवृक्षे ॥

महास्कन्धी । पु॰ शरभे ॥

महास्थली । स्त्री॰ पृथिव्याम् ॥ श्रेष्ठ
स्थाने ॥

महास्नायु । पु॰ कण्डरायाम् ॥

महास्रग्वी । पु॰ शिवे ॥

महास्वन । पु॰ वाद्यप्रभेदे । महातू
र्ये ॥ विष्णौ ॥ महानूर्जित
स्वन नादोऽस्य । यद्वा । महान्
स्वन श्रुतिलक्षणोनादोस्य ॥ सम्भ
वदितिसमासे॰ आत्वम् ॥ हाहच्छब्दे
॥ त्रि॰ तद्वति ॥

महाहनु । पु॰ शिवे ॥ हनूमति ॥
त्रि॰ महाहनुयुक्ते ॥

महाहवि । न॰ गोघृते ॥ ब्रह्मणि ॥
महच्चतद्धविश्च॰ ब्रह्मात्मनिसर्वजग
त्तदात्मतयाहूयतेइतिमहाहवि .
। यद्वामहाग्निहवींषिचाज्यपुरोडा
शपशुसोमादिरूपाण्यस्य॰ इन्द्रादि
देवतारूपस्ययजमानरूपस्यवेतिम
हाहवि . ॥

महाहास । पुं॰ अट्टहासे ॥

महाहिगन्धा । स्त्री॰ गन्धनाकुल्याम् ॥

महाह्रस्वा । स्त्री॰ कपिकच्छ्वाम् ।
शूकशिम्ब्याम् ॥ त्रि॰ अतिखर्वे ॥

महि । अ॰ महिमनि ॥

महि । स्त्री॰ भूमौ ॥ मह्यते । मह
पूजायाम् । चुरादिरदन्त । अच-
तादचवू ॥

महिका । स्त्री॰ हिमे ॥ मह्यते । मह
॰ । क्वुन्शिल्पिसञ्ज्ञयो ॥

महित । त्रि॰ पूजिते ॥ मह्यतेस्म
॥ मह॰ । मतिबुद्धिपूजार्थेभ्यश्चे
तिक्त ॥

महितम् । न॰ राज्ये ॥ त्रि॰ पूजनीये
॥ मह्यते । मह॰ । महेरिनण्चेति
पचेड्नन् ॥

महिमा । पु॰ शिवैश्वर्ये । ऐश्वर्याति
शये । भूतिप्रभेदे ॥ महान्भवति॰
येनसमस्तब्रह्माण्डेपिनसमवैति ॥
विभूतिविस्तारे ॥ आत्मन कर्म
निमित्त हविचयरादिर्ल्वं ॥ महतो
भाव । पृथ्वादिभ्यादिमनिच् ॥
उत्कर्षे ॥

महिमभृत् । त्रि॰ ऐश्वर्यवति ॥

महिर । पु॰ पौषे । मिहिरे । सूर्ये ॥

इतिविकाण्डशेष ' ॥

महिला । स्त्री० फलिन्याम् । गुन्द्रायाम् । प्रियङ्गौ ॥ स्त्रियाम् । योषिति ॥ रेणुकानामगन्धद्रव्ये ॥ मदमत्तायाम्योषायाम् ॥ महति० मह्यते वा । मह० । सलिकलीति०इलच् । टाप् ॥

महिलाह्वया । स्त्री० श्यामायाम । प्रियङ्गौ ॥ महिलायाआह्वयोयस्याः ॥

महिष । पुं० सुलाये । कासरे । यमवाहने । भैंसा० इ० भा० ॥ महिषस्यामिषस्वादुस्निग्धोष्णवातनाशनम् । निद्राशुक्रबलस्तन्यतनुदार्ढ्यकरगुरु ॥ दुष्यच्छेष्टिविण्मूत्रवातपित्तास्त्रनाशनम् ॥ महति ० मह्यतेवा । मह ० । अविमह्योष्टिषच् । यद्वामहतीमहिष्वीटिषच् । आगमशासनस्यानित्यत्वान्नुम् ॥ अर्हध्वजविशेषे ॥ असुराधिपविशेषे । महिषासुरे ॥ असृग्धारिणिम्लेच्छजातिविशेषे ॥ पुरायच्चवियवासीत्सगरेणास्ववेदाध्ययनाधिकारोविशान्यत्वंधर्मनाशंश्चकृत ॥

महिषकन्द । पु० महाकन्दविशेषे । शुभ्रालौ ॥

महिषघ्नी । स्त्री० दुर्गायाम् ॥

महिषध्वज . । पु० यमे ॥ अर्हद्विशेषे ॥ महिषोध्वजे यस्य ॥

महिषमर्दिनी । स्त्री० दुर्गायाम् ॥

महिषवल्ली । स्त्री० लताविशेषे । सोमाख्यायाम् ॥

महिषवाहन । पु० यमे ॥

महिषाक्ष । पु० )

महिषाख्य । पु० ) गुग्गुलौ । भृङ्गाञ्जनसमप्रभे ॥

महिषाक्षादि । न० महिषाक्षादिपञ्चानागणे ॥ यथा । महिषाक्षस्तथा 'राल निर्यास सर्जकस्यच । कृष्णागुरु कदम्बश्चमहिषाक्षादिपञ्चकम् ॥

महिषासुर । पुं० महासुरविशेषे । रम्भासुरात्मजे ॥

महिषासुरसम्भव । पु० भूमिजगुग्गुलौ ॥

महिषासुरहन्त्री । स्त्री० दुर्गायाम् ॥

महिषी । स्त्री० कृताभिषेकायांराज्ञपत्न्याम् ॥ मह्यते । मह० । अविमह्योष्टिषच् । टित्त्वान्ङीप् ॥ औषधीभेदे ॥ सैरिभ्याम् । मन्दगमनायाम् । महाक्षीरायाम् । भैंस० इ० भा० ॥

महिषीगोष्ठम् । न० महिषीशालायाम् । भैंसवाडा० इ० भा० ॥ महिषीणांस्थानम् । गोष्ठच् ॥

महिषीदुग्धम् । न० महिषीक्षीरे । सैरिभ्या स्तन्ये ॥ माहिषमधुरमत्यात्स्निग्धं शुक्रकरं गुरु । निद्राकारमभिष्यन्दिक्षुधाधिक्यकरं हिमम् ॥

महिषीप्रिया। स्त्री॰ तृणविशेषे। शुक्ला भू। शूलपल्याम्। जलाश्रयायाम्॥
महिष्मान्। पु॰ देशविशेषे॥ महिषा॰ सन्त्यस्मिन्। महिषाश्चैति यत्रसन्त्यमिति॰ ड्मतुप्॥
मही। स्त्री॰ भूमौ। पृथिव्याम्॥ मह्यते। मह॰। चुरादावदन्त। श्यन्तादच। कृदिकारादिति ङीष्॥ यद्वा। महीयते। महीङ् पूजायाम्॰ कण्ड्वादियगन्त। क्विप् चेतिक्विप्। यलोपयलोपौ। कृदिकारादितिङीष्। तदभावे विसर्गबहुलत्वात् मालवदेशवि हारियुक्तानद्याम्॥ महीजन्मसु स्वादुवल्य पित्तहर गुरु गवि॥ हिलमोचिकायाम्॥ वर्णवृत्तभ्व स्युक्याप्रभेदे॥ यथा। लघुगुरु। महीस्मृता॥ यथा। हरोऽस्तुमे। मनोमुदे॥
महीक्षित्। पुं॰ नृपे। राजनि॥ महीं॰ क्षयते॰ ईष्टे। क्षिनिवास गत्यो। मह्यांक्षयतिवा। क्षिक्ष यैश्वर्ययो। क्विप्। तुक्॥
महीज। पु॰ भौमे। मङ्गलग्रहे॥ न॰ आर्द्रके॥ त्रि॰ भूमिजाते॥
महिदुर्गम्। न॰ मृदापाषाणैर्वेष्टकै नवाविस्ताराद्विगुणोच्छ्रायेणद्वादश हस्तादुच्छ्रितेनयुद्धार्थंसुपरिभ्रमणयो ग्येनसौवर्णगवाक्षादियुक्तेनप्राकारे णवेष्टितेराज्ञांवासस्थाने॥
महीधर। पु॰ विष्णौ॥ महीगिरि रूपेणधत्ते। धरति। धृञ्॰। मह्याधर॥ अच्॥
महीध्र। पु॰ शिखरिणि। पर्वते॥ महींधरतिधारयतिवा। धृञ्॰। मूलविभुजादित्वात्क॥
महीपाल। पु॰ राजनि॥ महींपाल यति। पाल॰। कर्मण्यण्।
महीप्राचीरम्। न॰ समुद्रे॥
महीभृत्। पु॰ पर्वते॥ नृपे॥
महीमय। त्रि॰ मृत्तिकानिर्मिते मह्याविकारे॥
महीयान्। त्रि॰ महत्तरे॥
महीरुह। पुं॰ शाखिनि। पादपे। वृक्षे॥ शाकवृक्षे॥ मह्यारोहयति। रुहबीज जन्मनिप्रादुर्भावे। इगुपधलक्ष॥
महीलता। स्त्री॰ किञ्चुलुके। केंचुवा॰ इतिख्याते॥ क्षणत्वदीर्घत्वा भ्यामह्यालतेव॥
महीसुत। पु॰ मङ्गलग्रहे। लोहि ताङ्गे॥ मह्याः सुत॥
महेच्छ। त्रि॰ महाशये। महाभि लाषे॥ महतीइच्छाऽस्य॥
महेन्द्र। पु॰ कलिङ्गदेशस्थेकुलपर्व तविशेषे॥ सिद्धपीठोयमद्रि। यथा। महान्तकोमहेन्द्रेचपार्वती चमहान्तकीति॥ त्रिसामाऽपि तुल्याद्यामहेन्द्रप्रभवाः स्मृता॥

इन्द्रे ॥ महांश्चासौ • इन्द्रश्च महान्वा अयमभूद्योवृत्रमवधीदितिश्रुतेः । ईश्वरे । विष्णौ ॥

महेन्द्रकदली । स्त्री॰ कदलीप्रभेदे ॥

महेन्द्रतनया । स्त्री॰ सरिद्भेदे ॥

महेन्द्रनगरी । स्त्री॰ अमरावत्याम् ॥

महेन्द्रपर्वत । पुं॰ तीर्थविशेषे ॥

महेन्द्रमदभित् । पु॰ श्रीकृष्णे ॥

महेन्द्रवारुणी । स्त्री॰ लताविशेषे । चित्रवल्ल्याम् । महाफलायाम् । बड़ीमाकाल् • इ॰ गौ॰ दे॰ भा॰ ॥

महेन्द्राणी । स्त्री॰ इन्द्रयोषिति । पुलोमजायाम् ॥ महेन्द्रस्यस्त्री । महतीचासाविन्द्राणीचेतिवा ॥

महेन्द्रियम् । त्रि॰ माहेन्द्रे ॥ महेन्द्रो देवताऽस्य । महेन्द्राद्घाणौचेतिघ ॥

महेन्द्रीयम् । त्रि॰ माहेन्द्रे • हविरादौ ॥ महेन्द्रोदेवताऽस्य । महेन्द्राद्घाणौचेतिचकाराच्छः ॥

महेरणा । स्त्री॰ कुन्दुरुक्याम् । शल्लकीवृक्षे ॥ महदीरणमस्याः ॥ महमुत्सवमीरयतिवा । ईर॰ । ल्युः ॥

महेला । स्त्री॰ महिलायाम् ॥ वामायाम् ॥ महस्यउत्सवस्य• इला भूमिः ॥ यद्वा । महति• मह्यतेवा । सलिकलीतीलच् । पृषोदरादि ॥ माया • ईलाक्रीडावा । परमहेलारतोप्यपारदारिकइतिदमयन्तीकाव्यम् ॥

महेलिका । स्त्री॰ महेलायाम् ॥ स्वार्थेकन् ॥

महेश । पु॰ शिवे ॥ महेशान्नापरो देव ॥

महेशबंधुः । पु॰ श्रीफलवृक्षे । विल्वे । महेशस्यबन्धुरिव ॥

महेशिता । त्रि॰ परमेश्वरे । परदेवतायाम ॥ महाश्चासावीशिताच । सन्महदितिसमास ॥

महेश्वर । पु॰ शिवे । महादेवे ॥ महेश्वरस्त्र्यम्बकएवनापरइतिरघु ॥ विश्वस्थानाच्चसर्व्वेषामहतामीश्वर स्वयम् । महेश्वरस्ततेनैमप्रवदन्तिमनीषिणः ॥ महाश्चासावीश्वरश्च । सन्महदितिसमासः ॥ त्रि॰ अधीश्वरे ॥

महेश्वरी । स्त्री॰ महेश्वरपत्न्याम् । भगवत्याम्परदेवतायाम् ॥ अपराजितायाम् ॥ पित्तलप्रभेदे । कपिलायाम् । ब्रह्मरीत्याम् ॥ राजरीत्याम् । महतीचासावीश्वरीच ॥

महेष्वास । पु॰ हरौ ॥ शिवे ॥ महानवितथइष्वासइषुर्च्चेपोयस्य ॥ त्रि॰ उत्तमधानुष्के ॥

महेरण्ड । पु॰ स्थूलैरण्डे ॥

महेला । स्त्री॰ स्थूलैलायाम् ॥

महोच । पु॰ वृद्धवृषे । वृषभे ॥ महांश्चासावुक्षाच । अचतुरेति साधु ॥

महोटिका । स्त्री० )
महोटी । स्त्री० ) बृहत्याम् ॥

महोत्पलम् । न० पद्मे । नलिने । अरविन्दे ॥ महच्चतत्उत्पलञ्च ॥

महोत्सव । पु० अतिशयितसुखजनककर्मणि ॥ यथा । दुर्गातन्त्रेयामलेयकुर्याद्दुर्गामहोत्सवम् । महानवम्यांशरदिबलिदानन्दपादय ॥

महोत्साह । पुं० राज्याङ्गप्रामराजपुरुषे ॥ अतिशयोद्यमे ॥ त्रि०अतिशयोत्साहयुक्ते । महोद्यमे ॥ दुःसाध्यकार्य्येपिसाधनपरे ॥ महान् उत्साहोस्य ॥ परदेवतायाम् ॥ जगदुत्पादनाद्यर्थमुद्युक्तत्वात् ॥

महोदधि । पु० समुद्रे ॥

महोदधिशय । पुं० नारायणे ॥ प्रलयेसर्वभूतानिसङ्हृत्यैकार्णवजगत्। कृत्वाऽधिशेते ।शीङ्स्वप्ने ।घ ॥

महोदय । पु० कान्यकुब्जदेशे ॥ आधिपत्ये ॥ अपवर्गे । मोक्षे ॥ सदाकृतयुगञ्चास्तुसदाचास्तूत्तरायणम् । सदामहोदयश्चास्तुकाश्यांनिवसतांसताम् ॥ महात्मनि ॥ स्वामिनि ॥ दध्यक्तेमधुनि ॥ न०पुरविशेषे । कान्यकुब्जे ।गाधिपुरे । कनौज०इतिमहीवाहृतिचभाषा ॥ महानुदयोवैभवंयस्य०यथवा ॥

महोदया । स्त्री० मेरोश्चक्रवाटाख्योर्ध्वमेखलायाउदग्दिशिसोमस्यपुर्याम् । यथोक्तम्हेमेन्द्रसंहितायाम् । महोदयाचन्द्रमसश्श्वेतायुक्तादिनिर्मिता । द्विजसङ्घस्तुताभातिपुरैहिंमगिरिप्रभैरिति ॥ नागबलायाम् ॥

महोदर । पु० बृहदुदरे ॥ त्रि० तद्वति ॥

महोदरी । स्त्री० रवेः सङ्क्रमणविशेषे कुलाहेश्वरश्चैयदासङ्क्रमस्यान्महोदर्यंसौतस्कराणांसुखाय ॥ महाशतावर्य्याम् ॥

महोद्यम । त्रि० महोत्साहे । दुःसाध्यकार्य्येपिसाधनपरे ॥ महानुद्यमोऽस्य ॥

महोन्नत । पु० तालागमे ॥ त्रि०महोन्नतिविशिष्टे ॥

महोन्नति । स्त्री० अतिशयवृद्धौ ॥ यथा । भूयात्तेमहदैश्वर्यंपुत्रादीनामहोन्नति । अव्याधिनाशरीरेणचिरञ्जीवसुखीभव ॥

महोन्माद । पुं० फलक्याम् । फलुइ०माचह०गौ०दे०भा०प्र०मीने ॥

महोपसर्ग । पु० मार्यादिषु ॥

महोरग । पु० वासुकिसर्पे ॥ बृहत्सर्पे ॥ महांश्चासावुरगश्च ॥ न०तगरमूले ॥

महोल्का । स्त्री० क्रूरग्रहे ॥ उल्काविशेषे ॥ उल्कालक्षणन्तु । बृहच्छिखाबसूक्ष्मायारक्तनीलशिखोज्ज्वलापी

चाणिगुरुणोश्यथोत्तरम् ॥ लघुवातहरं मांसं खगानांधान्यचारिणाम् । मत्स्याशिनामपित्तकरं वातघ्नं गुरुकीर्त्तितम् ॥ फलाशिनांश्लेष्महरं लघुरूक्षमुदीरितम् । वृंहणं गुरुवातघ्नं तेषामेवफलाशिनाम् ॥ तुल्यजातिष्वल्पदेहामहादेहेषुपूजिताः । अल्पदेहेषुयस्मन्ते तथैवस्थूलदेहिनः ॥ चेष्टावतांपरंमांसं मध्यं रुच्यं लघुस्मृतम् । येमृताविषगाद्यैश्चदूरावासप्रचारकाः । तेषामभिष्यन्दिच सर्वंविपरीतमतोन्यथा ॥ जलानूपचराः सर्वे तथास्थलचराश्चये । गुरुमुख्यागुरुतरं तेषामांसमुदीरितम् ॥ धान्योत्पत्तिप्रचाराणां लघुख्यालघुपक्षिणाम् ॥ ग्राम्यं मांसं बनजमथवानूपजं वाबिलोत्थं श्वेतं पीतं हरितमरुणं पाचितं सूपकारैः । तच्च यूल्यं सरसमधुरस्वेदितं वह्नितं वायस्यप्रायोयदभिरुचितं स्मृतंतैनतद्धि॥ अपिच । मांसन्तुत्रिविधं ज्ञेयं मृदुलंकठिनंघनम् ॥ पारावतालचटकमयशूकरटिट्टिभाः । क्षुद्रमत्स्यादिकाः सर्वेमांसेषुमृदुलाः स्मृताः ॥ मृगरोहितकाद्याश्चमत्स्या मध्यकठिनस्वराः । एतेकठिनमांसाः स्युः पक्षिणोजलचारिणः ॥ गजकुम्भीरखड्गाद्याः सग



भावकंरादयः ॥ गोधागोश्चालुलायाद्याः घनमांसाः प्रकीर्त्तिताः ॥एकत्र सर्वमांसानिविरुद्ध्यन्ते परस्परम्॥ वेदयज्ञोक्तविधिनामांसस्योक्तागुणाश्रमे । मनूक्तविधिनावक्ष्ये विधिभक्षणवर्जने ॥ प्रोक्षितंभक्षयेन्मांसं ब्राह्मणानाञ्चकाम्यया । यथाविधिनियुक्तस्तुप्राणानामेवचात्यये ॥ प्राणस्यान्नमिदंसर्वंप्रजापतिरकल्पयत् । स्थावरजङ्गमञ्चैवसर्वंप्राणस्यभोजनम् ॥ चराणामन्नमचरादंष्ट्रिणामप्यदंष्ट्रिणः । अहस्ताश्चसहस्तानांशूराणाञ्चैवभीरवः ॥ नात्तादुष्यत्यदन्नाद्यान्प्राणिनोऽहन्यहन्यपि । धात्रैवसृष्टाह्याद्याश्चप्राणिनोऽत्तारएवच ॥ यज्ञायजग्धिर्मांसस्येत्येषदैवोविधिः स्मृतः । अतोन्यथाप्रवृत्तिस्तुराक्षसोविधिरुच्यते ॥ क्रीत्वास्वयवाप्युत्पाद्यपरोपकृतमेववा। देवान्पितॄंश्चार्चयित्वाखादन्मांसनदुष्यति ॥ नाद्यादविधिनामांसंविधिज्ञोऽनापदिद्विजः । जग्ध्वाह्यविधिनामांसंप्रेत्यतैरद्यतेऽवशः ॥ नतादृशंभवत्येनोमृगहन्तुर्धनार्थिनः । यादृशंभवतिप्रेत्यवृथामांसानिखादतः ॥ नियुक्तस्तुयथान्यायंयोमांसंनात्तिमानवः । सप्रेत्यपशुतांयातिसम्भवानेकविंशतिम् ॥ असंस्कृतान्पशून्मन्त्रैर्नाद्याद्विप्रः क

दाचन । अन्ते स्तु सम्भूतानद्याच्छा
स्रतविधिमास्थित ॥ कुर्याद्घृतप
शुसङ्गे कुर्यात्पिष्टपशुतथा । नत्वे
वतुवृथाहन्तु पशुमिच्छेत्कदाचन-
॥ यावन्तिपशुरोमाणितावत्कृत्वोह
मारणम् । वृथापशुघ्न प्राप्नोति
प्रेत्यजन्मनिजन्मनि ॥ यज्ञार्थंप
शव सृष्टा स्वयमेवस्वयम्भुवा ।
यज्ञोऽस्यभूत्यै सर्वस्यतस्माद्यज्ञे वधो
ऽवध ॥ ओषध्य पशवोवृक्षास्ति
र्यञ्च पक्षिणस्तथा । यज्ञार्थंनिधन
प्राप्ता प्राप्नुवन्त्युच्छ्रुती पुन ॥
मधुपर्केचयज्ञे चपितृदैवतकर्मणि ।
अत्रैवपशवोहिंस्यानान्यत्रेत्यब्रवी
न्मनु ॥ एष्वर्थेषुपशून्हिंसन्वेद
तत्वार्थवद्द्विज । आत्मानञ्चपशूंश्चै
वगमयत्युत्तमागतिम् ॥ गृहेगुरा-
वरण्येवानिवसन्नात्मवान्द्विज ।
नवेदविहिता हिंसामापद्यपिसमा-
चरेत् ॥ यावेदविहिताहिंसानि
यतास्मिञ्चराचरे । अहिंसामेवतां
विद्याद्वेदाद्धर्मोहिनिर्बभौ ॥ योऽहिं
सकानिभूतानिहिनस्त्यात्मसुखेच्छ
या । सजीवंश्चमृतश्चैवनक्वचित्सु
खमेधते ॥ योबन्धनवधक्लेशान्प्रा
णिनानचिकीर्षति । ससर्वस्यहित
प्रेप्सु सुखमत्यन्तमश्नुते यद्ध्या
यतियत्कुरुतेधृतिंबध्नातियत्र च ।
तदवाप्नोत्ययत्नेनयोहिनस्तिनकिं

च्चन आकृत्वाप्राणिनाहिंसामांस
मुत्पद्यतेक्वचित् । नचप्राणिवध
स्वर्ग्यस्तस्मान्मांसंविवर्जयेत् ॥ स
समुत्पत्तिञ्चमांसस्यवधबन्धौचदेहि
नाम् । प्रसमीक्ष्यनिवर्त्ततसर्वमां
सस्यभक्षणात् ॥ नभक्षयतियोमां-
सविधिंहित्वापिशाचवत् । सलोके
प्रियतांयातिव्याधिभिश्चनपीड्यते ॥
अनुमन्ताविशसितानिहन्ताक्रयवि
क्रयी । संस्कर्ताचोपहर्ताचखाद-
कश्चेतिघातका ॥ स्वमांस परमां
सेनयोवर्द्धयितुमिच्छति । अनभ्यर्च्य
पितॄन्देवान्ततोन्योनास्त्यपुण्यकृ
त् ॥ वर्षेवर्षेश्वमेधेनयोयजेतशतस
मा । मांसानिचनखादेद्यस्तयो
पुण्यफलसमम् ॥ फलमूलाशनैर्मे
ध्यैर्मुन्यन्नानाञ्चभोजनै । नतत्-
फलमवाप्नोतियन्मांसपरिवर्जना
त् ॥ ५४ ॥ मांसभक्षयितामुत्रयस्य
मांसमिहाद्म्यहम् । एतन्मांसस्य-
मांसत्वं प्रवदन्तिमनीषिण ॥ न-
मांसभक्षणेदोषोनमद्येनचमैथुने ।
प्रवृत्तिरेषाभूतानांनिवृत्तिस्तुमहा-
फला ॥ अपिच । श्रीमद्भागवते
क्वे । मांसन्तुत्रिविधंप्रोक्तं जलभूच
रखेचरम् । यस्मात्तस्मात्समानी
तयेनकेनविघातितम् ॥ तत्सर्वं दे-
वताप्रीत्यै भवेदेवनसंशय । स्वाध
कौघ्वावलवतोदैवैश्वस्तुनिदैवते ॥ य

ह्यदात्मप्रियद्रव्यंतत्तदिष्टायकल्प येत ॥ बलिदानविधौदेवविहि- त पुरुष पशु । स्त्रीपशुर्नचहन्त व्यस्तथशाभवशासनात् ॥ मन्यते- देवादिप्रीत्यर्थम् । मनन्नामे । म मेदीर्घवं तिस ॥

मांस । पु० काले । कीटे ॥

मांसकारि । न० रक्ते । रुधिरे ॥

मांसच्छदा । स्त्री० मांसरोहिणीविशे षे । मांस्याम् । सुलोमायाम् ॥

मांसजम् । न० मेदसि ॥

मांसतेज । न० मेदसि ॥

मांसदलन । पु० प्रीष्मद्रवे ॥

मांसद्रावी । पु० अम्लवेतसे

मांसप्रचनम । न० मांसपाके ॥

मांसपेशी । स्त्री० गर्भस्यावयवविशेषे॥ यथा । बुद्बुद सप्तरात्रेणमांसपेशी भवेत्तत । द्विसप्ताहात्भवेत्पेशी रक्तमांसचिताद्दढा ॥ बीजस्यैवा- ङ्कुरा पेश्य पञ्चविंशतिरात्रत ॥

मांसप्रलेह । पु० प्रलेहविशेषे ॥ प- थ्यप्रलेहम् ॥

मांसफला । स्त्री० वार्त्ताक्याम् ॥

मांसभक्ष । त्रि० मांसभक्षणकर्त्त- रि ।

मांसमाषा स्त्री० माषपर्ण्याम् ॥

मांसरस पु० भोल० रसा० इति ख्यातेमांसस्यजले ॥ सिद्धमांसरसो रुच्य श्रमश्वासक्षयापह । प्रीण नोवातपित्तघ्न : क्षीणानामल्परेत- साम् ॥ विश्लिष्टभग्नसन्धीनाशुक्रा- नाशुक्रकाङ्क्षिणाम् । स्मृत्योजोव लक्षीनानाज्वरक्षीणक्षतोरसाम् ॥ प्रशस्तेस्वरक्षीनानाद्दष्ट्यायु श्रवणा र्थिनाम् ॥

मांसरोहिणी । स्त्री० सुगन्धिद्रव्यविशे षे । चर्मकषायाम् । चर्मकषाया म् । विकषायाम् ॥ स्यान्मांसरो हिणीवृष्यासरादोषत्रयापहा ॥

मांसलम् न० काव्यस्यगौडीरीत्यन्त र्गतस्यौजोगुणस्याङ्गविशेषे ॥ यथा । ओज समासभूयस्त्व मांसलपदड म्बरम् ॥ त्रि० असले । बलवति ॥ स्थूले ॥ यथा । निस्तलक्षकुरेखा सु निंद्रव्याविपुलेष्ठ क्ष्णे । मां सलेस्वधमोपेताथवक्रे रधनेन्दुपा ॥ मांसमस्त्यस्य । सिध्मादित्वाल्लच् ॥ पु० माषे ॥

मांसलफला । स्त्री० वृन्ताक्याम् ॥

मांसविक्रयी । त्रि० वैतसिके । कौ- टिके ॥ सद्यदपिमांसविक्रयकारि- णि ॥ सद्य पततिमांसेनलाक्षया लवणेनच ॥

मांसव्यध । त्रि० मांसखण्डने ॥ मां सस्यव्यधनम् ॥ व्यधजपोरनुपस र्गे० इत्यप् ॥

मांसशृङ्गाटकम् । न० मांसप्रकारवि

र्षि । मासकाचिखूट॰ इतिभाषा ॥ शुष्कमासतनूकृत्यकर्त्तितखेदितं जले । लवङ्गहिङ्गुलवणमरिचाद्र्रकसयुतम् ॥ एलाजीरकधान्याकनिम्बूरससमन्वितम् । घृतेसुगन्धितंमृष्टपूरणंप्रोच्यतेबुधैः ॥ शृङ्गाटकसमितयाकृतपूरणपूरितम् । पुनः सर्पिषसम्भृष्टं मासशृङ्गाटकंवदेत् ॥ मांसशृङ्गाटकंवृष्यं हृद्यं बलकृद्गुरु ॥ वातपित्तहरं हृद्यंकफघ्नंवीर्यवर्द्धनम्

मांससार । पु॰ मेदसि ॥ मांसस्य सार ॥

मांसस्नेह । पु॰ मेदसि ॥

मांसस्रावा । स्त्री॰ चर्मणि ॥

मासिक । त्रि॰ मासभिक्रयजीविनि । वैतसिकः ॥ मास पण्यमस्य । तदस्यपण्यमितिठक् ॥ यद्वा । मासनियुक्तदीयतेऽस्मै । आवश्यमांसौदनादितिटिठन् । टित्वान्ङीप् ॥ इकारउच्चारणार्थं ॥

मासिका । स्त्री॰ मांस्याम् ॥ मन्यते । मनज्ञाने । मनेर्दीर्घश्चेतिसः । गौरादि । स्वार्थेकन् ॥

मासिनी । स्त्री॰ जटामांस्याम् ॥

मांसी । स्त्री॰ ककोल्याम् ॥ मांसच्छदायाम् ॥ तपस्विन्याम् । जटामांस्याम् ॥ मांसीतिक्ताकषायाचमेध्याकांतिबलप्रदा । स्वादीहिमाचदोषास्रदाहवीसर्पकुष्ठनुत ॥ मन्यते । मन॰ । मनेर्दीर्घश्चेतिस । गौरादि ॥

मासिष्टा । स्त्री॰ पक्षिप्रभेदे । बक्कुलायाम् । दिवाधायाम् वादुड इ॰भा॰ ॥

मांसौदनम् । न॰ मांससंयुक्तौदने । पलौदने ॥

मांसौदनिक । त्रि॰ मांसौदनार्हे ॥ मांसौदननियुक्तंदीयतेऽस्मै । आवश्यामांसौदनाट्टिठन् । टीकोवर्थ । इकारउच्चारणार्थ ॥

मांस्यादि । पु॰ जटामांस्यादिसमानगणे ॥ जटामासीनखपर्णीसवङ्गतगररसः । शिलयागन्धपाषाण सप्तमांस्यादिकाश्मी ॥

माकन्द । पु॰ सहकारे ॥

माकन्दी । स्त्री॰ आमलकीफले ॥ नगरविशेषे ॥ बहुमूल्याम् । मादन्याम् । गन्धमूलिकायाम् । माद्राणी॰मागनी॰इ॰भा॰ ॥ पीतचन्दने ॥

माकरी । स्त्री॰ माघशुक्लसप्तम्याम् ॥ यद्यज्जन्मकृतपापमयासप्तसुजन्मसु । तन्मरोकश्चशोकश्चमाकरीहन्तु सप्तमीतिपठित्वास्नायात् ॥ एषसप्तमीतिनामाक्षरम् ॥ रोकञ्चिद्रम् ॥

माकिम् । अ॰)

माकिर् । अ॰)वर्ज्जने ॥

माक्षीम् । अ० बक्षने ॥

याकोट । पु मुकुटे श्वय्यांस्थाने ॥ माकोटे मुकुटे श्वरीतिदेवीगीता ॥

माक्षिकम् । न० मधुनि ॥ मक्षिकाभि क्षतम् । सज्ञायामित्यण् ॥ तैलवर्णमधुनि ॥ मक्षिका . पिङ्गवर्णास्तु महत्योमधुमक्षिका । ताभि क्षततैलवर्णं माक्षिकपरिकीर्त्तितम् ॥ माक्षिकमधुषुश्रेष्ठ नेत्राम यहरलघु । कामलार्शं क्षतश्वास कासक्षयविनाशनम् ॥ धातुमाक्षिके । स्वर्णमाक्षिके ॥ तापिच्छे । पीतमाक्षिके माक्षिकद्विविध प्रोक्तहेमाख्य तारमाक्षिकम् । भिन्नवर्णविशेषत्वाद्रसवीर्यादिक पृथक् ॥ तारपादादिकेतारमाक्षिक सुप्रशस्यते । देहेहेमाभकंशस्त रोगहृहलघु ष्टिदम् ॥

माक्षिकजम् । न० सिक्थके ॥

माक्षिकधातु । पुं० माक्षिके । स्वर्णमाक्षिके ॥

माक्षिकफल । पु० मधुनालिकेरके ॥

माक्षिकशर्करा । स्त्री० सिताखण्डे ॥

माक्षिकाश्रयम । न० सिक्थके ॥

माचीकम् । न० मधुनि ॥

माचीकशर्करा । स्त्री० सिताखण्डे ॥

मागध । पुं० वैश्यत : क्षत्रियायामुत्पन्ने वर्णसङ्करजातिविशेषे । भाटस्तुतिख्याते । शुक्लजीरके ॥ जरासन्धनृपे ॥ कीकटदेशान्तर्वर्त्तिदेशविशेषे । मगधे ॥ पार्थिवस्तनके ॥ वंशक्रमेणामहत्त्ववेदिनिराजायस्तुतिकारिणि । मधुके । वन्दिनि । स्तुतिपाठके । तस्योत्पत्तिर्विष्णुपुराणे यथा । ततोऽस्य दक्षिणे हस्ते मन्थमाने तदाद्विजा । मथ्यमानेच तस्याभूत्पृथर्वैण्य प्रतापवान् ॥ तस्यैवजातमात्रस्ययज्ञे पैतामहेशुभे । सूत सूत्यासमुत्पन्न सौत्येऽहनिमहामते ॥ तस्मिन्नेवमहायज्ञे जज्ञे प्राज्ञोथमागध । प्रोक्तातदामुनिवरैस्तावुभौसूतमागधौ ॥ स्तूयतामेषनृपति पृथुवैण्य प्रतापवान् ॥ सूत्यामिति०सूति ० अभिषूति ० अभिषूयतेकण्डातेस्मोऽस्यामितिसूति सोमाभिषवभूमिस्तस्याम् । सौत्येऽहनि०तस्मिन्नेवदिने० इत्यर्थं ॥ वंशपरम्परा प्रसक्तोऽयम् ॥ मगध्यतियाचते । मगधपरिवेष्टने कण्ड्वादियं गन्तव्य । अच् । यस्यहलइतियलोप । प्रज्ञाद्यण् ॥ मागधावंशशंसका । वंशोदीरणे नयेयाचन्ते ०तेमागधाइत्यर्थं ॥ त्रि० मगधोद्भवे ॥

मागधादेवी । स्त्री० राधिकायाम ॥

मागधी । स्त्री० कणायाम् । पिप्पल्याम् ॥ यूथ्याम् ॥ भाषाप्रभेदे ॥

उक्तादिभरतसूत्रे । भिन्नु कत्तपद्य कराजसान्त पुरावासिचेटकादी नां मागधीति मगधे देशेभवा । तत्रभवइत्यण् ॥

मागमा । स्त्री० कर्कव्या ॥

माघ । पु० मासविशेषे । तपसि ॥ ऋतुजातस्यफलम् । यथा । विद्या विनीतस्वकुलप्रधानसदासदाचारयु त प्रवीण । योगानुरक्तोविषयेषुसक्तो माघे यमासे मघवानिवेश इति॥ माघीपौर्णमास्यस्मिनपौर्णमासी त्यण् ।। श्रीदत्तकसूनौशिशुपाल वधमहाकाव्यकर्त्तरि ॥ तस्यनाम्ने वख्याते महाकाव्ये ॥ यथा। पुष्पे षुजातीनगरेषुकाशी नारीषुरम्भा पुरुषेषुविष्णु । नदीषुगङ्गानृप तौचराम काव्येषुमाघ कवि कालिदास ॥ इत्याधुनिक क- श्चित्

माघवती । स्त्री० पूर्वदिशि ॥

माघवनम् । त्रि० इन्द्रसम्बन्धिनि ।। मघवतइदम् । अण् ॥

माघी । स्त्री० तपोमासस्यपूर्णिमाया म् ।। मघयायुक्तापौर्णमासी । नक्षत्रेणयुक्तः कालः । ततोङीप् ॥

माघोनी स्त्री० पूर्व्वदिशि ॥

माघ्यम् न० कुन्दपुष्पे ॥ माघेसा धु । तत्रसाधुरितियत् ॥ माघेभव म् । दिगादित्वाद्यत् ॥

माङ् । अ० निषेधे ॥ आशङ्कायाम्॥

माङ्गलिक । पु० प्रणवे अथशब्दे ॥ प्रणवश्चाथशब्दश्चद्वावेतौब्रह्मण पु रा । कण्ठं भित्त्वाविनिर्यातौतस्मा न्माङ्गलिकावुभौ ॥ मङ्गलायहितेय मार्थे तूर्यादिवाद्ये ॥ स्वर्गाङ्गिताभी ष्टार्थसिद्धिर्मङ्गलम् । मङ्गलप्रयोज नमस्य । प्रयोजनमितिठक् ॥ यथा माङ्गलिकआचार्य्य इति ॥

माङ्गल्यम् । न० मङ्गलक्रियायाम् ॥ मङ्गलायहिते ।। यथा । माङ्ग ल्यं पुत्रविवाहेषुकन्यास वरणेषुच । दशमासा प्रशस्यन्ते चैत्रपौषविव र्जिता ॥ इतिराजमार्त्तण्ड ॥ मङ्गलस्यभाव । भाविष्यञ् ॥

माङ्गल्यार्हा । स्त्री० त्रायमाणायाल तायां ॥

माच । पु० पथि ॥

माचल । पु० बन्दिचौरे ॥ रुजि ॥ ग्राहे ॥

माचिका । स्त्री० मक्षिकायाम ॥ अ म्बष्ठायाम् ॥ मोइया० इ० पश्चि मदेशप्रसिद्धायामौषधौ ॥ माचिका म्लारसे पाकेकषायाशीतलालघु । पक्वातीसारपित्तास्रकफकण्ठाम यापहा ॥

माचिरम् । अ० शीघ्रे ॥

माचीपत्रम् । न० सुरपर्णे ॥

माजल । पु० चाषपक्षिणि ॥

माञ्जिष्ठम् । न० लोहितवर्णे ॥ त्रि० तद्वति ॥ मञ्जिष्ठयारक्तम् । तेनरक्तं रागादित्यण् ॥

माटामक । पु० वृक्षविशेषे ॥

माठार । पु० व्यण्डांशो पार्श्वि पार्श्वके । सूर्यानुगे ॥ व्यासे विप्रे ॥ मठत्यनेन । मठमदनिवासयो । पुसीतिघ । मठराति । रा० । क । मठरस्यापत्यम् । विदादित्वात् ॥ मगादित्वात् माठर्य ॥

माड । पु० वृक्षविशेषे । भूजवृक्षे । वितानके । मद्यद्रुमे । माडर्य नौ • द्रु० कोकणप्रसिद्धे ॥

माडज । पु० वर्णसङ्करजातिविशेषे यथा । लेटस्तो वरकन्यायाजनया मासषण्णनरान् । माल मल्लमाडश्च भड कोल कलन्दर ॥

माडुक । पु० माडुकिके ॥ मड्डुकवाद्नशिल्पमस्य । मड्डुकझर्भराद्-न्यतरस्यामित्यण् ॥

माड्डुकिक । पु० माड्डुके ॥ मड्डुकवादनशिल्पमस्य मड्डुकझर्भरा-दितिपक्षे ठक् ॥

माढि । स्त्री० पत्रभङ्गे ॥ पत्रशिरा-याम् ॥ दैन्यप्रकाशने ॥ देशविशे-षे ॥ अर्चायाम् ॥ मडगमनवाचा । मड० । क्तिन् । ढत्वष्टुत्वढलोप दीर्घा ॥

माढी । स्त्री० दन्तशिरायाम् ॥

माणक । पु० वृक्षविशेषे । स्थलप-द्मे । वृहच्छदे ॥ न०कन्दविशेषे । मानकचू०द्रु०गौ०दे०भा० ॥

माणव । पु० बालके ॥ अपत्येकुत्सि तेमूढे मनोरौत्सर्गिक स्मृत । नकारस्यचमूर्द्धन्यस्तेनसिद्ध्यतिमाण व ॥ मनोरयम् । तस्येदमित्यण् । ब्राह्मणमाणवेतिनिपातनाण्णत्वम् ॥ षोडशयष्टिकहारे ॥

माणवक । पु० विंशतियष्टिकाभि-र्निर्मितेहारविशेषे ॥ बालके । षो-डशवर्षपर्यन्तप्रथमवयस्के ॥ कुपु-रुषे ॥ माणवोबाल • सञ्ज्ञा । इवेप्रतिकृताविति कन् ॥ यद्वा । अल्पोमाणव ॥ अल्पकृतिक ॥ न०अनुष्टुप्प्रभेदे ॥ भात्तलगामा-णवकम् ॥ यथा । चञ्चलचूडं चप लैर्वत्सकुलै केलिपरम् । ध्याय सखेस्मरमुख नन्दसुत माणवकम् ॥

माणवक्रीडम् । न० अनुष्टुप्छन्दो विशेषे । माणवके ॥ भादिगणक-र्ण धर लाश्रमिद वृत्तवरम् । पन्नग-राजेनकृत माणवकक्रीडमिदम् ॥ यथा । कोकवधूशोकहर पद्मवनी-बोधकरम् । गाढतमोनाशकर मौ-मिलरामुष्यकरम् ॥

माणवीनम् । त्रि० माणवसम्बन्धिनि ॥ माणवायहिते ॥ माणवचरकाभ्यां-

खञ् ॥

माणव्यम् । न० माणवकवृन्दे ॥ माण-वानांसमूहः । ब्राह्मणमाणववाड-वाद्यन् ॥ माणवत्वे ॥ माणवस्यक-र्मभावोवा । ब्राह्मणादित्वात्ष्य-ञ् ॥

माणिका । स्त्री० अष्टपलपरिमाणे ॥

माणिक्यम् । न० रत्नविशेषे । शोण रत्ने । रत्नराजि । रविरत्नके । पद्म रागे । कुरुविन्दे । माणिक०माण क० इतिभाषा ॥ तस्यलक्षणं यथा स्निग्ध गुरुगात्रयुत दीप्त स्वच्छ सुर-ङ्गद समाङ्गम् । इतिजात्य माणि-क्यकल्याण धारणात्कुरुते ॥ तस्य-दोषायथा । द्विच्छायमभ्रपिहित क र्कशमार्करिल भिन्नधूम्रस्त्र । विरूप रागविमल लघुमाणिक्य नधारयेद्धी मान् ॥ तस्यचतुर्विधाजातिर्यथा तद्रक्त यदिपद्मरागमथतत्पीतातिरक्त द्विधाजानीयात्कुरुविन्दकयद रुण स्यादेषसौगन्धिकम् । तन्नील यदिनीलगन्धिकमितिज्ञेय चतु-र्धाबुधैर्माणिक्यकमघर्षणेप्यविक-लरागेणजात्यजग्र ॥ विशेषोन्यत्र युक्तिकल्पतरौद्रष्टव्य ॥ मणिक-मेव । चतुर्वर्णादीनास्वार्थेउपसङ्ख्यानमितिष्यञ् ॥

माणिक्या । स्त्री० ज्येष्ठ्याम् । मुस-ल्याम । गृहगोधायाम् । पल्ल्याम् ॥

माणिमन्थम् । न० सैन्धवलवणे ॥ म णिमन्थाख्ये पर्वतेभवम् । तत्रभव इ० अण् ॥

माण्डलिक । पु० ग्रामस्यराज्ञि ॥ मण्डलइव । अङ्गुल्यादिभ्यष्ठक् ॥

माण्डूक्यम् । न० उपनिषद्विशेषे ॥

मातङ्ग । पु० श्वपचे । गजे । हस्तिनि ॥ अर्हदुपासकविशेषे ॥ मतङ्गस्याय-म् । तस्येदमित्यण् ॥ मतङ्गस्याप-त्यम । शिवाद्यण्वा ॥

मातङ्गनक्र । पु० मातङ्गाकारेग्राहे ॥

मातङ्गमकर । पुं० मत्स्यप्रभेदे । मातङ्गाकारेनक्रे ॥

मातङ्गी । स्त्री० महाविद्याविशेषे ॥ मतङ्गस्यमुने. कन्यामातङ्गीसाप्रकी र्तिता ॥

मातरपितरौ । पु० द्विवचनान्तोयम् । सहोक्त्यामातापित्रो ॥ माताच पिताच । मातरपितरावुदीचामि तिपूर्वपदे० ऋकारस्यारङादेशोनि पातनात् ॥

मातरि । अ० अन्तरीक्षे ॥ सप्तम्यन्तप्रति रूपकमव्ययम् ॥

मातरिश्वा । पु० वायौ । सर्वप्राणभृ तांक्रियाहेतुभूते ॥ मातरि० अन्त-रिक्षेश्वयतिवर्द्धतेगच्छति । टुओश्वि गतिवृद्ध्यो । यद्वा । मातरि-

जनन्याम्० ग्रवयतिवर्द्धते० सप्तस-
मकत्वात्० गर्भस्थएवायशब्दं योन
पश्चाद्याग जनतइत्युपाख्यायते।
ग्रन्न्घञ्चितिसूत्रे० कनिप्रत्ययोधा
तोरिकारलोपश्चनिपातनात्० सप्त
म्याश्चलुक्च॥ मातरीतिसप्तम्यन्त
प्रतिरूपकमव्ययवा॥

मातलिः। पु० इन्द्रस्यसारथौ॥ मत
लाति। चातोनुपेतिक । मतल
स्यापत्यम। चतइञ्॥

मातापितरौ। पु० द्विवचनान्तोय
म्०० पित्रो। मातरपितरौ०॥
माताचपिताच। चानङ्ऋतोद्वन्
द्वे॥ अभ्यर्हितत्वात्पूर्वनिपात।
चतुर्दशगुणमातागौरवेणातिरिच्य
ते॥

मातापुरम्। न० सह्याद्रौरेणुकाधिष्ठि
तेचम्बिकास्थाने॥

मातामह। पु० मातु पितरि॥
मातु पिता। मातृपितृभ्यांपित-
रिडामहच्॥

मातामही। स्त्री० मातुर्जनन्याम्॥मा
तुर्माता। मातरिषिच्चेतिडामहच्।
षित्त्वान्ङीष्॥

माति। स्त्री० माणे॥ अवच्छेदे॥
मानम्। माङ्०। क्तिन्॥

मातुल। पुं० मातुर्भ्रातरि। पितृ-
व्यादौ॥ मातुर्भ्राता। पितृव्यमातु-
लेतिनिपातनात्० मातुर्डुलच्॥

औषधिप्रभेदे॥ मदनद्रुमे॥ सर्पविशे
षे॥ धूस्तूरे॥ मास्ति० नास्तितुला
यस्य॥ मा० श्री तुलाऽस्येतिवा०
कनककामकत्वात्॥

मातुलक। पुं० धूस्तूरवृक्षे॥

मातुलपुत्रक। पुं० धतूरस्यफले॥
मातुलस्यपुत्रएव। कन्॥ मातुल
स्यसुते॥

मातुला। स्त्री० मातुलान्याम्॥

मातुलानी। स्त्री० मातुलस्यस्त्रिया-
म्॥ मातुलस्य स्त्री। इन्द्रवरुणे-
त्यादिनामातुलशब्दात्पुयोगे० मा
तुलोपाध्याययोरानुक्० ङीष्च॥
कलाये॥ भङ्गायाम्॥ मायास्तु
ला० मातुलामानयति। अनप्राण
नेगर्भोवा। कर्म्मण्यण्। ङीप्॥
मातुलस्यधत्तूरस्यस्त्रीववा। पूर्व
वन्ङीषानुकौ॥ शणे॥ प्रियङ्गु
वृक्षे॥

मातुलाहि। पु० चित्रसर्पे। मातु
धाने॥ मातुलयति। मूलविभुजा
दित्वात्क। मातुलश्चासावहि-
श्च। मालुयासाप० फेयुयाटी० इ-
तिचयएगौडदेशेप्रसिद्धि०। अय
खट्वाङ्गकृतिरायतदेहोदीर्घलाङ्गूलश्च-
तुष्पादितिकेचित्॥

मातुली। स्त्री० मातुलान्याम्॥ मातु
लस्यस्त्री। मातुलोपाध्याययोरानु
गवे स्यानु गागमाभावे० इन्द्रवरुणे

तिक्तीषु ॥ भङ्गायाम् ॥

मातुलुङ्ग । पु॰ बीजपूरे । ष्कोलङ्के । टाबालेबु॰ गौ॰ दे॰ भाषा ॥ मिनाश्यरुचिम् । मौञ्जिसायाम् । बाहुलकात्तुन् । लुञ्च्यते । लुञ्जिभाषार्थं । घञ् । चजोरिति कुत्वम् । न्यङ्क्वादित्वाद्वा । मातु चासौलुङ्गश्च ॥

मातुलुङ्गक । पु॰ ष्कोलङ्गके । फलपूरे । बीजपूरे । रुचिके ॥ स्वार्थेकन् ॥

मातुलुङ्गा । स्त्री॰ मधुकुक्कुट्याम् ॥ यथा । मातुलुङ्गासुगन्धान्यागिरि आपूतिपुष्पिका । अन्यस्मादेवदूतीच साक्षच्चिम्मभुकुक्कुटी ॥ इतिरत्नमा ला । मखुर॰ इ॰मदूर॰ इ॰ गौ॰ देशभाषा॰ ॥

मातुलुङ्गिका । स्त्री॰ वनबीजपूरे ॥

मातुलेय । पु॰ स्त्री॰ मातुलस्यापत्ये । शुभ्रादित्वात्ढक् ॥

माता । त्रि॰ प्रस्थादिनाधान्यादिमा तरि ॥ मिनोति । डुमिञ्॰ तृच् पु॰ साधिष्ठानबुद्धिस्थचिदाभासरू पेप्रमातरि ॥

माता । स्त्री॰ जनयित्र्याम् । प्रस्वाम् । जनन्याम । सवित्र्याम । मा॰ इ॰भाषा ॥ आपदिमातैवशरणम ॥ षोडशप्र कारामातरो यथा । स्तनदात्रीगर्भ धात्रीभक्ष्यदात्रीगुरुप्रिया । अभीष्ट देवपत्नीचपितुः पत्नीचकन्यका ॥ सगर्भजायाभगिनीपुत्रपत्नीप्रियाप्रसूः । मातुर्मातापितुर्मातासोदरस्यप्रिया तथा ॥ मातुः पितुश्चभगिनीमातुलानी तथैव च । जनानांवेदविहितामातरः षोडशस्मृताः तस्यागौरव यथा । जनकोजन्मदानत्वात्पालनाच्च पितास्मृतः । गरीयान्जन्मदातु श्च योऽन्नदातापितामुने ॥ विनान्ना न्नश्वरोदेहोनित्यः पितुरन्नतः । तयो शतगुणं मातापूज्यामान्या चवन्दिता ॥ गर्भधारणपोषाभ्यां साचताभ्यांगरीयसी । इतिब्र॰ वै॰ पु॰ । अन्यत्मनुर्यथा । उपाध्याया न्दशाचार्य आचार्याणांशतं पिता । सहस्रन्तुपितृन्मातागौरवेणाति रिच्यत इति ॥ नपितुर्वचनं कार्यं यथा । मातुः सुतैनच । पिताच पतितस्त्याज्योनमातासत्सुतैनच ॥ गर्भधारणपोषाभ्यांततोमातागरी यसी । इत्यविप्राडुपाध्यायोगौरवे णातिरिच्यते ॥ तेभ्यः पितादशभ्य श्चमाताचैवगरीयसी । मातृतोन्यो नदैवोऽस्तितस्मात्पूज्यासदासुतैः ॥ मातुश्चयद्धितं किञ्चित्कुरुते भक्ति तः पुमान् । तद्धर्मं हिविजानीया देवं धर्मविदोविदुः ॥ पितुर्भगिन्यां मातुश्च ज्यायस्यांचस्वसर्यपि

मातृवत्पूजयिमातिष्ठे नृमातातास्यो गरीयसीतिमनु ॥ त्वमाद्येजगतां मातापिताब्रह्मपरात्परम् । युव-यो प्रीयानंयस्मात्तस्मात्किंगच्छि यातप ॥ स्वभावतोभवेन्माता-पुत्रे तिकवयावती। तेनभक्तोञ्जता यान्तुवक्तव्य किंतत परम् । धि गस्तुजन्मतेषावैक्कृतघ्नानान्तु पापि-नाम् । येसर्वमातरदेवींखोपास्या-मभजन्तिवै ॥ नशिवोपासनानि-त्यानविष्णूपासनातथा । नित्योपा स्ति पुरादेव्यानित्याश्रुत्यै वचोदि ता ॥ किमयावहुवक्तव्यंस्थानेसंश यवर्जिते। सेवनीयापदाम्भोजभग वत्यानिरन्तरम् ॥ गवि ॥ भूमौ ॥ दुर्गायाम् ॥ लक्ष्म्याम् ॥ रेवत्याम् ॥ आखुकर्ण्याम् ॥ इन्द्रवारुण्या म् ॥ महाश्रावण्याम् ॥ जटामां स्याम् ॥ गौर्यादिषु ॥ यथा । गौ रीपद्माशचीमेधासाविचीविजयाज या । देवसेनास्वधास्वाहाशान्ति पु ष्टिधृ ति क्षमा । आत्मनोदेवता-चैवतथैवकुलदेवता ॥ ब्राह्म्यादिषु ॥ यथा । ब्राह्मीमाहेश्वरीचैन्द्रीवारा-हीवैष्णवीतथा । कौमारीचैवचामु ण्डाचर्चिकेत्यष्टमातर ॥ सप्तमा तरोयथा । ब्राह्मीमाहेश्वरीचैवकौमा रीवैष्णवीतथा । वाराहीचतथेन्द्रा णीचामुण्डासप्तमातर ॥ मान्य ते॰ पूज्यन्ते लोकमातृत्वादितिमा-तर । मानपूजायाम् । नप्तृने ष्टृ॰ इत्याद्युणादिसूत्रे चनिपाति त ॥ मान्तिशिवपरिवारत्वेनस मानियन्तीतिवा ॥ मातिगर्भोऽस्यां वा ॥ विभूतौ ॥

मातृकम् । त्रि॰ मातुरागते ॥ तत-आगतइत्यधिकारे॰ ऋतठञ् ॥

मातृका । स्त्री॰ धातृकायाम् । उप-मातरि ॥ मातरि । जनन्याम् ॥ देवीप्रभेदे ॥ वर्णमालायाम् । चा दिवान्तवर्णे ॥ कर्णे ॥ स्वरे ॥ ऐ-श्वर्य्याम् । गृहचरे । मातेव । स्वार्थे तद्धित ॥

मातृकेशट । पु॰ मातुले ॥

मातृतुल्या । स्त्री॰ । मातु समाना सु ॥ तायथा । मातृष्वसामातुला नीपितृव्यस्त्रीपितृष्वसा । श्वश्रू पूर्व अपत्नीचमातृतुल्या प्रकीर्त्तिता ॥ मात्रातुल्या ॥ मातृशब्दसत्त्वा च्यामातृतुल्यत्त्वयथा । मातरित्ये वशब्दे नयाश्च सत्त्वाप्यतेनर सा मातृतुल्यासत्यं मधर्म . साक्षी-सतामपि ॥

मातृनन्दन ः । पुं॰ कार्त्तिकेये । म-हासेने ॥

मातृबान्धव । पुं॰ मातुर्भ्रात्रादिषु ॥ मातुर्मातापिताभ्रातामातुर्भ्रातु . सुतास्तथा । मातु पितु . सोदरा

खिनिश्चली । परिनिश्चिततत्त्वोय समुक्त कर्मबन्धनात् ॥ नमुक्तिर्ज पनाद्धोमादुपवासशतैरपि । ब्रह्मै वाहमितिज्ञात्वामुक्तोभवतिदेहभृ त ॥ आत्मासाक्षीविभ पूर्ण सत्योऽद्वैत परात्पर । देहस्थो पिनदेहस्थोज्ञात्वैव मुक्तिभाग्भवे त् बालक्रोडनवत्सर्वं रूपनामादि कल्पनम् । विहायब्रह्मनिष्ठोय स मुक्तो नात्रसंशयइतिश्रीमहानिर्वाण तन्त्रे कुलार्णवसे तौचतुर्दशोल्लास' ॥ मुच्यतेस्म । मुच्लृ॰ । क्त ॥

मुक्तकञ्चुक ' । पु॰ निर्मुक्तो । अचिर त्यक्तनिर्मोकेसर्पे ॥ मुक्त : कञ्चुकी येन ॥

मुक्तचक्षु ' । पु॰ सिंहे ॥ त्रि॰ मुक्त नेत्रे ।

मुक्तबन्धन । त्रि॰ त्यक्ताभिमाने ॥ त्यक्तपाशे ॥ मुक्तबन्धन येनयस्य वा ॥

मुक्तरसा । स्त्री॰ रास्नायाम् ॥ त्रि॰ त्यक्तरसे ॥

मुक्तसङ्ग । त्रि॰ त्यक्तफलाभिसन्धौ॥

मुक्तस्वाप । त्रि॰ त्यक्तनिद्रे ॥

मुक्ता । स्त्री॰ मौक्तिके । तुन्दुरत्ने । मौक्तिके । मोती॰ इ॰ भा॰ प्र॰ रत्ने ॥ मुच्यतेस्म । मुच्लृ॰ । क्त. ॥ व्यपगतपाशायां ॥ पुंस्त्व्याम् ॥

मुक्ताकलाप । पुं॰ मुक्ताहारे ॥



मुक्तागारम् । न॰ शुक्त्याम् ॥ मुक्ताया आगारम्

मुक्तागारा । स्त्री॰ पुंस्त्व्याम् ॥ मुक्ता त्यक्तमगारं यया सा ॥

मुक्तापुष्प । पु॰ कुन्दवृक्षे । मुक्ता वपुष्पाण्य ॥

मुक्ताप्रसू । स्त्री॰ शुक्तौ ॥ मुक्तायाः प्रसू ।

मुक्ताप्रालम्ब । पु॰ मुक्ताहारे ॥

मुक्ताफलम् । न॰ घनसारे । कर्पूरे ॥ लवलीफले मौक्तिके ॥ गजेन्द्रजी मूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणु जानि । मुक्ताफलानिप्रथितानितज्ज्ञै स्तेषान्तुशुक्त्युद्भवमेवभूरि ॥ विशेषो न्यचगरुडपुराणादौद्रष्टव्य । अथ वाराह्युक्त लक्षणादिकंयथा॥ द्विपभुज गशुक्तिशङ्खाभ्रवेणुतिमिसूकरप्रसूता नि । मुक्ताफलानितेषांवहुसाधुच शुक्तिजंभवति ॥ सिंहलकपारलौकि कसौराष्ट्रिकताम्रपर्णिपारशवा । कौवेर्यपाण्ड्यवाटकहैमकइत्याकरा स्त्वष्टौ ॥ वहुसंस्थाना स्निग्धाहं साभा सिंहलाकरा स्थूला । ईषत्ताम्रा श्वेतास्तमोवियुक्ताश्च ताम्राख्या ॥ कृष्णा श्वेता पीता सशर्करा पारलौकिकावि षमा । नस्थूलानात्यल्पानवनीत निभाश्चसौराष्ट्रा : ॥ ज्योतिष्मन्त शुभ्रागुरवोऽतिमहागुणाश्चपारशवा ।

अथ जर्जरदधिनिभस्य दृढिमस्थान मपिहितम् । विषमकृष्णार्ध तलघु कोवियंप्रमाणतेजोवत् । निम्बफल त्रिपुटधान्यकचूर्णा खु पाण्डुरा टभवा । ६ ॥ एतेषांविशेषमाह । अतसीकुसुमश्यामवैष्णवमैन्द्रंशशाङ्क सङ्काशम् । हरितालनिभवारुणम सितयमदैवतभवति ॥ परिणतिदा डिमगुटिकाताम्रातालक्षणायुदैवत्य म् । निधूमानलकमलप्रभञ्च विज्ञे यमाग्नेयम् ॥ ८ । एतेषांमूल्यपरि ज्ञानार्थमाह । माषकचतुष्टयधृतस्यै कस्यशताहताष्टिपञ्चाशत् । कार्षा पणानिगदितामूल्य मेकोगुणयुतस्य ॥ माषकदलहान्यातोस्त्रिशाहिय तिक्षयोऽयच । अष्टौशतानित्रयतत्र अत्रिपञ्चाशतासहितम् ॥ पञ्चाचत्र च्छतमिति० रुत्वार कृष्णालानवति मूल्या । सार्द्धालिखोगुञ्जा सप्त तिमूल्याशतरूपम् । गुञ्जात्रयस्यमू ल्य पञ्चाशद्रूपकागुणयुतस्य । रूपक पञ्चत्रिंशत्त्रयस्यगुञ्जार्धहीनस्य॥ १२ अन्यन्मूल्यपरिज्ञानमाह । पलदश भागोधरणतद्यदिमुक्तात्रयोदशसरू पा । त्रिशतीसपञ्चविंशारूपकस ङ्ख्याङ्कतंमूल्यम् ॥ षोडशकस्यद्वि शतीविंशतिरूपञ्चसप्तति सश था । यः पञ्चविंशतिधृतस्तस्यशत त्रिंशतासहितम् ॥ त्रिंशतिसप्त तिमूल्यचत्वारि शच्छताङ्गमूल्यञ्च । षष्टि पञ्चोनाशाधरणा पञ्चाष्ट कमूल्यम् ॥ मुक्ताशीत्याश्च शच्छत स्यसापञ्चरूपकाविहीना । द्विचत्व तुष्पञ्चशताशादशषट्पञ्चकत्रिशय म् ॥ १६ । अथत्रयोदशाद्यानांध रणानाससङ्गार्थमाह । पिक्का०पि चार्थाऽखिसिक्था त्रयोदशाद्याना म् । सञ्ज्ञा परतोनिगराश्चूर्णा श्चाशीतिपूर्वषाम् ॥ १७ ॥ एता श्चाकरस्थामिव्यवहारार्थमुपयुज्यन्ते ॥ अथैतरेषांमूल्यपरिज्ञानार्थमाह । एतद्गुणयुक्तानांधरणधृतानांप्रकी र्तितं मूल्यम् । परिकल्प्यमन्तरा लेहीनगुणानाञ्चय कार्यं ॥ कृष्णार्धे तकपीतकलाञ्छनामीषद पिचविषमाणाम् । त्र्यंशोन विषक पीतयोश्चषट्भागदलहीनम् ॥१८ ॥ गजमुक्ताफललक्षणमाह । ऐरा वतकुलजानांपुष्यश्रवणेन्दुसूर्यदि वसेषु । येचोत्तरायणभवाग्रहणेर्कें न्द्वोश्चभद्रेभा ॥ तेषांकिलजा यन्ते मुक्ता कुम्भेषु सरदकोशेषु । बहवोऽहत्प्रमाणाबहुसंस्थाना प्रभायुक्ता ॥ नैषामर्घं कार्योन चवेधोऽतीवता , प्रभायुक्ता । सुतविजयारोग्यकरा महापवित्रा धृताराज्ञाम् ॥ २ ॥ अथवाराहति मिवयोलक्षणम् । दंष्ट्रामूलेशशि

तापः केनस यैाध्यकुर्याद्युक्यातुमो दकान् । लघुर्यास्वैचिदोषघ्न स्वादु शोतोरुचिप्रद चक्षुष्यो ज्वरद्दद्दल्यस्तर्पणो मुद्गमोदकः ॥
मुक्तालता । स्त्री॰ मुक्ताहारे ।
मुक्तावली । स्त्री॰ मुक्तामालायाम् मुक्तानामावलीदार्यावप्ति ॥
मुक्तास्फोट । पु॰ शुक्तौ । मुक्तोत्पादिकायाशुक्तौ ॥ मुक्ता स्फुटन्त्यस्मात् । स्फुटेतिघञ् ॥
मुक्तास्फोटा । स्त्री॰ शुक्तौ ॥
मुक्ति । स्त्री॰ कैवल्ये । निर्वाणे । श्रेयसि नि श्रेयसे । अमृते । मोक्षे । अपवर्गे । स्वरूपावस्थाने । अज्ञाननिवृत्तिलक्षणायामसिद्धौ ॥ मुक्तौतमोतिरेकेणनान्यरायोन्यदृच्यते । यतीतोऽज्ञानविध्वस्तौमुक्तसन्नेवमुच्यते ॥ साचपुण्यैर्विनानलभ्यतेदृत्यारुराचार्या यथा । जन्तूनानरजन्मदुर्लभमतः पुस्त्वं ततोविप्रतातस्माद्वैदिकधर्ममार्गपरतःविद्वत्त्वमस्मात्परम् । आत्मानात्मविवेचन स्वनुभवोब्रह्मात्मनासस्थितिर्मुक्तिर्नौशतकोटिजन्मसुकृतै पुण्यैर्विनालभ्यतेइति ॥ मोचनम् । मुच्लृमोक्षणे । भावेक्तियाक्तिन् । मुक्ति पञ्चविधेति पौराणिका । यथा सालोक्य आपि साकूप्य सार्ष्टि सायुज्यमेव च । के वल्य चेतितानिविद्धिमुक्ति राघवपञ्चधा ॥ अपिच । सार्ष्टिसारूप्यसालोक्यसामीप्यैकत्वमप्युत । दीयमाननगृह्णन्तिविनामत्सेवन जना ॥ इतिभागवते ॥ मुक्तिस्तुद्विविधासाध्विस्कृष्य. ।सर्वसम्मता । निर्वाणपददात्रीचहरिभक्तिप्रदानृणाम् ॥ हरिभक्तिस्वरूपांचमुक्तिवाञ्छन्तिवैष्णवा । अन्ये निर्वाणरूपाञ्चमुक्तिमिच्छन्तिसाधव । इ॰ब्र॰वै॰पु॰ ॥ आत्यन्तिकदु खनिवृत्तिरितिनैयायिका ॥ प्रकृतिपुरुषयोर्विवेकदर्शनात्मुक्तिरितिसाङ्ख्या ॥ प्रकृतावुपरतायापुरुषस्वरूपेणावस्थानमुक्तिरितिस.इ ख्यसिद्धान्त ॥
मुक्तिद । त्रि॰ कैवल्यप्रद ।
मुक्तिदा । स्त्री॰ गुरुबाचि ॥
मुक्तिभाक । त्रि॰ मुमुक्षौ । मुक्ताधिकारिणि ॥ ब्रह्मज्ञानादृतेदेविकर्मसन्न्यसनविना कुर्वन्कल्पशतकर्मनभवेन्मुक्तिभाग्जन ॥
मुक्तिमण्डप । पु॰ काश्याविश्वेश्वरसदनदक्षिणपार्श्वस्थमण्डपे ॥ यथा । निमेषमात्र स्थितचित्तवृत्ताक्तिष्ठन्ति येदक्षिणमण्डपेच । अनन्तभावाचपिगाढमानसानतेपुनर्गर्भदृशासुपश्यति ॥
मुक्तिमुक्त । पु॰गन्धद्रव्यविशेषे । तुरुष्के । सिल्हकै । सिल्हारस॰ लोके ।

मुखसिद्ध । पु॰ मुखकर्म्मणि सिद्धे घृत ॥ भवोक्त रैवतोत्तरे । हस्ताध शेषसितया नवनाभिरामफल्कारवायुपदमुन्नतकन्धराग्रम । नीत्वोपकृ'ष्टतमुखेमवलीवसाक्ष्यमग्र पतुष्कसमयेम मुखसिद्धिमाहुरिति ॥

मुखमरम् । न॰ तालक्याम् । भारासर्वे । ताली॰ इ॰ प्रसिद्धमर्थे ॥ गयड्डूषमर्थे ॥ मुखमसुरा । विभा षासेनासुरेतिक्लीवता ॥

मुखस्राव । पु॰ लालायाम् । ला ल॰ इ॰ भा॰ ॥

मुखाग्नि । पु॰ दावाग्नौ ॥

मुखामय । पु॰ मुखरोगे ॥

मुखार्जक । पु॰ अर्जके । श्वेतपर्यासे ॥

मुखास्त्र । पु॰ कर्कटे ॥

मुखाल्का । स्त्री॰ दावाग्नौ । भूतसञ्चायाम्

मुख्य । पु॰ आद्यविधौ । शास्त्रोक्त प्रथमकल्पे ॥ यथा व्रीहिभिर्यजेत । श्रुतिमार्थ यवभावतादर्थ्यं मवसीयते ।त मुख्यमथ मन्यन्ते । त्रि॰ श्रेष्ठ । वरे ॥ प्रधाने॥ मुखमिव । शाखादित्वाद्य ॥ मुखे त्यम्रे ॥ मुखेभव । दिगादित्वा द्यत् ॥

मुख्यक्रम पु॰ प्रमाणविशेषे। प्रधानक्रमेणयोऽङ्गानांक्रम समुख्यक्रम येनहिक्रमेणप्रधानानिक्रियन्ते तेनैवक्रमेण॰तेषामङ्गान्यनुष्ठीयन्ते॰ तदासर्वेषामङ्गानांस्वे स्वे प्रधानैस्तुल्य व्यवधानभवति । व्युत्क्रमेणानुष्ठानेकेषाञ्चिदङ्गानांस्वे प्रधानैरत्यन्तमव्यवधानम्॰केषाञ्चिदत्यन्त व्यवधानस्यात् । तथायुक्तम् । प्रयोगविध्यवगतसाहित्यबाधापत्ते । अत प्रधानक्रमोऽप्यङ्गक्रमेहेतु । अतएवप्रयाजशेषेणाधा रावाग्न यजविधाभिघारणम्॰यथा ऐन्द्रस्यदध्न । आग्नेयैन्द्रयागयो पौर्वापर्यात् । एवञ्चद्वयोर्यो रभिघारणयो स्वस्वप्रधानैनतुल्यमेका न्तरितव्यवधानम् । व्युतक्रमेणाभिघारणे चाग्नेयहविरभिघारणाग्नेययागयोरत्यन्तमव्यवधानम् । ऐन्द्रदध्यभिघारणैन्द्रयागयोर्द्व्यन्तरित व्यवधान॰तथायुक्तमित्युक्तमेव । सचमुख्यक्रम ' पाठक्रमाद्दुर्बल । मुख्यक्रमेणापिप्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतयाविलम्बितप्रतिपत्तिक । पाठक्रमस्तुनिरपेक्षस्वाऽध्यायपाठक्रम मात्रसापेक्षतयाततयेतिसबलवान् । प्रवृत्तिक्रम.अबलवान् । प्रवृत्तिक्रमे हवहूनामङ्गानाप्रधानसन्निकर्षा त् । मुख्यक्रमेतुसन्निकर्षात् ॥

मुद्गसर्ग । पुं॰ स्थावरसर्गे ॥ मु-

स्यसर्गस्तुर्यस्तमुख्यास्थावरा
स्मृताइ०वराहपुराणात् ।
मुख्यार्थ । पु० शब्दश्रवणमात्रात्ग
म्यर्थे यथा । श्रुतिमात्रेणयत्रा-
स्यतादर्थ्यमवसीयते । त मुख्यमर्थ
मन्यन्ते गौण यत्नोपपादितम् ॥ प्र
तिपाद्यार्थे ॥
मुगूह । पु० दात्यूहपक्षिणि ॥
मुग्ध । पु० भिक्षुकविशेषे ॥ यथा ।
सान्निध्ये विषयाणास्वसमर्थोऽविक
लेन्द्रिय । सुप्तवद्वर्त्ततेनित्य भिक्षु
र्मुग्ध मउच्यते ॥ त्रि०रम्ये । सु
न्दरे मूढे विवेकविकले विष
यस्त श्रुत्यर्थपरिशीलनविधुरे
नवे
मुग्धा । स्त्री० नायिकाप्रभेदे उदय
द्यौवनामुग्धालज्जाविजितमन्मथा ।
इ०लक्षणम्
मुचिर । त्रि०दातरि ॥ मुञ्चते । मु
चल्० । घषिमदिमुदीत्यादिनाकि
रच् ॥ पु० धर्मे ॥ वायौ ॥ देवे ॥
मुचुकुन्द । पु० मान्धातृनृपजे पु
त्र ॥ पुष्पवृक्षविशेषे । क्षत्रवृक्षे ।
चित्रके । प्रतिविष्णुके । मेचकन्द-
फूल०इ०भा० । मुचुकुन्द . शिर
पीडापित्तास्रविषनाशन ॥
मुचुटी । स्त्री० मुकुल्याम् । मुष्टौ ।
मुट्ठीइ०भाषा ॥
मुच्छक . । पु० मुच्छकवृक्षे ॥
मुञ्ज । पु० तृणविशेषे । ब्रह्मण्ये ।
बाणे । स्थूलदर्भे । मूज०इ भा० ॥
मुञ्जद्वयन्तुमधुरन्तुवरशिशिरन्तथा ।
दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोग
जित् । दोषत्रयहर हृष्यमेखलासूप
युज्यते ॥ मुञ्जद्वयम्० मुञ्जभद्रमु-
ञ्जौ ॥
मुञ्जकेशी । पु० विष्णौ ॥
मुञ्जरम् । न० शालूके ॥
मुञ्जातक । पु० मुञ्जे ॥ पुष्पशा-
कप्रभेदे ॥
मुञ्जावट । पु० तीर्थविशेषे ॥ य-
त्रमहादेवस्तिष्ठति ॥ तीर्थान्तरे ॥
मुण्ड । पु० दैत्यविशेषे राहुग्रहे ॥
मुण्डितसमस्तशिर केशेब्रह्मचा-
रिविशेषे ॥ सशिखकेशश्मश्रुरहिते
परिव्राजि ॥ नापिते । स्थाणुद्रौ
पु०न०मूर्द्धनि न०बोले ॥ मुण्डा
यसे ॥ त्रि०मुण्डिते ॥ मुण्डाते ।
मुण्डिखण्डने । घञ् ॥
मुण्डक । पु० नापिते ॥ न०मस्त-
के ॥ उपनिषद्विशेषे ।
मुण्डचणक । पु० कलाये ॥
मुण्डनम् । न० वपने । परित्राप
णे । चौरे । केशच्छेदने ॥ मुण्डन
चोपवासश्चसर्वतीर्थेष्वयविधिः । व
र्जयित्वागयागङ्गाविशालांविरजा
तथा ॥ मुडि० । ल्युट् ॥
मुण्डफल पु० नारिकेलवृक्षे ॥

तिकिरच् ॥ कासुके ॥ भेके ॥

मुद्ग । पु० शमीधान्यभेदे । सूपप्रधाने । रसोत्तमे । भुक्तिप्रदे । हयानन्दे ॥ मुद्गोरूक्षोलघुर्ग्राहीकफपित्तहरोहिम । स्वादुरल्पानिलोनेत्र्योज्वरघ्नोवनजस्तथा ॥ कृष्णमुद्गो महामुद्गोहरित पीतकस्तथा । श्वेतोरक्तश्चतेषान्तुपूर्वं पूर्वोलघु स्मृत ॥ सुश्रुतेनपुन प्रोक्तोहरित प्रवरोगुणै । चरकादिभिरप्युक्तएषएवगुणाधिक ॥ मुद्गस्यफलमुद्ग । बिल्वादिभ्योण । तस्य फलपाकेतिलुपियुक्तवद्भाव ॥ यद्वा । मोदयति । मुद० । मुदिग्रोर्गग्गाविति गक् ॥

मुद्गपर्णी । स्त्री० वनमुद्गे । काकमुद्गायाम् । सहायाम् । सूप्यपर्ण्याम् ॥ मुद्गपर्णीहिमारूक्षातिक्तास्वादुस्वल्पानिला । चक्षुष्याक्षतशोथघ्नीग्राहिणीज्वरदाहनुत् ॥ दोषत्रयहरीलघ्वीग्रहण्यर्शोतिसारहृत् ॥ मुद्ग पर्णमस्या । मुद्गशब्देनमुद्गपर्णसदृशलक्ष्यते । पाककर्णेतिङीष ॥

मुद्गभुक् । पु० घोटके ॥

मुद्गभोजी । पु० घोटके । अश्वे ॥

मुद्गमोदक । पु० मुक्तामोदके ॥

मुद्गर । पु० लोष्टादिभेदने ॥ कर्मारवृक्षे ॥ मोगरा० इ० भा० प्र० पुष्पवृक्षविशेषे । मत्स्यसारे । सप्तपत्रे । चतिगन्धे । जनेष्टे । स्वनामख्यातप्रसिद्धे० अस्त्रविशेषे । द्रुघणे ॥ कोरके ॥ न० मल्लिकाप्रभेदे ॥ गिरति । गृनिगरणे । अच् । मुद्गोगर ॥

मुद्गरक । पु० कर्मारवृक्षे । कमरख इतिभाषा ॥

मुद्गल । पु० गोत्रकारकेमुनिविशेषे ॥ हर्यश्वराजपुत्रे ॥ न० रोहिषतृणे ॥

मुद्गवटक पु० । मूगवरा० इतिलोकप्रसिद्धे ॥ मुद्गानावटकास्तक्रे मज्जितालघवोहिमा । सस्कारजप्रभावेणत्रिदोषशमनाहिता ॥

मुद्गवटिका । स्त्री० मु गौडी इ० लोकप्रसिद्धवटिकायाम् ॥ मुद्गानावटिकास्वदरचितासाधितास्तथा । पथ्यारुच्यास्ततोलघ्व्योमुद्गसूपगुणा स्मृता ॥ तद्वत् ० माषवटीवत् ॥

मुद्गार्द्रकवट । पु० वटकविशेषे । अदेवरा० इ० भा० ॥ आदावडा० इ० गौ० भा० ॥ मुद्गपिष्ठ्याविरचितान् वटकास्तैलपाचितान् । हस्तेनचूर्णयेत्सम्यक्तस्मिन्सूर्वे विनिक्षिपेत् । भृष्ट हिङ्ग्वार्द्रकसूक्ष्म मरिचजीरकतथा । निम्बूरसयवानीभ्युक्त्यासर्वं विमिश्रयेत् ॥ मुद्गपिष्टीप चेतसम्यक्स्थाल्यामास्तारकोपरि । तस्यास्तुगोलकानकुर्यात्तन्मध्ये पूरण क्षिपेत् ॥ तैलेतानगोलकान्पक्काकायितायांनिमज्जयेत् । गोल-

का पाचकं प्रोक्तास्ते स्वाद्रं कव टायपि ॥ मुद्गाद्रं कवटारुच्या लघवो बलकारका । दीपना स्तर्पणापथ्या स्त्रिषु दोषेषु पूजिता ॥

मुद्रा । स्त्री० प्रत्ययकारिण्याम् । छाप० इ० भाषाप्रसिद्धायाम् ॥ मोदतेऽनया । मुद० । स्फायितञ्चीति रक् ॥ चिन्हे ॥ पञ्चविधलिप्यन्तर्गतलिपिविशेषे छापाअक्षरकृति भा०प्र० ॥ यथोक्तं वाराहीतन्त्रे मुद्रालिपि शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूतालिपय पञ्चधास्मृता एताभिर्लिपिभिर्व्याप्ताधरित्रीशुभदाहरेति ॥ मुण्डमालातन्त्रे पियया । लेखन्या लिखितं विप्रैर्मुद्राभिरङ्कितं स्वयत् । शिल्पादिनिर्मितं चक्षपा । ठ्य धार्यं सर्वदा ॥ इ० ॥ लोकप्रसिद्धा०स्वर्णरौप्यमुद्रकयोः ॥ पुराणाद्युक्ता०शरीरेधारणीयेभगवतश्चायुधादिचिह्ने ॥ शङ्खायुधाङ्कितदेहगोपीचन्दनमृत्स्नया । प्रयागादिषु तीर्थेषु सगत्वाकिंकरिष्यति ॥ यदायस्य प्रपश्यं तदेहशङ्खादिचिह्नितं । तदातदाजगन्नाथो तुष्टोहरतिपातकम् ॥ भवतेयस्यदेहेतु यद्वाराचदिने दिने । शङ्खचक्रगदापद्म लिखितसोऽच्युत . स यत् ॥ नारायणायुधैर्युक्त कृष्णात्मा नकलौयुगे । कुरुते पुण्यकर्माणि मे रुतुल्याणि तस्य वै ॥ शङ्खादिनाङ्कितोभूत्वाश्राद्धय कुरुते द्विज । विधिहीनन्तु सम्पूर्णं पितॄणाञ्चगयासमम् यथाग्निर्दहते काष्ठं वायुनाप्रेरितोभृशम् । तथाद्दह्यन्ति पापानि हष्ट्वाकृष्णायुधानिवै ॥ देवताप्रीतिजनिकाङ्गुलिरचनायाम् ॥ मोदनात् सर्वदेवानाद्रावणात्पापसन्ततेः । तस्मात्मुद्रेतिसाख्याता सर्वकामार्थसाधनी ॥

मुद्राङ्कित । त्रि० मुद्रिते । मुद्रया चिह्निते । मोहरकियो० इ० भा० प्र० ॥

मुद्रालिपि । स्त्री० पञ्चधालिप्यन्तर्गतलिपिविशेषे । छापेकाअक्षर० कृतिभाषा ॥

मुद्रिका । स्त्री० स्वर्णरूप्यादिनिर्मितमुद्रायाम् ।

मुद्रित । त्रि० अप्रफुल्ले । अङ्कुचिते । निद्राणे । मीलिते । मुद्रा० इ० भा० ॥ मुद्राङ्किते ॥

मुधा । अ० व्यर्थे ॥ मुह्यति । मुह वैचित्ये । काप्रत्यय । पृषोदरादित्वात्ह्रस्य ॥

मुनि । पुं वशिष्ठादौ ॥ वाचयमे । मौनिनि ॥ ज्ञानातिशयवति ॥ मननशीले । विवेकिनि । सन्न्या

सिनि। परमार्थतत्त्वस्यमननान्मुनिरितिशास्त्रकृताव्युत्पत्तेर्नेतरोजन  शास्त्रविदपितत्त्वज्ञानाभावात्। सदामननशीलोयोजीवन्मुक्तामुनि सहि। स्थितप्रज्ञादिभिशब्दैर्मोक्षशास्त्रेषुवर्ण्यते ॥ दुःखेष्वनुद्विग्नमनाः सुखेषुविगतस्पृहः। वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ मौनान्नमुनिर्भवतिनारण्यवसनान्मुनि। स्वलक्षणन्तुयोवेदसमुनिः श्रेष्ठउच्यते ॥ अगस्त्ये ॥ बुधे ॥ मन्यते। मन ज्ञाने। मनेरुच्चेतीन्॰ उपधाया उत्वञ्च। किदित्यनुवर्त्तनान्नगुणः ॥ वङ्कसेने। अगस्त्यद्रुमे ॥ अर्हति। पियाले किंशुके ॥ दमनकवृक्षे ॥ सप्ताङ्के ॥

मुनिखर्जूरिका। स्त्री॰ खर्जूरीप्रभेदे ॥

मुनिच्छद। पु॰ सप्तच्छदवृक्षे ॥

मुनितरु। पु॰ वकवृक्षे

मुनिद्रुम। पु॰ वकपुष्पे। वङ्कसेने। अगस्तिया॰ दू॰ भा॰ प्र॰ वृक्षे ॥ श्योनाकवृक्षे ॥ मुनिसत्त्वकीद्रुम,। शाकपार्थिवादि ॥

मुनिनिर्म्मित। पु॰ डिण्डिशे। डिडसी॰ टिडा॰ इ॰ प्र॰ फलशाके। मुनिनानिर्मित ॥

मुनिपित्तलम्। न॰ ताम्रे ॥

मुनिपुत्र। पु॰ दमनकद्रुमे ॥ ऋषिसुते ॥

मुनिपुत्रक। पु॰ भद्रनामनि। खञ्जने ॥

मुनिपुष्प। पु॰ अगस्तिद्रुमे ॥ न॰ अगस्त्यपुष्पे।

मुनिपूग। पु॰ रामपूगे। कामीने ॥

मुनिभेषजम्। न॰ आगस्त्यहरीतक्याम्। अगस्तिपथ्यायाम् ॥ लङ्घने ॥

मुनिव्रत। त्रि॰ उपशान्ते ॥ मुनीनांव्रतमस्य ॥

मुनिसुव्रत। पु॰ सुव्रताख्ये बुद्धभेदे ॥

मुनिस्थानम। न॰ आश्रमे ॥

मुनीन्द्र। पु॰ श्रीघने। बुद्धे। जिने ॥ मुनिष्विन्द्र श्रेष्ठ ॥

मुन्यन्नम्। न॰ नीवाराद्यौ ॥ मुनेर्वानप्रस्थस्य अन्नम् ॥

मुमुक्षु। पु॰ यतौ। स सारबन्धमोक्षेकृतप्रयत्ने। साधनचतुष्टयसम्पन्ने ॥ यथा। काव्यनाटकतर्कादीनभ्यस्यतिनिरन्तरम्। विषयीषुर्यातद्वन्मुमुक्षुः स्व विचारयेदिति ॥

मुमुक्षुता। स्त्री॰ मोक्षेच्छायाम् ॥ स सारबन्धनिर्मुक्तिः कथ स्यान्मे कथाविधे। इतियासुदृढाबुद्धिर्

क्ष्यासामुमुक्षुता ॥ मुमुक्षोर्भाव तल् ॥
मुमुक्षुत्वम् । न० मुमुक्षुतायाम् ॥ वैराग्यञ्चमुमुक्षुत्व तीव्र यस्यतुवि द्यते । तस्मिन्नेवार्थवन्त स्यु फलवन्त शमादय ॥ मोक्षेच्छा मोक्षविषयेच्छा० तद्वत्त्वम मुमुक्षु त्व । भावे तल्व ॥
मुमुक्षान । पु० मेघे ।
मुमुषिष । त्रि० चौरे ।
मुमूर्षु । त्रि० आसन्नमृत्यौ । म र्त्तुमिच्छो । सन्नन्ताम्मृङ् , सना श सभिचउ ॥
मुर पु० दैत्यविशेषे । मुरति । मुरस वेष्टने । इगुपधत्त्वात्क ॥ न० वेष्टने ॥
मुरज । पु० मृदङ्गे ॥ मुरयाम् । मु र० । तुदादि । घञर्थेकविधान मितिक । मुर वेष्टन जातमस्य ॥
मुरजफल । पुं० पनसवृक्षे ॥ मुरज सदृशानिफलानियस्यस ॥
मुरजबन्ध । पु० चित्रकाव्यविशेषे ॥
मुरण्ड । पुं० लम्पाकदेशे ॥ तद्देश स्थे तुमुरण्डा ॥
मुरन्दला । स्त्री० मुरलानद्याम् ॥
मुरमर्द्दन । पु० विष्णौ ॥
मुररिपु । पुं० विष्णौ । मुरस्यरि पु ॥
मुरला । स्त्री० मुरन्दलायांसरिति ॥
मुरली । स्त्री० वंशीवाद्ये । वंशिकाया म् ॥ इतिशब्दरत्नावली ॥
मुरलीधर । पु० श्रीकृष्णे ॥
मुरहा । पुं० केशवे । विष्णौ ॥
मुरा । स्त्री० स्वनामाप्रसिद्धे गन्धद्रव्ये । तालपर्ण्याम् । गन्धकुट्याम् । मुरातिक्ताहिमास्वाद्वीलघ्वीपित्तानि लापहा । ज्वरामृग्भूतरक्षोघ्नीकुष्ठ घ्ना।श्वविनाशिनी । मुरति । मुर० । इगुपधत्त्वात्क टाप् ॥
मुरारि । पु० श्रीकृष्णे ॥ मुरस्यअ रि । मुर क्लेशेचसन्तापेकर्मभो गेध्वकर्मणियाम् । दैत्यभेदेप्यरिस्त स्माम्मुरारिस्तेनकीर्त्तित ॥
मुरु । पु० लोहविशेषे ॥
मर्भिणी । स्त्री० अङ्गारधान्याम् ॥
मुर्मुर । पु० तुषवह्नौ ॥ मन्मथे ॥ रविवाजिनि ॥
मुलतान । पुं० देशविशेषे ॥ कर तोयासमारभ्यहिङ्गुलाजान्तक शि वे । मुलतानदेशोदेवेशिमच्छाम्लेच्छ परायण ।
मुशटी । स्त्री० सितकङ्गुन्याम् ॥
मुशल । पु० न० मुसले । मुश्यत्य नेनवा । मुसखण्डने । उज्ज्वलदत्ता दयोमुतालव्यमध्यमाहुस्ततोऽत्रपादि त्वात्कल ॥
मुशलिका । स्त्री० पल्याम् ॥ इतिह लायुध ॥

मुशली । स्त्री॰ पल्ल्याम् ॥ तालमूल्ल्याम् ॥ इ॰ राजनिर्घण्ट ॥

मुषल । पु॰ न॰ मुसले ॥ मुषत्यमीनत्रा । मुषखण्डने॰ इतिधातोर्वृन्त्यान्तेषुमूर्द्धन्यान्तेषुचवोपदेवाचेयादिभि पठितत्वात्कल ॥

मुषा । स्त्री॰ मूषायाम् ॥ मुष्णाति । मुषस्तेये । भिदाद्यङ् । टाप् ॥

मुषित । त्रि॰ वञ्चिते ॥ हृते ॥ खण्डिते ॥ मुष्यतेस्म । मुषस्तेये । क्त ॥ नमुषितास्त्रियप्रेषेत । न मुषितेनमुषिताचौरैर्हृतवस्त्रेण॰ नग्ने त्यर्थ इतिव्याख्येयम् ॥

मुष्क । पु॰ अण्डकोषे । वृषणे ॥ मुष्णातिरेत । मुष॰ । सृवृभूशुषिमुषिभ्य कक् ॥ मड्डाते ॥ मोचकवृक्षे । मुष्कके ॥ मुष्कद्वयस्तुद्विविध ग्रन्तिलक्षणप्रभेदत ॥ तस्करे ॥ मांसले ॥

मुष्कक । पु॰ घण्टापाटलौ । गोलीढे । मुष्के । झाटले । मोचे ॥ मष्कक कटुकस्तिक्तोग्राह्युष्णाकफवातहृत् । विषमेदोगुल्मकण्डूवस्तिरुक्क्रमिशुक्रनुत् ॥ मुष्णातिरोगम् । मुष कक्रन्तात्॰ स्वार्थेकन् ॥

मुष्कर । पु॰ समुष्के । प्रलम्बाण्डे ॥ मुष्कोण्ड । सोस्यास्ति । अषसुषीतिर ॥

मुष्कशून्य । पु॰ वृषणरहिते । अनुपस्थे । स्त्रीस्वभावे । मद्दल्लिके । राज्ञोन्त पुररक्षके । खोजा॰ भाषा ॥

मुष्ट । त्रि॰ चोरिते ॥ मुषक्त ॥

मुष्टि । पु॰ स्त्री॰ पलपरिमाणे । चारतोला इतिभाषा ॥ बद्धपाणौ । मुट्ठी॰ इ॰ भा॰ । अङ्गुलिसन्निवेशोमुष्टि ॥ यथा । घासमुष्टिपरगवेसाज्ञ दद्यात्स्वय सदा । अकृत्वास्वयमाहार स्वर्गलोकसगच्छतीतिश्रीमहाभारतम् ॥ त्सरौ । मूठ॰ इतिभाषा ॥ धान्यमानभेदे । कुञ्च्यष्टभागे । छटाक॰ इ॰भा॰ । मोषणे । सङ्कोचने । मुष्यतेनया । मुष॰ । स्त्रियाक्तिन् ॥ यद्वा । मुष्णाति । क्तिच् ॥ प्रहारविशेषे । मुक्कोइतिभाषा ॥ पथिक्षुधार्त्तस्य तिलादीनामुष्टिग्रहणे चौर्याभावो यथा । तिलमुद्गयवादीनामुष्टिर्ग्राह्यापथिस्थितै । क्षुधार्त्तैर्नान्यथाविप्रविधिविज्ञैरितिस्थिति ॥

मुष्टिक । पु॰ कंसासुरस्यमल्लविशेषे ॥ स्वर्णकारे ॥

मुष्टिकान्तक । पु॰ बलदेवे ॥ मुष्टिकस्यान्तक ॥

मुष्टिद्यूतम् । न॰ जुवके । द्यूतप्रभेदे ॥

मुष्टिन्धय । पु॰ बालके ॥ मुष्टिध

यति । धं ट पानि । नाडीमुष्टी चेति० खश् । मुम् ॥

मुष्टिबन्ध । पु० सङ्ग्रहे । मुष्टिबन्धनक्रियायाम् ॥ अहोलक्षम् मुष्टिबन्ध ॥ मुष्टेर्बन्ध ॥ मुष्टिनाबन्धोदृढग्रहणं वा ॥

मुसल । पु० न० अयोग्रे । काष्ठनीयदण्डे । मूसर० मूसल० हू० भा० ॥ मुस्यत्यनेनवा । मुसखण्डने । वृषादिभ्यश्चेतिकल ॥

मुसली । पु० हलिनि । बलदेवे ॥ मुसलमस्त्यस्य । अतइनिठनाविति ॥ यथोक्तं विष्णुपुराणे जरासन्धयुद्धोद्योगे । हलञ्चबलभद्रस्य गगनाद्गागतं ज्वलत् । मनसोभिमतं विप्रसौनन्द मुसलं तथेति ॥

मुसली । स्त्री० तालमूल्याम् ॥ तालमूलीतुविद्वद्भिर्मुसलीतिनिगद्यते ॥ मुसलीचद्विधाप्रोक्ताश्वेताचापरसचका । श्वेतातालयुगोपेता अपराचरसायनी ॥ मुसलीमधुरा वृष्यावीर्योष्णावृंहणीगुरुः । तिक्तारसायनीहन्तिगुदजान्यनिलं तथा ॥ आखुपर्ण्याम् ॥ गृहगोधिकायाम् ॥ मुस्यति० मुसतिस शय वा । मुस० । वृषादिभ्यश्चिदिकल । जातेरितिगौरादित्वाद्वाङीष् ॥

मुसलीय । त्रि० मुसल्ये ॥ मुसलायहित । विभाषाहविरपूपादिभ्यइतिपक्षे छ ॥

मुसल्य । त्रि० मुसलेनवध्ये ॥ दण्डादिभ्योयत ॥ मुसलीये । मुसलायहित । अपूपादित्वात्पक्षे यत् ॥

मुस्त । पु० न० मुस्तके । मोथा० हू० भा० ॥

मुस्तक । पु० न० मुस्ते । कुरुविन्दे । मेघनामनि । मुस्तायाम् । मोथा० हू० भा० ॥ मुस्तं कटु हिमं ग्राहितिक्तं दीपनपाचनम् । कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तुहृत् ॥ अनूपदेशेयज्जातं मुस्तकंतत्प्रशस्यते । तत्रापिमुनिभिः प्रोक्तं वरं नागरमुस्तकम् ॥ मुस्तसङ्घाते । चु० । ण्वुल् ॥

मुस्ता । स्त्री० मुस्तके । मोथाख्यतृणे ॥ मुस्तयति । मुस्त० अच् टाप् ॥

मुस्ताद । पु० शूकरे ॥ मुस्तामत्ति । अद० । कर्मण्यण् ॥

मुस्ताभम् । न० मुस्तकविशेषे । कुटन्नटे । नागरमोथा० हू० भा० ॥

मस्तु । पु० मुष्टौ ॥

मुस्नम् । न० अश्रुणि ॥ मुस्नति । मुस० । मुसेरक्वाहुलकात् ॥ मुस्नौ ॥

मुहिर । पु० कामे ॥ मूर्खे ॥ मुह्यति । मुहश्चिरच् । इषिमदि

मुदीर्यादित्वात्०रक् ।

मुहुर्भाषा । स्त्री० पुनः पुनः कथने । अनुलापे ॥ मुहुर्भाषणम् । भाष० युच ॥

मुहुः । अ० पौनःपुन्ये ॥ मोहनम् । मुह० । मुहेः किच्चोत्युसि ॥ पुनरर्थे ॥

मुहूर्त्त । पु० न० द्वादशक्षणात्मके काले ॥ त्रिंशत्कलात्मके काले ॥ द्वादशक्षणात्मके काले ॥ मुहूर्त्तं घटिकाद्वयमित्युक्तेः ॥ अक्षिपक्ष्मपरिक्षेपो निमेषः परिकीर्त्तितः । द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लवः स्मृतः ॥ द्वौ लवौ क्षण इत्युक्तः काष्ठा प्रोक्ता दश क्षणाः । त्रिंशत्काष्ठा कला प्रोक्ता कलाभिस्त्रिंशन्मुहूर्त्तकः ॥ पुराणोक्तलक्षणान्तु । रौद्रः श्वेतस्तथा मैत्रस्ततः सारभटः स्मृतः ॥ सावित्रो वैश्वदेवश्च गान्धर्वः कुतपस्तथा । रौहिणस्तिलकश्चैव विजयो नैर्ऋतिस्तथा ॥ सवरो वरुणश्चैव भगः पञ्चदश स्मृतः ॥ इति दिनपञ्चदशभागैकभागे ॥ यथा । प्रातः कालो मुहूर्त्तांस्त्रीन्सङ्गवस्तावदेव तु । मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णस्ततः परम् ॥ सायाह्नस्त्रिमुहूर्त्तः स्यात्श्राद्धं तत्र न कारयेत् । राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु ॥ हूर्च्छति । हूर्च्छा कौटिल्ये । अस्माल्लिङ्चोर्मौहुश्चि कर्त्तरि निर्देशान्मुहूर्त्तः शब्दो निष्पन्नः ॥ अल्पकाले ॥ दिनशुद्धिविशेषे । लक्षणया तदुपलक्षिते काले ॥

मुहिर । त्रि० मूर्खे ॥ मुह्यति । मुह० । मूलेरादयश्चेति साधुः ॥

मुह्यमान । त्रि० अनेकानर्थप्रकारैरविवेकतया क्षिप्तचित्ततया चिन्तामापद्यमाने ॥

मू । स्त्री० बन्धने ॥

मूक । पु० जलशये । मत्स्ये ॥ दैत्ये ॥ त्रि० अवाचि । वर्णानुच्चारके ॥ दीने ॥ मूमिति कायति । कै० । आतोऽनुपेति क ।

मूढ । त्रि० तन्द्रिते ॥ बाले । जडे ॥ मूर्खे । यथाजाते ॥ स्वाज्ञानकार्यविपर्ययमोहव्याप्ते ॥ इदमर्थसाधनमिदमनर्थसाधनमिति विवेकशून्ये । अविचारके । अविवेकिनि । अनात्मविदि ॥ तन्द्रादिग्रस्तचित्ते । तमसाच्छन्ने । मोहयुक्ते ॥ चित्तस्य द्वितीयायां भूमौ ॥ मुह्यति स्म । मुह० । गत्यर्थेति क्त ॥ आकाशादिषु स्थलेषु कैश्चित्तमःप्रधानतया मूढा मोहप्रकाशका विषया गुणाश्च कैश्चिद्विशेषास्ते मूढाः कथ्यन्ते ॥

मूढग्राह । पु० अविवेकातिशय

कृतेदुराग्रहे ॥ यथाग्रहणम् । मू
ढग्राह ॥

मूढता । स्त्री० अकार्यपरिज्ञानत्वे ॥
अविवेकतायाम् ॥ यथा । यानं चि
तीयानगतस्य देहोदेहेपिचान्यः पु
रुषोनिविष्टः । ममत्वमुर्व्या नतथा
यथाऽस्मिन्देहेऽतिमात्रं वत मूढतै
षेति ॥

मूढदृक् । त्रि० देहमानिनि । देहमा
त्मत्वेनाभिमन्यमाने ॥

मूढयोनि । पुं० पश्वादौ ॥

मूढा । स्त्री० तामसामनसोवृत्तौ ॥

मूत । त्रि० बद्धे ॥ मूयतेस्म । मूङ्
बन्धने । क्त ॥ आलानपाशे ॥

मूत्रम् । न० प्रस्रावे । मूत० पिसाव०
इ० भा० ॥ मूत्र्यते । मूत्रप्रस्रवणे ।
घञ् ॥ मूत्रमित्याहुरुदकंवस्तौ स्था
जिलनिर्गतम् ॥ यद्वा । मुच्यते
यत् । मुचलृ० । सिविमुच्योष्टेरू
च्चेतिष्ट्रन् ॥ अथास्यगुणाः । गोमू
त्रं कटुतीक्ष्णोष्णं क्षारं तिक्तं कषा
यकम् । लघ्वग्निदीपनं मेध्यं पित्त
कृत्कफवातहृत् ॥ शूलगुल्मोदरा
नाहकण्डूक्षिमुखरोगजित् । किलास
गदवातामवस्तिरुक्कुष्ठनाशनम् ॥
कासश्वासापहं शोथकामलापाण्डुरो
गहृत् । कण्डूकिलासगदशूलमुखा
क्षिरोगान्गुल्मातिसारमरुदामयमू
त्ररोधान् । कास सकुष्ठजठरक्रिमि
पाण्डुरोगान् गोमूत्रमेकमपिपीत
मपाकरोति ॥ सर्वेष्वपिचमूत्रेषु
गोमूत्रं गुणतोधिकम् । अतोविशे
षात्कथनेमूत्रं गोमूत्रमुच्यते ॥ प्ली
होदरश्वासकासशोथवर्चोग्रहापह
म् । शूलगुल्मरुजानाहकामलापा
ण्डुरोगनुत् ॥ कषायं तिक्ततीक्ष्ण
ञ्च पूरणात्कर्णशूलहृत ॥ नरमूत्रं
गरं हन्ति सेवितं तद्रसायनम् । रक्त
पामाहरं तीक्ष्णं सक्षारलवणं स्मृत
म् ॥ गोजाविमहिषीणान्तु स्त्रीणां
मूत्रं प्रशस्यते । खरोष्ट्रेभनराश्वा
नां पुंसां मूत्रं हितं मतम् ॥ अथमूत्र
परीक्षा । वातेनपाण्डुरं मूत्रं रक्त
नीलञ्चपित्ततः । रक्तमेवभवेद्रक्ता
द् धवलं फेनिलं कफादिति ॥

मूत्रकृच्छ्रम् । न० प्रस्रावघटितरोग
विशेषे । मूत्ररोधे । अश्मर्याम् ।
कृच्छ्रे ॥ मूत्रे कृच्छ्रमत्र ॥ अथास्य
चिकित्सा । त्रिकण्टकारग्वधदर्भ
काशयवासधात्रीगिरिभेदपथ्या
। निघ्नन्तिपीतामधुनाश्मरीञ्चसमी
पस्थोरपिमूत्रकृच्छ्रम् ॥ त्रिकण्ट
कादिक्काथः ॥ १ ॥ एलाश्मभेदक
शिलाजतुगोक्षुराणामेर्वारुबीजलव
णोत्तमकुङ्कुमानाम् । चूर्णानित
ण्डुलजलेलुलितानिपीत्वाप्रत्यग्र
मृत्युरपिजीवतिमूत्रकृच्छ्री ॥ ए
लादिचूर्णम् ॥ २ ॥ अयोरज

सूक्ष्मपिष्टं मधुना सह योजितम् । मूत्रकृच्छ्रं निहन्त्याशु सलीढं दिवसत्रयम् ॥ ३ ॥ गुडेन मिश्रितं क्षीरं कदुष्णं कामतः पिबेत् । मूत्रकृच्छ्रेषु सर्वेषु शर्करायाश्मनिश्च ॥ ४ ॥ धात्रीरसं चेक्षुरसं पिबेद्वा कृच्छ्रे सरक्ते मधुना विमिश्रम् । शल्याभिघातोत्थितमूत्रकृच्छ्रे कार्या क्रियामारुतकृच्छ्रतुल्या ॥ ५ ॥ क्वाथो गोक्षुरबीजस्य यवक्षारसमन्वितः । पीतः प्रशमयत्येव कृच्छ्रं विड्भारजोत्थितम् ॥ ६ ॥ त्रिफलाया सुपिष्टाया कल्कः कोलसमन्वितम् । वारिणा लवणीकृत्य पिबेन्मूत्ररुजापहम् ॥ कोलं बदरम् ॥ ७ ॥ गुडमामलकं वृष्यं श्रमघ्नं तर्पणं प्रियम् । पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रहरं परम् ॥ ८ ॥ सपादशाणतुलितो यवक्षारः सितायुतः । भक्षितो नाशयत्येव मूत्रकृच्छ्रं न संशयः ॥ ९ ॥ द्राक्षासितोपलाकल्कं पीतं शर्मितो नरे ॥ मस्तुना पललमाचेयं मूत्रकृच्छ्रं व्यपोहति ॥ १० ॥ समूलगोक्षुरक्वाथः सितामाक्षिकसंयुतः । नाशयेन्मूत्रकृच्छ्राणि तथैवोष्णसमीरणम् ॥ उष्णसमीरणमुष्णवातं मूत्राघातविशेषम् ॥ इति भावप्रकाशः ॥

मूत्रदोषः । पुं० प्रमेहे ॥

मूत्रनिरोधः । पुं० मूत्रप्रतिबन्धकरोगविशेषे ॥ यथा । पिष्ट्वैवमालतीमूलं ग्रीष्मकाले समाहृतम् । सन्दितछागदुग्धेन पीतं शर्करयान्वितम् । हरेन्मूत्रनिरोधञ्च हरेद्वेगात् शर्करा ॥

मूत्रपतनः । पुं० गन्धमार्जारे ॥

मूत्रपुटम् । न० नाभेरधोभागे । मूत्राशये ॥

मूत्रफला । स्त्री० कर्कट्याम् ॥ त्रपुष्याम् ॥

मूत्रलम् । न० त्रपुषे ॥ त्रि० मूत्रवर्द्धके ॥

मूत्रला । स्त्री० कर्कट्याम् ॥ वालुक्याम् ॥

मूत्राघातः पुं० प्रस्रावरोधकरोगविशेषे ॥ प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः । जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ॥ मूत्रविघाताद्यैरित्यत्राद्यशब्दात् पुरीषशुक्रादिवेगनिग्रहात् हीनाः रूक्षाशनादीनां संग्रहणम् । मूत्रविघाताद्यैः कुपितैर्दोषैरित्यन्वयः । ननु मूत्रकृच्छ्रमूत्राघातयोः को भेदः । उच्यते । मूत्रकृच्छ्रे कृच्छ्रमधिकं विबन्धोऽल्पः । मूत्राघाते तु विबन्धो बलवान् कृच्छ्रमल्पमित्यनयोर्भेदः ॥ अस्य चिकित्सा यथा । नलकुशकाशेक्षुबालाक्वाथं प्रातः सुशीतलं ससितम् । पिबतो नश्यति नियतं मूत्रग्रहस्तु वाचकवि ॥ कवि शुक्र । कर्पूर-

जसायुक्तावत्ववर्त्ति शनै शनै । मेढ्रमार्गान्तरेन्यस्तामूत्राघातव्यपोहति ॥ धान्यगोक्षुरक क्वाथ कल्कसिद्ध स्थितघृतम् । मूत्राघाते मूत्रकृच्छ्रे शुक्रदोषेचदारुणे ॥ धान्यगोक्षुरक घृतम् ॥ मूत्रकृच्छ्रे श्मरोरोगेभेषज सत्प्रकीर्तितम् । मूत्राघातेषु सर्वेषुतत्कुर्य्याद्दि शकालवित् ॥

मूत्रातिसार । पु० प्रस्रावातिसरण रोगे ॥ तस्यौषधयथा । वलामूलत्वचश्चूर्णंपीतसक्षीरशर्करम् । मूत्रातिसार हरतिदृष्टमेतन्नस शयङ्कति ॥

मूत्रातीत । पु० मूत्ररोगविशेषे ॥ यथाहु । चिर धारयतोमूत्रत्वरया नप्रवर्त्तते । मेहमानस्यमन्द वामूत्रातीत सउच्यते ॥ इति ॥

मूत्राशय । पु० वस्तौ । मूत्रपुटे ॥

मूत्राशयपुट । पु० वस्याम् । मूत्रपुटे ॥

मूत्रित । त्रि० कृतमूत्रोत्सर्गे । मीढे ॥ मूत्र्यतेस्म । मूत्र० । क्त ॥

मूर्ख । पु० पुरीषमे । माषे ॥ गायत्रीरहिते । सार्थगायत्रीरहिते ॥ त्रि० अज्ञे । वैधये । वालिशे ॥ शास्त्रज्ञानशून्ये ॥ शून्यवादिनि ॥ देहात्मवादिनि अधीत्यवेदशास्त्राणिससारेरागिणश्चये । तेभ्य परोनमूर्खोस्तिरगधर्मे श्वाजशूकरे ॥ समइतिशेष । मानुष्य दुर्लभ प्राप्यवेदशास्त्राण्यधीत्यच । बध्यते यदिस सारेकोविविच्येतमानव ॥ मुह्यति । मुह० । मुह खोमूर्च मूर्खोवषाप्रवासीसतिनिजविभवे सञ्चयोनार्त्तिगेहेनानाधान्यौषधीनासतिपितरिगृहेनार्जितायेनविद्या । भार्याख्यक्त्वासुरूपारतिमिहकुरुतेभर्त्सयत्याचदासीवाण्यावेराभिलाषीकुमतिजनरुचिर्वञ्चिराजन्स्वगोयम् ॥ वाग्ग्राम० गौडाणभाषायाम उत्कृष्टपुरुषार्थलाभे सम्भवत्यधम कामयमानोमूर्ख ॥ मूर्खससहस्र योगोविषादपिसुदुर्जर । विद्वनसहस योग सुधारससम स्मृत ॥ अत्रमूर्खनिन्दादेवीभागवतेद्रष्टव्या ।

मूर्खता । स्त्री० मूर्खत्वे ॥ मूर्खस्य भाव । तस्यभावस्त्वतलाविति तल् ॥

मूर्खत्वम् । न० मूर्खतायाम् । अज्ञत्वे । मूरखपन० इ० भा० ॥ मूर्खत्व सुलभ भजस्वकुमत मूर्खस्यचाष्टौगुणानिश्चिन्तोबहुभोजकोतिमुखरोरात्रि दिवास्वप्रभाक् । कार्य्याकार्य्यविचारणादिरहितोमानापमानेसमोदत्वासर्वजनस्यमूर्ध्निचरणौमूर्खश्चिरम्जीवतु ॥

मूर्च्छनम्। न॰ मूर्च्छाग्राम्॥ मूर्च्छापित्ततम प्राया।

मूर्च्छना स्त्री॰ गीताङ्गविशेषे। ग्रामस्यसप्तमभागे॥ चतुर्द्दशविधा ग्राम्। षड्जादिस्वरस पूर्णताया म्। तदुक्त शाण्डिल्येन। यत्रैव स्यु स्वरा पूर्णामूर्च्छनास्त्यु दाहृतेति॥ अन्यत्रमूर्च्छनालक्षण यथा। क्रमात्स्वराणासप्तानामारो हश्चावरोहणम्। सामूर्च्छेत्युच्य तेग्रामस्थाएता सप्तसप्तच। ग्रा मत्रयेपिप्रत्येकसप्तसप्ततुमूर्च्छना॰इ त्येकविंशतिमूर्च्छनाभव ति।

मूर्च्छा। स्त्री॰ कश्मले। मोहे॥ सञ्चावहासुनाडीषु पिहितासुनि लादिभि। तमोऽभ्युपैतिसहसासु खदु खव्यपोहकृत्॥ सुखदु ख व्यपोहाच्चनर पततिकाष्ठवत्। मोहोमूर्च्छेतितांप्राहु षड्विधा साप्रकीर्त्तिता॥ मूर्च्छनम्। मूर्च्छामोहसमुच्छ्राययो। गुरो श्चहलइत्य। उपधायाश्चेतिदी र्घ। टाप्॥ इन्द्रिये सहमन सउपपन्नेमोमूर्छेतिव्याख्यातार॥

मूर्च्छाय। पु॰ मूर्च्छायाम्॥

मूर्च्छाल। त्रि॰ मोहयुक्ते। मूर्च्छते॥ मूर्च्छास्यास्ति। सिध्मादि षु॰ क्षुद्रजन्तूपतापयोश्चेतिपठि ताश्च। प्राणिस्थादातइतिनभव ति॰ प्राच्यइगादेवेतिव्याख्याना त्॥

मूर्च्छित। त्रि॰ मूर्त्ते। मूर्च्छायु क्ते। मूर्छिते। विचेतने॥ सो च्छ्रये॥ मूढे॥ वृद्धे॥ मूर्च्छ तिस्म। मूर्च्छा॰। गत्यर्थेतिक्त॥ मूर्च्छासञ्जाताऽस्यवा। तारकादि त्वादितच्॥

मूर्त्त। त्रि॰ मूर्च्छाले। मूर्च्छि ते॥ कठिने॥ मूर्त्तिमति॥ स न्निवेशोनैवद्रव्यायस्यतन्मूर्त्तमुच्य ते। चित्स्वरूपिनवयमूर्त्तममूर्त्तत्वित रद्वयम्॥ मूर्च्छतिस्म। मूर्छा॰। अकर्मकत्वात्क्त। राल्लोप। नध्याख्येतिनत्वन॥ न्यायमते॰ पृथिवी॰ जल॰ तेज॰ वायु मनश्च। एषागुणा रूप॰ रस॰ गन्ध स्पर्श॰ परत्वम्॰ अपर त्वम्॰ गुरुत्वम् स्नेह॰ वेगश्च मूर्त्तामूर्त्तसाधारणगुणा। सङ्ख्या॰ परिमिति॰ पृथक्त्व म्॰ सयोग॰ विभागश्च इतिभा षापरिच्छेद॰॥

मूर्त्तवित्। त्रि॰ आगमिके॥ त्रिशूलधारीमहेश्वर शङ्खचक्रादिधा रीविष्णुर्वापरमार्थोभवतीत्यागमि का कल्पयन्ति। तत्रतेषाकल्प नम्॰ भ्रान्तिमात्रम् अस्मदादि शरीरवत्तत्स्यापिशरीरसम्पाद्यभो

तिकत्वातलीलाविग्रहकल्पनञ्च । विग्रहाभावे लीलायोगादयुक्तमेव ॥
मूर्त्ति । स्त्री० काठिन्ये ॥ प्रतिमायाम् । असर्वगतद्रव्यपरिमाणे ॥ शिवस्याष्टमूर्त्तयो यथा । सर्वं क्षिति समुद्दिष्टा भवो जलसमाहृता । रुद्रोऽग्निरुग्रो वायुः स्यात् भीम आकाशशब्दिता ॥ पशोः पतिर्यजमानो महादेवः सुधाकरः । ईशानः सूर्य इत्येता मूर्त्तयोऽष्टौ प्रकीर्त्तिताः ॥ मूर्त्तिर्हि धर्मस्य पत्नी । यथा । मूर्त्तिश्च धर्मपत्नी सा कान्तिरूपा मनोहरा । कान्तिरूपा शोभारूपा । परमात्मा च विश्वौघो निराधारो यया विना ॥ शोभा विना परात्मापि निराधारो निरर्थक इत्यर्थः ॥ सर्वं च शोभारूपा च लक्ष्मीमूर्त्तिमती सती । श्रीरूपा मूर्त्तिरूपा च मान्या धन्याति पूजिता इति भागवते ९ स्कन्धे १ ध्याय ॥ काये । देहे । जरायुजाण्डजोद्भिज्जादिभेदेन विलक्षणविविधसंस्थानासु तनुषु ॥ मूर्च्छ् ति० मूर्च्छयतेर्वा । मूर्च्छा० । क्तिन् । राल्लोपः ॥ रूपे ॥ स्वभावे ॥ लग्ने ॥

मूर्त्तिमान् । त्रि० कठिने । मूर्त्तिविशिष्टे ॥ मूर्त्तिः काठिन्यमस्यास्ति । तदस्याऽस्त्यस्मिन्निति मतुप् ॥ स्त्रियाम्० मूर्त्तिमती । उगित्त्वान्ङी

प् ॥ न० शरीरे ॥
मूर्त्त्युपचय । पु० स्थौल्ये ॥
मूर्द्धगा । पु० क्षत्रिये ॥
मूर्द्धकर्परी । स्त्री० जलच्छायाम् ॥
मूर्द्धखोलम् । न० छत्रे ॥
मूर्द्धज । पु० केशे । त्रि० मूर्द्धि जाते ॥
मूर्द्धतैलम् । न० तैलविशेषे ॥ अभ्यङ्ग परिषेकश्च पिचुर्वस्तिरितिक्रमात् । मूर्द्धतैलचतुर्धा स्याद्बलवत् तद्यथोत्तरं ॥
मूर्द्धा । पु० उत्तमाङ्गे । शिरसि । मस्तके ॥ छाया कारे शिरोभिस्तु नृपाणि स्तन्शिरावनौ । चिपिटैस्तु पितुर्दत्यु गंशाख्या परिमण्डलैः घटमूर्द्धा पापकृच्चिर्धनाढ्यो परिकीर्त्तितः ॥ मुह्यत्यस्मिन्नाहते । मुह्० । श्वन्नुक्षन्निति० मुहेः कनिन्० निपातनादुपधादीर्घो धेर्मान्तादेश्चारमागमश्च ॥
मूर्द्धन्य । त्रि० मूर्द्धनिभवे ॥ शरीरावयवाच्चेति यत् । ये चाभावकर्मणोरिति प्रकृतिभावान्नस्तद्धित इति० टिलोपाभाव ॥
मूर्द्धपुष्प । पु० शिरीषवृक्षे ॥
मूर्द्धरस । पु० भक्तफेने ॥
मूर्द्धवेष्टनम् । न० उष्णीषे ॥
मूर्द्धाभिषिक्त । पु० भूपाले । राजनि ॥ क्षत्रिये । राजन्ये । बाहुजे ॥

मूर्द्धि॰ अभिषिच्यतेस्म । चिचिय र्ये । क्त । राज्यदासमये॰ मूर्द्ध्न्यभिषिच्यते॰ तत्प्रभवत्वात्स वीपिक्षत्रियोमूर्द्धाभिषिक्तउच्यते । मन्त्रिणि ॥ प्रन्नामे ॥ मूर्द्ध्न्यभि- षिक्त । वर्णसङ्करजातिविशेषे विप्रात्क्षत्रियायामजाते ॥

मूर्द्धावसिक्त । पु॰ ब्राह्मणात्परि णीतक्षत्रियायामुत्पन्ने ॥ अस्त्र- सिरतु । हस्त्यश्वरथशिक्षाचअस्त्रा धारणं तथा । मूर्द्धावसिक्तस्य हत्ति प्रोक्ताभग्नसाशुभा ॥

मूर्वा । स्त्री॰ लताविशेषे । देव्याम् । मधुरसायाम् । मोरटायाम् । सुरं ङ्गर॰ ह॰ भा॰ प्र॰ । धनुर्गुणोप युक्ता॰ सुरगा॰ ह॰ गौ॰ भा॰ प्र॰ मूर्वासरागुरु स्वादुस्तिक्ता पित्तास्रमेहनुत् । त्रिदोषतृष्णाहृ द्रोगकण्डूकुष्ठज्वरापहा । मूर्वति । मूर्वावन्धने । अच् ।

मूर्विका । स्त्री॰ मूर्वायाम् ॥ मूर्वैव । स्वार्थेकन् ॥

मूलम् । न॰ शिफायाम् ॥ ग्रन्थे । अङ्घ्रिनामके । जड॰ ह॰ भा॰ । मूलमाले । यथा । अर्थस्यमूल निकृति क्षमाचक्षामस्यमूलश्व पुर्वश्च । धर्मस्यत्यागादिदयादमश्च मोक्षस्य सर्वोपरम क्रियाश्च ॥ आद्ये । प्रथमे ॥ यथा । मूलप्रकृ ति । मूलवित्ते ॥ भे ॥ निकुञ्जे । निजे ॥ चरणे । टीकादिग्रन्थे । ग्रूरणे । पिप्पलीमूले ॥ पुष्कर मूले । विशेषमूलस्यान्वेषणे निये धोयथा । नदीनामग्निहोत्राणामभा रतस्यकुलस्यच । मूलान्वेषोनकर्त्त व्योमूलाद्दोषोनदीयते ॥ पु॰ न॰ अनिके । पार्श्वे । नक्षत्रविशेषे ॥ यथा । हस्त्यश्वातिसवयाजीवेस्य गशिरोनपुंसिस्यात् । पुंसिपुनर्व सुपुष्योमूलन्वस्त्रीस्त्रियाशेषा ॥ निर्ऋतिदेवताकेनक्षत्रे ॥ अग्नि मूजातस्यफल यथा । मूलविरुद्धा वयव समूलकुजदस्थ्ये वदन्तिव न्त । चेदन्यथात पुरुषाविशेषा त् सौभाग्यमायुस्वकुलानुवृद्धि ॥ मूलसन्ने ॥ मूलति । मूलप्रतिष्ठा याम् मूलरोहणे वा । इगुपधेति क ॥ मवते । मूङ्बन्धने । मूस्य क्यस्विश्च क्त ॥

मूलक । पु॰ स्थावरविषप्रभेदे ॥

मूलकम् । न॰ मूलविशेषे । राजालु के । महाकन्दे । हस्तिदन्तके । मूली॰ इतिभाषाप्रसिद्धेकन्दे ॥ अस्यगुणा । मूलकद्विविध प्रोक्तं तत्रैकं लघुमूलकम् । शालामर्क टक विस शालेय मरुसम्भवम् ॥ चाणक्यमूलक तीक्ष्ण तथामूलक पोतिका । नेपालमूलक चान्यत्

गोमेषवनिताधमुर्घूकघटास्तथा। मूलत्रिकोणभवनान्याहुः सूर्यादितः क्रमात् ॥ एतेरायय क्रमात् सूर्यादीनांमूलत्रिकोणभवनान्याहुः। यथा। सिंह सूर्यस्यमूलत्रिकोणभवनम्। एवं वृषश्चन्द्रस्य•मेष• कुजस्य•कन्याबुधस्य•धनुर्गुरोः तुलाशुक्रस्य•कुम्भः शनेरिति ॥

मूलत्रिकोणांश.। पु• रव्यादीनांत्रिकोणभागे ॥ य•। खयुग्मभार्कदिक्पालदिक्पञ्चदशविंशति।मूलत्रिकोणभागा स्युः सूर्यादीनांयथाक्रमात्। यथा। सिंहराशौसूर्यस्यविंशत्यंशामूलत्रिकोणभागा स्युः। एवंचन्द्रस्यवृषेत्र्यंशमतुङ्गाशवयादूर्ध्वंसप्तविंशत्यंशा कुजस्यमेषेद्वादशांशा बुधस्यकन्यायातुङ्गपञ्चदशांशादूर्ध्वंदशांशा पञ्चविंशत्यंशपर्यन्तम्•गुरोर्धनुषिदशांशा शुक्रस्यतुलायाम्पञ्चदशांशा शने कुम्भे विंशत्यंशा मूलत्रिकोणभागा स्युरिति॥

मूलदेव। पु• मूलभद्रे। कंसासुरे॥

मूलद्रव्यम्। न• मूलधने॥

मूलधनम्। न• वणिजःमूलवित्ते। नीव्याम्। परिपणे। पूंजी•इ•भा•॥ मूलसूतवनम्॥

मूलनगरम्। न• राजधान्याम्॥

मूलपर्णी। स्त्री• मण्डूकपर्ण्याम्॥

मूलपुष्करम्। न• पुष्करमूले॥

मूलपोती। स्त्री• शाकप्रभेदे। क्षुद्रवल्ल्याम्। क्षुद्रपोतिकायाम्॥

मूलप्रकृति। स्त्री• आद्यायांशक्तौ। प्रधाने। प्रकृतिः प्रधानम्। मूलस्यामौत्प्रकृतिरस्तेतिविग्रहः। विश्वस्यकार्य्यकलापस्यसामूलम्•नस्त्वस्यामूलान्तरमस्तिअनवस्थाप्रसङ्गात्। मध्यानवस्थायामस्तिप्रमाणम्॥

मूलफलद.। पु• पनसे। कण्टकिफले॥ मूले•फलंददाति। इदाच्•।क॥

मूलबन्ध.। पु• राजयोगाङ्गविशेषे॥ यस्मात्सर्वभूतानायन्मूलंचित्तबन्धनम्। मूलबन्धः सदासेव्योयोग्योसौराजयोगिनाम्॥

मूलभद्र। पु• कंसासुरे॥

मूलरस। पु• मोरटलतायाम्॥

मूलविभुज। पु• रथे॥ मूलानि विभुजति। भुजोकौटिल्ये। मूलविभुजादित्वात्क॥

मूलस्तम्भ। पुं• स्थितिहेतौ॥

मूला। स्त्री• शतावर्याम्॥ मूलभे॥

मूलाधार:। पुं• गुह्यलिङ्गयोर्मध्ये कुलिङ्गयमितस्थाने। शरीरस्थषट्चक्रान्तर्गतादीन मूलस्थाने॥ मूलमाधारषट्कानाम्मूलाधारं ततोविदुरितिदेवीगोतोक्तेः॥

मूढाविद्या। स्त्री॰ अनाद्यविवेके। अयजीवोनकूटस्थ।अथिनकिंकदा चन। अनादिरविवेकोयंमूढाविद्येतिगम्यताम्॥

मूलाह्वयम्। न॰ मूलके॥

मूली। पु॰ वृक्षे॥

मूली। स्त्री॰ ज्येष्ठायाम्॥

मूलेर। पुं॰ जटायाम्॥ मूलति। मूल॰। मूलेरादयश्चेति साधु॥

मूल्यम्। न॰ अवक्रये। वस्ने। मोल॰ निरख॰ हू॰ भा॰ दर॰ दाम॰ इतिसाधारणजनभाषा॥ भृत्यायाम्। वेतने। मजूरी॰ भाडा॰ हू॰ भा॰॥ मूलेनआनाम्यम्॰मूलेनसमया। नौवयोधर्मेत्यादिनायत् चि॰ मूलतउत्पाटनयोग्येमुद्गादौ॥ मूलमावर्हियस्य। मूलमस्यावर्हीतियत्॥

मूष। पुं॰ मूषिके॥ तैजसावर्त्तन्या॥

मूषक। पुं॰ मूषिके॥ मूषति। मूषस्तेयेदीर्घोपधोप्यस्ति। भ्वादि। खुल्। स्त्रायाकुनवा॥

मूषककर्णी। स्त्री॰ आखुपर्ण्याम्॥

मूषकमारी। स्त्री॰ सुतश्रेण्याम्॥

मूषका। स्त्री॰ मूषिकायाम्॥

मूषिकाराति। पुं॰ ओतौ। बिडाले॥

मूषली। स्त्री॰ पक्षा॥

मूषा। स्त्री॰ स्वर्णाद्यावर्त्तनपात्रे। तैजसावर्त्तन्याम्॥ देवताडे॥ अन्त शुषिरायाम्तत्प्रतिमायाम्॥ मूषति। मूष॰। इगुपधेतिक॥ गवाक्षे॥ यथा। एकद्वित्र्यादिमूषावहनमितिमस्त्रोबुद्धिमेभूम्नि भर्तुर्हर्म्येरम्येष्टमूर्ध्न चतुरविरचिते ग्रन्थशालाविशाले। इत्यादिलीलावत्याम्श्रीव्यवहार॥

मूषाकर्णी। स्त्री॰ आखुपर्ण्याम्॥

मूषातुत्थम्। न॰ कांस्यनीले। वितुन्नके। ईमतुत्थे॥

मूषिक। पु॰ उन्दुरौ। आखौ॥ अस्यमांसगुणा। अहिनकुलशल्यगोधामूषिकमुख्याविलेशया कथिता। श्वासानिलकासहरतस्मासपित्तदाहकरम्॥ अन्येविलेशयायेच्युक्रेदिकोन्दुरुकादय। गर्हितनखमांसरुक्ष्मद्यगौरवदुर्लभम्॥ अपिच। मूषकोमधुर स्निग्धोव्यवायीवलवर्धन। पारिभाषिकोयथा। विभवेसतिनैवात्तिनदद्यातिजुहोतिच। तमाहुराखुतस्यान्नभुक्त्वाकृच्छ्रेणशुध्यति॥ मुष्णाति। मुष॰। मुषेर्दीर्घश्चेतिकिकन्॥

मूषिकपर्णी। स्त्री॰ जलजद्रव्यविशेषे। चित्रायाम्। उपचित्रायाम्। न्यग्रोध्याम्। मूषाकर्णीतिख्याता

याम् । द्रु रद्राकानीपामा० द्रू० गी० टे० भा० ॥ मूषिकपर्णमस्या ' मूषिककर्णाकारपर्णत्वात् । पाकक र्णेतिङीष् ॥

मूषिका । स्त्री० मूषिकपर्ण्याम् ॥ मूषकस्त्रियाम् ॥ अजादित्वाट्टाप ॥ मूषायाम् ॥

मूषिकाङ्क । पु० गणेशे ॥

मूषिकाञ्चन । पु० विघ्नहारिणि । गणेशे ॥

मूषिकार । पु० आखौ । उन्दुरौ ॥ मूषिकाया . पुमान् । आरक्पुंसी त्यारक्

मूषिकाराति । पु० विडाले ॥

मूषिकाह्वया । स्त्री० सुतश्रेण्याम् ॥ मूषिकपर्ण्याम् ॥

मूषित । त्रि० मुषिते । चोरिते । मूष्यतेस्म । मूषस्तेये । क्तः ॥

मूषिपर्णिका । स्त्री० मूषिकपर्ण्याम् ।

मूषी । स्त्री स्वर्णाद्यावर्त्तनभाजे । स्वर्णादिद्रवीकरणपात्रे । मूषायाम् ।

मूषीक । पुं० उन्दुरौ । मूषिके ॥

मूषीककर्णी । स्त्री० मूषिकपर्ण्याम् ॥

मूषीका । स्त्री० उन्दुरौ ।

मृकण्ड । पु० मृकण्डुमुनौ ॥ अयम दन्तोमृगव्यादयश्चेतिसूचे० उज्ज्वल दत्तग्रन्थे स्पष्ट ॥ मृकण्डस्यमुनेस्तीर्थंतदाख्यामतिनिर्मलमितिस्कान्दोक्तेश्च ॥

मृकण्डु । पुं० मृकण्डमुनौ

मृग । पुं० आरण्यपशुमात्रे । करिविशेषे ॥ मृगशिरोनक्षत्र ॥ यथा मृगेगत्वाशिवेस्थित्वाऽदितौग च्छन्जयेद्रिपूनिति ॥ एकदेशप्रयोगात् ॥ अन्वेषणे ॥याञ्चायाम् ॥ मार्गशीर्षमासे ॥ यज्ञविशेषे ॥ मृग नाभौ ॥ मकरराशौ ॥ मृगयायाम् ॥ स्वनामप्रसिद्धे पशुविशेषे । कुरङ्गे । वातायौ । हरिणे । अजिनयोनौ ॥ अस्यमासप्रकारगुणा । मार्गमासबहुशकलित स्विन्नमौच्छतोयेलमस्मे हिङ्गुरणसहितैपाचित शब्दमुचे । सान्द्र सार्द्रलवणासङ्गित दाडिमेनातियुक्त स्वादन स्वादन्कलयतिशिरश्चन्द्रचूडोपिनूनम् ॥ ऐण मास हिम ग्राहि कृच्छ दोषच यापहम् ' बङ्कसबलदपथ्य हृष्य लघु ज्वरापहम् ॥ मृग्यते । मृगअन्वेषणे । अदन्त । घञ् । मृगोनव विधोयथा । सम्बरोगोहितोन्यङ्कु कुरङ्ग मुटमोरुरु । एणश्चहरिणश्चेतिमृगा नवविधामता . ॥ पाठान्तरयथा । समूरुरोहितोन्यङ्कु सम्बरोवभुणोरुरु । अश्वो चहरिणश्चेतिमृगा नवविधामता ॥ हारिणश्चापिविज्ञेय पञ्चभेदोत्र भैरव । कृष्ण स्वङ्गोरुरुश्चैवपृषतश्च मृगस्तथा ॥ एतेवलिप्रदानेचचर्म

दानेचकीर्त्तिता ॥ इतिकालिका पुराणे ६७ अध्याय अथमृगपरी क्षा मृगनाभिसमादातुकौतुका र्थंतथापुन । मृगा पोष्यामहो- न्द्राणांतेषा-ञ्च्यामिलक्षणम् ॥ पृ थिव्यब्वायुगगनतेजोधिकास्तुपञ्च धा भिद्यन्ते नैरूभेदास्तुममस्तामृग जातय ॥ तद्यथा । येगन्धिन क्षी णशरीरकर्णास्ते पार्थिवागन्धमृगा प्रदिष्टा । सर्वाङ्गमेषांसुरभिप्रका म पुण्येप्रदेशेप्रभवन्तितेतु ॥ येवेपि शालागुरुदीर्घंशृङ्गाश्चमांसलास्तो ब्रखुर देशा । आप्यास्तुतेवैप्रसर न्तिभूरिसर्वत्रदेशेप्रभवन्तिचैव ॥ धा वन्तियेवातमिवान्तरीक्षेदीर्घास्तुते- वातमृगा प्रदिष्टा । तेयत्रयत्रै वभवन्तिशक्तास्तत्रैवमर्वाणिशुभा- निसन्ति ॥ लघुप्रमाणालघुवीर्यस- त्वानिर्गन्धदेहाश्छगलप्रमाणा । तेगागनावेगकरानराणास्पृश्यानते नापिनिरीक्षणीया ॥ येकृष्णवर्णा गुरुदीर्घशृङ्गा कुवाभ्रश्च यान्ति चवायुवेगा । तैक्ष्णसारा खलु तैजसास्तुपुण्यप्रदेशेप्रभवन्तितेतु ॥ भोजोप्याह ।पार्थिवादिमृग सर्व स्वतुर्जातिर्भवेत्पृथक् । सुशृङ्गास्त नुलोमानोब्राह्मणाम्मृगजातय । क्रुद्धा पञ्चरिशृङ्गाश्चक्षत्रिया खरलोमशा । आवर्त्तशृङ्गास्तनवो हरिणावैश्यजातय कुशृङ्गावाप्य शृगावाशूद्रा खरतनूरुहा । अशुभा नायेगुणादोषा स्तेज्ञेयाहरिणेष्व पि ॥ तथापिदोषा पञ्चामीवर्ज्य न्तेहरिणाश्रया । नेत्रयोरन्तरेय स्यलोमावर्त्ता सपापकृत् ॥ विष मोविकृतौशृङ्गोयस्यसत्क्षेमनाशन । आवर्त्त पृष्ठतोयस्यआनाभिम भिविन्दति ॥ पश्वार्श्वयस्यवावर्त्त स्तोस्याज्यौभयकारकौ । वर्णनेच पदादीनांक्षताङ्गनाशन ॥ गा र्ग्य । दोषवन्मृगजातीनाविजा तीनामथापिवा। दर्शनात्स्पर्शना च्चैवगन्धादानाच्चपोषणात् ॥ भवे युर्विपद सर्वास्तथाचैवाद्यपोष णात् ॥ शङ्खोपि । हरिणपोषणतो धरणीभुजानभिभवेन्मरुदुद्भवपीड नम् । नपविवर्द्धिरुजारिपुजंभयत द्नत हरिण गणिनमृप ॥ इतिमृग परीक्षा युक्तिकल्पतरौ ॥ चतुर्विध पुरुषेषुपुरुषविशेषे ॥ तल्लक्षण यथा । वदतिमधुरवाणींदीर्घनेत्रो ऽतिभीरुश्चपलमतिसुदेह शीघ्रवे गोमृगोयम् ॥ शशकेपद्मिनीतुष्टा मृगेतुष्टाचचित्रिणी। वृषभे शङ्खिनी तुष्टाहयेतुष्टाचहस्तिनी ॥ पद्मिनी शशयोर्योनिर्मेढ्कौचतुरङ्गुलौ । चित्रिणीमृगयोर्योनिर्मेढ्रकौचतथा विधौ ॥ इ० रतिमञ्जरी ॥

मृगगामिनी । स्त्री० विडङ्गे ॥ मृगस इवगमनशीलायाम् ॥

मृगचर्म्मजम् । न० अवादिनामकग न्धद्रव्ये ॥ चि० मृगचर्मजाते ॥

मृगचेटक । पु० खट्टासे ॥

मृगचेष्टितम् । न० मृगेङ्गिते ॥ तद्यथा । सीमागतावन्यमृगारुवन्त स्थिताव्रजन्तोयसमापतन्त । सम्प्रत्यतीतेष्वभयानिदीप्ता कुर्वन्ति शून्य परितोभ्रमन्त ॥ दीप्ता भयकुर्वन्तिआवेदयन्तीतिसर्वेत्रान्वयोबोध्य ॥ तेग्राम्यसत्त्वैरनुवाच्यमानाभयायरोधायभवन्तिवन्या । द्वाभ्यामपिप्रत्यनुवाशितास्तेवन्दिग्रहायैवमृगारुवन्ति ॥ वन्येसत्त्वे द्वारसस्थे पुरस्यरोधोवाच्य सप्रविष्टे विनाश । सूतेमृत्यु स्याद्भयसस्थितेचगेहयातेबन्धनसप्रदिष्टम् ॥

मृगजह्वु पु० मृगापत्ये ॥

मृगजालिका । स्त्री० वागुरायाम् ॥

मृगजीवन । पु० व्याधे ॥ मृगाजीवनमस्य ॥

मृगणा । स्त्री० अपहृतद्रव्यान्वेषणे ॥ मृग० । च्यासे तियुच् ॥

मृगतट् । स्त्री० मृगतृष्णायाम् ॥

मृगतषा । स्त्री० मरीचिकायाम् ॥ मृगाणांतृषाअस्यस्थाम् । अर्श आद्यच् । टाप् ॥

मृगतृष्णा । स्त्री० मरीचिकायाम् ॥ ग्रीष्मे मरुदेशेसिकताखर्करश्मय प्रतिफलितादूरस्थानांजलमितिबुद्धिविषयास्तामृगतृष्णाअस्यस्थाम् अर्श आद्यच् । टाप् ॥

मृगतृष्णिका । स्त्री० मृगतृष्णायाम् ॥ मृगतृष्णैव । स्वार्थे कन् ॥ रे चित्तचिन्तयचर चरणौमुरारे पार गमिष्यसियतोभवसागरस्य । पुत्रा कलत्रमितरेसुहृद सहाया सर्वविलोकयसखे मृगतृष्णिकाभम् ॥

मृगदंशक । पु० कुक्कुरे ॥ मृगान्दशति । दश दशने । कर्म्मण्यण् । क ॥

मृगधूर्त्तक । पु० गोमायौ । शृगाले ॥ मृगेषुधूर्त्तइव । सज्ञायाकन् ॥

मृगनाभि । पु० कस्तूर्याम् ॥ मृगस्य नाभि ॥

मृगनाभिजा । स्त्री० कस्तूर्याम् ॥

मृगनेत्रा । स्त्री० रात्रिविशेषे ॥ त्वयापुत्रकनाधीतमृगनेत्रासुरात्रिषु तेनत्व विदुषामध्ये पङ्के गौरिवसीदसि । मृगोनक्षत्रविशेषोनेताय स्या । नेतृनक्षत्रे ऽब्नक्षत्र्य ॥ योषित्प्रभेदे । मृगलोचनायाम् ॥ मृगस्यनेत्रेइवनेत्रेचक्षुषी यस्या ॥

मृगपति । पु० मृगेन्द्रे । सिंहे ॥

मृगपिप्लु । पु० चन्द्रे । हि

माशी ॥

मृगप्रियम् । न० पर्वततृणे ॥

मृगवधाजीव । पु० व्याधे ॥ मृगवध आजीवोयस्यस ॥ मृगवधेनाजीवतित्रा । जीव० । इगुपधेतिक ॥

मृगबन्धनी । स्त्री० मृगबन्धनार्थंजालविशेषे । खावल्० इ० पर्वत भा० ॥ वागुरायाम् ॥ मृगोबध्यतेऽनया । बन्धबन्धने । करणेल्युट् । ङीप् ।

मृगभक्ष्या । स्त्री० जटामांस्याम् ॥

मृगमद पु० कस्तूर्याम् ॥ मृगस्य-मद ॥

मृगमदवासा । स्त्री० कस्तूरीमल्लिकायाम् ॥

मृगमातृक । पु० मृगविशेषे ॥ स्वल्प पृथुदरोच्चेय । शरभोमृगमातृक । गुणे शशेनसदृशोगदितो मृगयमातृक ॥

मृगया स्त्री० आखेटने । मृगव्ये । आखेटे । खेटे । हैडा० इ० भा० ॥ चवलखकुलाशिनोभक्षान्निजनीडद्रुमपीडिन खगान् । वनवह्नितया हिंसोमृगान्मृगयाचोवनभूभृताद्यताम् ॥ इतिश्रीहर्ष ॥ मृग्यन्ते मृगाअस्याम् । मृग० । पु० अदन्त । परिचर्य्यापरिसर्यामृगयाऽटाट्यानामुपसङ्ख्यानमितिसाधु ॥

मृगयु । पु व्याधे । लुब्धके । हे-डिया० इ० भा० प्र० । मासविक्रयार्थंमृगादिपशुहन्तरि ॥ मृगान्वधार्थंयाति । या० । मृगव्यादित्वात्कु ॥ गोमायौ । शृगाले ॥ परमेष्ठिनि ॥

मृगरसा । स्त्री० सहदेव्याम् ।

मृगराट् । पु० सिंहे । मृगेषुराजते । राज० । क्विप् ॥

मृगराज । पु० सिंहे ॥ मृगाणांराजा । राजाहःसखिभ्यष्टच् ॥

मृगराटिका । स्त्री० जीवन्त्याम् ॥

मृगरिपु । पु० सिंहे ॥ मृगाणांरिपु ॥

मृगरोमज । न० राङ्कवे । मृगरोमजेवस्त्रे ॥

मृगलाञ्छन । पु० चन्द्रे । शशिनि ॥ मृगोलाञ्छनं यस्य ॥

मृगवल्लभ । पु० कुन्दुरुतृणे ॥

मृगवाहन । पु० वायौ ॥ मृगोवाहन यस्य ॥

मृगव्यम् । न० मृगयायाम् ॥ मृगा व्यधन्ते ऽत्र । व्यधगतौ । बन्धेष्वपीति ड ।

मृगशिरा । स्त्री० पञ्चमनक्षत्रे ॥ मृग शिरोऽस्य ॥

मृगशिर । न० मृगशीर्षे । पञ्चमे नक्षत्रे ॥ अत्रजातस्यफलम् । शरासनाभ्यासरतोविनीत, सदानुरक्तो गुणिनांगुणेषु । भक्तानुपक्तः भरे

णपूर्णं सन्मार्गवर्त्तीमृगजन्मभागी ॥
आक्रान्त्यामृग शिरोऽस्य ॥
मृगशिरा । स्त्री० आग्रहायण्याम् ॥
मृगशिरसि ।
मृगशीर्षम् । न० मृगशिरसिनक्षत्रे
॥ आक्रान्त्यामृग शीर्षं यस्य ॥
मृगशीर्षा । स्त्री० मृगशिरोनक्षत्रे ॥
मृगा । स्त्री० सहदेवीलतायाम् ॥
मृगाक्षी । स्त्री० इन्द्रवारुण्याम् ।
विशालायाम् ॥ मृगनेत्रायाराशौ
॥ मृगलोचनायानार्याम् ॥ मृगस्य
अक्षिणीइवअक्षिणीयस्याः ॥
मृगाङ्क । पु० कलानिधौ हिमांशौ ॥
कर्पूरे ॥ वायौ ॥ मृगचिह्ने ॥ मृ
गोऽङ्कोयस्य ॥ यथादर्पणप्राप्य
परावृत्तानयनरश्मयोग्रीवास्थमेवमु
खदर्पणगतमिवपश्यन्ति०एवचन्द्र
मण्डलप्राप्यपरावृत्तास्तेदूरत्वदोषा
त्०पृथिवीमव्यक्तरूपामिवचन्द्रमण्ड
लगतांपश्यन्ति०सएवचन्द्रेमृगचि
ह्नमित्युपचर्यते० इतिव्याख्याता
र ॥ यक्ष्मरोगस्यौषधविशेषे ॥
यथा। स्यादृसेनसमहेममौक्तिकद्वि
गुणाभवेत्। गन्धकस्तुसमस्तेनरस
पादस्तुटङ्कण ॥ सर्वंतद्गोलकंकृत्वा
काञ्जिकेनविशोधयेत्। भाण्डेल
वणपूर्णेयपचेद्यामचतुष्टयम् ॥ मृ
गाङ्कस ञ्ज्ञकोह्येयोरोगराजनिकृन्त
न । अपिच । रससभस्मनोहेम

पिष्टीकृत्यप्रयोजयेत्। गुञ्जाष्टतुष्ट
यञ्चाज्यमरिचैर्भक्षयेद्गर ॥ इति
मधुमती ॥
मृगाजीव । पु० व्याधे ॥
मृगाण्डजा । स्त्री० कस्तूर्याम् ॥
मृगादन । पु० तरक्षौ । तेंदुवाबाघ
०तरख इ० भा० प्र० ॥ मृगमत्ति
। अद० । ल्यु, ॥
मृगादनी । स्त्री० इन्द्रवारुण्याम् ।
गवादन्याम् ॥ मृगैर्वार्यां ॥ सहदे
व्याम् ॥
मृगादि । पु० मार्गशीर्षे ॥
मृगादी । पु० सिंहे ॥ मृगानत्तुशी
लं यस्य । णिनि ॥
मृगाधिप । पु० सिंहे ॥
मृगान्तक । पु० चित्रव्याघ्रे। चीता
० इ० भा० ॥ मृगाणामन्तकः ॥
मृगाराति । पु० मृगस्यशत्रौ ॥
कुक्कुरे ॥ मृगस्यअराति ॥
मृगारि । पु० कण्ठीरवे । सिंहे
॥ शार्दूले । व्याघ्रे ॥ मृगस्यअरि
॥ कुक्कुरे ॥ रक्तशिग्रौ ॥
मृगाविध् । पु० व्याधे ॥
मृगास्य । पु० मकरराशौ ॥ मृगस्य
आस्यमिवआस्यं यस्य स ॥
मृगित । त्रि० अन्वेषिते । ढूंढा०
इ० भा० ॥ मृग्यतेस्म । मृग०
। क्त । इट् ॥
मृगी । स्त्री० वनिताविशेषे ॥ मृग

र्यां गवियाम् । मृगीणाजङ्गलोत्या नांक्षागौर्यांशुगुषपय. ॥ कश्यपकन्यायाम् । पुलहभार्यायाम् । हरिणादिमृगाणामातरि ॥ मध्यावृत्तिप्रभेदे । रोमृगी॰ इतिलक्षणलक्षिते ॥ यथा । सामृगीलोचना । राधिकाश्रीपतें ॥ हरिण्याम् ॥ सितोदरेपीतपृष्ठे वराटके ॥

मृगेक्षणा । स्त्री॰ मृगनेत्रायाम् ॥ मृगेर्वारी ॥

मृगेन्द्र । पु॰ सिंहे ॥ नाभिषेको नसंस्कार सिंहस्यक्रियतेवने । विक्रमार्जितसत्त्वस्यस्वयमेवमृगेन्द्रता ॥ मृगाणामिन्द्र ॥ वर्णवृत्तान्तरे ॥ पयोधरधारिमृगेन्द्रमवेहि ॥ यथा । वृथाविलपानि ॥ मध्यलघोपञ्चमात्रापर्याये॰ ऽ।ऽ॰ ॥ यात्रायोगान्तरे ॥ लग्नेशुक्र शशीबन्धौ कर्मस्थानेगुरुर्यदा । मृगेन्द्रयोगो विख्यातोयातु सर्वार्थसाधक ॥

मृगेन्द्रचटक । पुं॰ श्येने ॥ चटकानामगेन्द्र ॥ राजदन्तादि ॥

मृगेन्द्रमुखम् । न॰ अतिजगती १३ छन्दोभेदे ॥ भवतिमृगेन्द्रमुखनजौ जरौग ॥ यथा । गुरुभुजवीर्यभरहरि मदान्धायुधिसमुपेत्यनदानवाजिनीषु । क्षुधितमृगेन्द्रमुखमृगावपेत्यवानुखलविभातिजीवनस्ययोगम ॥

मृगेन्द्राणी । स्त्री॰ वासके ॥

मृगेर्वारु । स्त्री॰ श्वेतेन्द्रवारुण्याम् । मृगाद्याम् । श्वेतपुष्पायाम् । मरुजायाम् ॥

मृगेष्ट । पु॰ मुद्गरवृक्षे ॥

मृग्य । त्रि॰ अन्वेष्ये । मृगितव्ये ॥

मृज । पु॰ वाद्यविशेषे । मर्दले । दारुजे । मादल॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

मृजा । स्त्री॰ मार्जनायाम् । प्रोञ्छनादिनाङ्गनिर्मलीकरणे । मार्जनम् । मृजूशुद्धौ । मृजूशौचालङ्करणयो श्च । रादिर्वा । भिदाद्यङ् ॥

मृज्य । त्रि॰ मार्ज्जनीये ॥

मृड । पु॰ शिवे ॥ मृडति । मृडसुखने । मृडणातिवा । मृडच्चात् चोदे । इगुपधत्वात्क ॥

मृडङ्कण । पु॰ बालके ॥ मृडति । मृड॰ । मृड. कीकच्कङ्कणाविति कङ्कण. प्रत्यय. ॥

मृडा । स्त्री॰ दुर्गायां ॥

मृडानी । स्त्री॰ चण्डिकायाम् । अम्बिकायाम् ॥ मृडस्यस्त्री । इन्द्रवरुणेतिङीषानुकौ ॥

मृडी । स्त्री॰ दुर्गायाम् ॥

मृडीक । पु॰ मृगे । हरिणे ॥ मृडति । मृड कीकच्कङ्कणाविति कीकच् ॥

मृणालम् । न॰ नलदे । उशीरे ॥ पु॰

न० वसे । पद्मनाले ॥ मृणालशी तलगुप्यपित्तदाहास्रजिद्गुरु । दुर्जरस्वादुपाकस्तन्यानलकफप्रदम् ॥ सङ्ग्राहिमधुररूक्षं शालूकमपितद्गुणम् । विसाङ्कुराश्चन्द्रकलानुकाराविभाविता संस्वननिम्बुकाभ्याम् । विकीर्णखण्डीकृतशृङ्गवेराजलेपिवङ्कि लघुदीपयन्ति ॥ मृण्यते । मृणहिंसायाम् । तमिविशिविडिमृणीतिकालन् ॥

मृणालिनी । स्त्री० पद्मिन्याम् ॥ मृणालानिसन्त्यत्र । पुष्करादिभ्योदेशइतीनिः ॥

मृणाली । स्त्री० विसे । खजादिमूले ॥ अपचयविवक्षायामृगौरादित्वान्ङीष् ॥ स्वल्पमृणालजातौ ॥

मृत । त्रि० परासौ । प्राप्तपञ्चत्वे । परेते । प्रेते । संस्थिते । प्रमीते । मरा० कृ० भा० ॥ यथा । धर्मप्रव्रजितस्तपः प्रवसितःसत्यंसुदूरेगतंपृथ्वीमन्दफलाजना कपटिनोलौल्ये स्थिताब्राह्मणाः । मर्त्याः स्त्रीवशगाः स्त्रियश्चपला नीचा जनाउन्नताहाकष्टंखलुजीवितंकलियुगेधन्यानरायेमृताः । इतिगारुडे ११५ अध्यायः ॥ न० मृत्यौ ॥ याचिते । मृतन्तुयाचितंप्रोक्तमितिमनुः । याचनत्त्विर्हिंसरणमिवदुःखजनकत्वान्मृतमुच्यते ॥ म्रियतेस्म । मृङ्प्राणत्यागे । गत्यर्थेतिक्तः । तनिमृङ्भ्याकिच्चेतितन्वा ॥

मृतकम् । न० शवे ॥ मरणाशौचे ॥ यथा । यदिस्यान्मृतकेसूतिर्मृतकेचप्रसूतिस्तथा । शेषेणैवभवेच्छुद्धिरह्नः शेषेद्विरात्रकम् ॥

मृतकल्प । त्रि० मृतप्राये ॥ ईषदूनोमृतः । ईषदसमाप्ताविति कल्पप्प्रत्ययः ॥

मृतकान्तक । पु० शृगाले ॥

मृतजीव । पु० तिलकवृक्षे ॥

मृतमत्त । पु० )

मृतमत्तक । पु० ) शृगाले ॥

मृतवत्सा । स्त्री० अजीवत्सन्तानायाम् । मृतापत्यायाम् ॥

मृतसञ्जीवनी । स्त्री० मृतजीवनार्थिकार्याविद्यायाम् ॥ गोरक्षदुग्धायाम् ॥ मृतः सञ्जीव्यतेऽनया । जीवप्राणधारणे । ल्युट् । ङीप् ॥

मृतस्नात । त्रि० अपस्नाते । मृतमुद्दिश्यकृतस्नानेजने ॥ मृतेस्नातः । सप्तमीतिसमासः ॥

मृतस्नानम् । न० अपस्नाने । मृतोद्देशेनस्नाने ॥

मृतस्नेोक्ता । पुं० राजर्षिविशेषे ॥

मृतामदम् । न० तुत्थे ॥

मृतालकम् । न० तुवरिकायाम् ॥ मृतमालयति । अलभूषणादौ ।

मंख्याम् । सन्नायाकन् ॥
मृति । स्त्री० मरणे ॥ मृङ्प्राण त्यागे । स्त्रियांक्तिन् ।' मृति प्राणवियोग स्यान्नतुनाश सतोमत । मृङ्प्राणत्यागइत्युक्त स्वयनष्ट कथ त्यजेत ॥
मृत्कार । पु० कुम्भकारे ॥
मृत्कास्यम् । न० शरावे ॥
मृत्किरा । स्त्री० जलजन्तुविशेषे । घुर्घुर्याम् ॥
मृत्क्षारम् । न० मूलके ॥
मृतखलिनी । स्त्री० सप्तलायाम् । चमकषायाम् ॥
मृत्तालम् । न० तुवरिकायाम् । सुराष्ट्रजमृत्तिकायाम् ॥ मृदितालं प्रतिष्ठाऽस्या ॥
मृत्तालकम् । न० मृत्ताले ॥ स्वार्थे कन् ॥
मृत्तिका । स्त्री० मृदि ॥ माटी० इ० भा० ॥ मृदेव । स्वार्थे० मृदस्तिकन् । प्रत्ययस्यादित्वे वसिष्ठ०इकारोच्चारण प्रक्रियालाघवार्थम् । टापोलुक्यपिश्रवणार्थश्च । पञ्चभिर्मृत्तिकाभि क्रीत पञ्चमृत्तिक पट ॥
मृत्फली । स्त्री० कुष्टौषधे ॥
मृत्यु । पु० मरणे । पञ्चतायाम् । निधने । शरीराद्यारम्भककर्मक्षयनिमित्त । सर्वमर्मच्छेदनरूपे० शरीरादिविच्छेदे ॥ सचसर्वेषाम्ब्रह्मादीनाकालप्राप्त्यावश्यमेवभवति । तथाहि। प्राप्तेकालेस्वयब्रह्मापरार्द्धद्वयसम्मिते । निधन यातितरसा जगत्कर्तास्वयप्रभु ॥ चतुर्युगसहस्रेषुब्रह्मणोदिवसेकिल । पतन्ति भवनात्पञ्चनवचेन्द्रास्तथापुन तथैवद्विगुणेविष्णु मरणायोपकल्प्यते ॥ तथैवद्विगुणेकालेशङ्करशान्तिमेतिच ॥ कश्चिन्नामरणे मृढानिश्चलेदैवनिर्मिते । मष्टीमष्टी धराणाञ्चनाश सूर्य्यशशाङ्कयो ॥ जातस्यहिध्रुवोमृत्युध्रुवजन्ममृतस्यच । अध्रुवेस्मिन्शरीरेतुरक्षणीययशः स्थिरम् ॥ इतिश्रीदेवीभागवते ५ स्कन्धे ३१ ऽध्याय ॥ आसन्नमृत्युर्लोकोयध्रुवादीन्नहिपश्यति ॥ तथाहि । अरुन्धतीध्रुवञ्चैवविष्णोस्त्रीणिपदानिच । आसन्नमृत्युर्नोपश्येच्चतुर्थं मातृमण्डलम् ॥ अरुन्धतीभवेज्जिह्वाध्रुवोनासाग्रमुच्यते । विष्णो पदानिभ्रूमध्येनेत्रयोर्मातृमण्डलमितिकाशीखण्डे १२ अध्याय ॥ ससारे । अविद्याकामकर्मसमुदाये। स्वाभाविकेकर्मणि ॥ स्वाभाविकेज्ञाने ॥ संहारकारिणामध्ये विनाशहेतौ भगवतोविभूतौ । यमे । वैवस्वते ॥ मरणम् । मृङ्० । भुजिमृङ्भ्यां

युक्तावितित्यु क्‌ ॥ योगवि शेषे ॥ यथा । रवावनुराधा॰ सोमे उत्तराषाढा॰ कुजे शतभिषा॰ बुधे अश्विनी॰ गुरौ मृगशीर्षम्॰ भृ गौश्लेषा॰ शनौहस्तनक्षत्रेमृ त्युयोगे भवति ॥ लग्नादष्टमभवने ॥ यात्रायोगान्तरे ॥ चन्द्रोष्टमे च गाविकाच्चैवाकविभास्करौ । मृ त्युयोगोयमाख्यातो यातुर्मृत्युप्र दायक ॥

मृत्युजरे । स्त्री॰ द्वि॰प्रज्वारस्प्रिया प्रियये ॥ यथा । कालकन्ये मृ त्युजरे प्रज्वारस्प्रियाप्रिये । या भ्याजगत्समुच्छिन्न विधात्रानिर्मि त विधौ ॥ जरामृत्योरपिकालादु त्पन्नत्वात्कन्यासदृशत्वात्कन्यात्व म् । तेमृत्युजरे कालस्यकन्येप्र ज्वार॰प्रकृष्टज्वरस्प्रियाप्रियेपत् न्यौभवत । प्रियातोप्रियेऽतिशयि तप्रियेद्वन्द्वस्य ॥

मृत्युञ्जय । पु॰ कृत्तिवाससि । शिवे ॥ मृत्युकन्याजिताशश्वच्छि वेनगुरुणामम । नमृत्युनाजि त शम्भु कल्पेकल्पेश्रुतीश्रुतम् ॥ मृत्युजयति । जिजये । स ञ्ज्ञायामृत्तजिधारिसहितपिदम । खुतिखच् । मुम् ॥ यात्रायोगान्त रे ॥ लाभेभौमोगुरुश्छिद्रे षष्ठस्था नेचभास्कर । मृत्युञ्जयसमा

स्योय सर्वशत्रुनिबर्हण ॥

मृत्युनाशक । पुं॰ पारदे ॥ त्रि॰ मरणहर्त्तरि ॥

मृत्युपाश । पु॰ अधर्माज्ञानराग द्वेषादौ ॥

मृत्युपुष्प । पु॰ इक्षौ ॥

मृत्युफल । पुं॰ महाकालफले ॥

मृत्युफली । स्त्री॰ कदल्याम् ॥

मृत्युभङ्गरक । पु॰ भवकति । प्रेतपटहे । मरणसमयवाद्ये ॥

मृत्युभृत्य । पु॰ रोगे ॥

मृत्युमान् । त्रि॰ मृते ॥

मृत्युवञ्चन । पु॰ शम्भौ ॥ श्रीफले । द्रोणकाके ॥

मृत्युबीज । पु॰ वंशे ॥

मृत्युसूति । स्त्री॰ कर्कट्याम् । सागमायाम् ॥ मृत्यवेसूति प्रसवो यस्या ॥ यथाकर्कटकीगर्भमाध त्तेमृत्युमात्मन ॥

मृत्सा । स्त्री॰ प्रशस्तमृदि ॥ प्रशस्तामृ त् । सञ्ज्ञायां प्रशंसायामितिस । टा प् ॥ तुवरिकायाम् । तूबर॰ इ॰ भा॰ ॥ मृत्साऽस्त्यस्या च्छत्वेन । अर्शआद्यच् । टाप् ॥

मृत्स्ना । स्त्री॰ प्रशस्तायामृत्तिकायाम । मृत्सायाम् ॥ प्रशस्तामृत् । स ञ्ज्ञाप्रशंसायामितिस्न । टाप ॥ तुवर्याम् । आढक्याम् । अरहर तूबर॰ इ॰ भा॰ ॥

मृत्०द् । स्त्री० मृत्तिकायाम् ॥ शौचे मृद्विशेषोयथाविष्णुपुराणे । वल्मीकमूषकोत्खातामृदमन्तर्जला तथा । शौचावशिष्टगेहाच्चनाद्यालेपसम्भवाम ॥ अन्त प्राण्युपपन्नाश्चहलोत्खाताचपार्थिव । परित्यजेन्मृदस्त्वेता सकला शौचसाधनइति ॥ अन्त प्राण्युपयन्मासकीटाम् ॥ मृदति० मृद्यतेवा । मृदक्षोदेसम्पदादित्वात्क्विप् । काच्याम् । तुवरिकायाम् ॥

मृदङ्कुर । पु० हारीतपक्षिणि ॥

मृदङ्ग । पु० स्वनामप्रसिद्धवाद्ये । मुरजे ॥ अथमृदङ्गादिविवरणम् । मर्द्दल खादिर श्रेष्ठोहीन स्यादन्यदारुज । रक्तचन्दनजोवाद्योगभीरध्वनिरुत्तमे ॥ सार्द्ध-हस्तप्रमाणन्तुदैर्घ्यमस्यविधीयते । त्रयोदशाङ्गुलवाममथवाद्वादशाङ्गुलम् ॥ दक्षिणञ्चभवेदेनमेकेनाऽर्द्धाङ्गुलेनवा । करणमस्यवदनोमध्येचैवपृथुर्भवेत् । श्यामासीयोभवेद्धस्तस्तत्त्वर्णकरणामतम् । मृत्तिकानिर्म्मितश्चैवमृदङ्ग परिकीर्त्तित ॥ पातयेत्खर्ल्लिवाद्यवादनार्थंस्वमर्द्दले । विभूतिगैरिकभक्तकेन्दुकीनवसयुतम् ॥ यद्वाचिपीटकदैयकौविनीसत्त्वमिश्रितम् । सर्वमेकत्र पिष्टतल्लेप खरलिरुच्यते ॥ वामास्येपूरिकाकृत्वालेप दद्यान्मदक्षिणे । एवमर्द्दलक प्रोक्त सर्ववाद्योत्तमोमत ॥ अस्यसयोगमासाद्यसर्ववाद्यस्वशोभते । एतदङ्गेबीजकाष्ठेदलमर्द्धाङ्गुलविदु ॥ इति । विशेष सङ्गीतशास्त्रेद्रष्टव्य ॥ पटहे ॥ घोषे ॥ वशे ॥ मृद्यते । मृद० । विडादिभ्य क्विदिष्यङ्गच् ॥ मृत्अङ्गमस्येतिवा ॥

मृदङ्गक । पु० मृदङ्गे ॥

मृदङ्गफल । पु० पनसवृक्षे ॥ मृदङ्गवफलान्यस्य ॥

मृदङ्गफलिनी । स्त्री० कोषातक्याम् ॥

मृदङ्गी । स्त्री० कोषातक्याम् । श्वेतघोषाइतिगौ०दे०भा० ॥

मृदर । पु० विधि ॥ त्रि०विलससति ॥ म्रियतेऽनेन०मृद्नातिवा । मृड्मद०वा । क्रदरादयश्चेति० अरप्रत्ययान्तोनिपातित ॥ भये ॥

मृदा । स्त्री० मृत्तिकायाम् ॥

मृदाकर । पु० वज्रे ॥

मृदित । त्रि० अभिनष्टे । विनाशिते ॥ निष्पीडिते ॥ चूर्णीकृते ॥ मृद्यतेस्म । मृद० । क्त । इट् । क्ङितिचेतिनगुण ॥ क्षीणे ॥

मृदिनी । स्त्री० मृत्सायाम् ॥

मृदु । त्रि० कोमले ॥ अतीक्ष्णे ॥ मृदु सर्वत्रवाध्यते ॥ मृद्यते । मृद मर्द्दने । प्रथिम्रदिभ्रस्जामितिकु, सम्प्रसारणं च ॥ मृदुशब्दोमृदुत्व-गुणमुक्तातद्द्रव्यमभिधत्ते द्रुतिगुणवचनोमृदुशब्द । तेनस्त्रियाङीष-भावे०मृदु ॥ न० विशेषनचत्रा-दौ ॥ यथा । चित्रेन्दुमित्रपौष्णा-श्वमृदुमैत्र तयाभृगु । तत्रगीता-म्बरक्रीडामित्रकार्यंसुशोभनम् ॥ स्त्री०गृहकन्यायाम् ॥

मृदुकृष्णायसम् । न० सीसके ॥

मृदुगमना । स्त्री० हंसाम् ॥ त्रि०मन्दगमने ॥

मृदुचर्मी । पु० भूर्जवृक्षे । त्रि०कोमलत्वग्विशिष्टे ॥

मृदुच्छद । पु० भूर्जे ।कुकुरद्रुमे ॥ शीताले ॥ अक्षोटे ॥

मृदुता । स्त्री० मृदुत्वे ॥

मृदुताल पु० शीतालवृक्षे ॥

मृदुत्वक् । पु० भूर्जपत्रवृक्षे । मृद्वीत्वगस्य ॥

मृदुत्वच । पु० मृदुत्वचि । मृद्वीत्वचायस्यस ॥

मृदुत्रकम् । न० सुवर्णे ॥ द्रुतिशब्दचन्द्रिका ॥

मृदुपत्र । पु० नले॥न०कोमपत्रर्णे । त्रि०कोमलपर्णवति॥ मृदूनिपत्राणियस्यस ॥

मृदुपत्री । स्त्री० चिल्लीशाके ॥

मृदुपर्वक । पु० वेत्रे ॥ त्रि० कोमलपर्ववति ॥

मृदुपुष्प । पु० शिरीषवृक्षे ॥ त्रि० कोमलकुसुमविशिष्टे । मृदूनिपुष्पाणियस्यस ॥

मृदुफल । पु० मधुनारिकेले ॥ त्रिफल्कुते ॥ त्रि० कोमलफलवति ॥ मृदूनिफलानियस्यस ॥

मृदुरूप । पु० सात्त्विकराजसवृत्तिहृदये ॥

मृदुरेचनी । स्त्री० मार्कण्डिकायाम् ॥

मृदुल । त्रि० कोमले मृदुर्गुणोस्यास्ति । सिध्मादिभ्यश्चेतिलच् ॥ न० जले ॥

मृदुलोमक । पु० शशके॥ त्रि०कोमलरोमविशिष्टे ॥

मृदूत्पलम् । न० नीलपद्मे ॥

मृद्वङ्गम् । न० वङ्गे ॥ कोमलावयवे । त्रि०तद्वति । मृदून्यङ्गानियस्य ॥ कर्मधारयोवा ॥

मृद्वी । स्त्री० कपिलद्राक्षायाम् ॥ कोमलाङ्ग्याम् ॥ मृदुशब्दोमृदुत्वगुणमुक्ता०मृदुत्वगुणयुक्त द्रव्यमभिधत्ते द्रुतिगुणवचनत्वेन०वोतोगुण-वचनादितिपाक्षिकोङीष् ॥

मृद्वीका । स्त्री० गोस्तन्याम् । द्राक्षायाम् । मुनक्का० ह० भा० ॥ मृद्नाति । मृदु० । बलीकादयश्चेति-

साधु ॥ कपिलद्राक्षायाम् ॥

मृधम्। न० युद्धे ॥ मर्द्दनम् । मृधु हिंसायाम् । बाहुलकात्० भावे० घञर्थेवाक ।

मृन्मय । त्रि० मृदोविकार । मयट् ॥ स्त्री० मृन्मयी ॥

मृन्मरु । पु० अश्मनि । पाषाणे ॥

मृषा । अ० वितथे । मिथ्या झूठ० इ० भा० ॥ मृष्यते । मृषुसहने । काप्रत्यय ॥

मृषाध्यायी । पु० वके ॥

मृषार्थकम् । न० आहते । अत्यन्तासम्भवार्थवाक्ये ॥ यथा । एषवन्ध्यासुतोयातिखपुष्पकृतशेखर । कूर्म्मक्षीमतनुत्राण शशशृङ्गधनुर्द्धर ॥ इ० ।, मृषाऽर्थोयस्यतत् । कप् ।

मृषालक । पुं० आम्रवृक्षे ॥

मृषावाद . । पु० मिथ्योदिते । मिथ्यावाक्ये । टट्टयाम ॥

मृषावादी त्रि० मिथ्यावादिनि । मृषोद्ये । मृषावादोस्यास्ति । इनि ॥ मिथ्याभियोक्तरि ।

मृषोद्य । त्रि० मिथ्यावादिनि ॥ राजसूयसूर्य मृषोद्ये त्यादिनामृषोपपदाद्वदे कर्म्मणिनित्य क्यब्निपात्यते ॥ न० मिथ्यावाक्ये ॥

मृष्ट त्रि० अपनीतमले । शोधिते ॥ मृज्यतेस्म । मंजूशुद्धौ । क्त. । न० मरिचे ॥

मृष्टि । स्त्री० अन्नादे संस्कारविशेषे ।

मृष्टेरुक । पुं० वदान्ये । दानशौण्डे ॥ मिष्टाशिनि ॥ अतिथिद्विषि ॥

मेक । पुं० अजे । छागे ॥

मेकल ' । पु० ऋष्यन्तरे ॥ गिरिविशेषे ॥

मेकलकन्यका । स्त्री० नर्मदायासरिति । रेवायाम् ॥ मेकलस्यर्षेरद्रेर्वाकन्यका ।

मेकलाद्रिजा स्त्री० सोमोद्भवायाम् । रेवायाम ॥ मेकलाद्रेर्जाता । जनी० । ड ॥

मेक्षणम् । न० यज्ञीयपात्रविशेषे ॥

मेखल . । पु० मेकलपर्वते ॥

मेखलकन्यका स्त्री० रेवायाम् ॥

मेखला । स्त्री० खड्गबन्धे । खड्गादेश्चर्मादिनिर्मित कटिबन्धने ॥ युद्धे हस्तात्पतनवारणायमणिबन्धे प्रक्षिप्यमाणे चर्मादौ ॥ स्त्रीकट्याभरणे । काञ्च्याम् ॥ रशनायाम् ॥ केचित्तु० एकयष्टिर्भवेत्काञ्चीमेखलात्वष्टयष्टिका । रशनाषोडशज्ञेयाकलाप पञ्चविंशक ॥ इतिपठन्ति० इहत्वभेदात्पर्यायता ॥ स्त्रीकट्यावस्त्रबन्धने ॥ शैलस्यामे ॥ शैलनितम्बे । उपनयनकाले

धारणीयमुञ्जनिर्मितसूत्रचये ॥ यथा । मौञ्जीत्रिवृत्समाश्लक्ष्णाकार्याविप्रस्यमेखला । चत्रियस्यतुमौर्वीज्यावैश्यस्यशणतान्तवी ॥ मुञ्जालाभेतुकर्त्तव्या कुशाश्मान्तकवल्वजैः । त्रिवृताग्रन्थिनैकेनत्रिभिः पञ्चभिरेववा ॥ इ०मनु ॥ होमकुण्डोपरिमृद्घटितवेष्टनविशेषे ॥ यथोक्तवशिष्ठपञ्चरात्रे । यावान्कुण्डस्यविस्तारः खननं तावदिष्यते । इस्ते कैमेखलास्तिस्रोवेदाग्निनयनाङ्गुला ॥ कुण्डेद्विहस्ते ताश्चैयारसवेदगुणाङ्गुला । चतुर्हस्ते तुकुण्डे तावसुतर्कयुगाङ्गुला ॥ मेखलाब्रह्मचारिमेखलावत् कुण्डवेष्ठितामृद्घटिता ताश्चखातदेशाद्बाह्ये एकाङ्गुलिकपक्काष्ठं परित्यज्योच्छ्रायेणविस्तारेणचेत्यादिक्रमेणवेदाग्न्यङ्गुला एतद्विपरीतास्तस्मात्ऱोक्ताव्यवहारविरुद्धा ॥ पिङ्गलामतेपि । खातादेकाङ्गुलंत्यक्त्वा मेखलानांविधिर्भवेदिति ॥ मखगतिलाति । ला० । आतइतिक । पृषोदरादि ॥ मालक्ष्मीम्ईखति ०माईखतिवा । माशब्दोनिषेधेईखगतौ । बाहुलकात् कलच् ॥ यद्वा । माईखलति । खलसञ्चयेसिध्नेच । मूलविभुजादित्वात्क । षणितु०वृद्धिः स्यात् ॥ नर्मदा याम् ॥ अग्निपत्न्यां ॥

मेखलिक । पु० मेखलिनि ॥ मेखलास्यास्ति । व्रीह्यादित्वाट्ठन् ॥

मेखली । पु० मेखलावति । मेखलिके । मेखलास्यास्ति । व्रीह्यादित्वादिनि ॥

मेघ । न० अभ्रे । वारिवाहे । घने । जलदे । मेघास्तुत्रिविधास्तत्रवह्निजाधूमयोनय । निश्वासजास्तुजीमूतास्तेज्ञेयाजीवरूपिण ॥ यज्ञजास्तुघनाघोरा पुष्करावर्त्तकादय । इतिविशेषउक्त शब्दार्णवे ॥ मेहतिसिञ्चति । मिहसेचने । अच् । न्यङ्क्वादित्वात्कुत्वम् ॥ मुस्तायाम् ॥ राक्षसे ॥ षड्रागान्तर्गतरागविशेषे ॥ यथा । भैरवोथवसन्तश्चनटोनारायणस्तथा । श्रीरागोमेघरागश्चषडेतेपुरुषाह्वया ॥

मेघकफ । पु० करकायाम् ॥

मेघकाल । पु० वर्षर्त्तौ ॥

मेघचिन्तक । पु० चातकपक्षिणि ॥

मेघङ्कर । पु० मेघजनने ॥ मेघान्करोति । मेघर्त्तिभयेषुकृञः खच् प्रत्यय । अरुर्द्विषदितिमुम् ॥

मेघज । त्रि० मेघभववस्तुनि ॥

मेघजालम् । न० कालिकायाम् । मेघावली ॥

मेघजीवन । पु० चातके ॥ मेघेजीवनमस्य ॥

मेघज्योति । पु० इरम्मदे । वज्राग्नौ । मेघस्यज्योति ॥ अन्योन्यसङ्घट्टनेनमेघाग्नि स्त्वत्रत्यादीयो ज्योतिरग्नि पततिस ॥

मेघडम्बर । पु० मेघगर्जने ॥ मेघस्यडम्बर ॥

मेघतिमिरम् । न० मेघाच्छन्नदिने ॥

मेघदीप । पु० विद्युति ॥

मेघध्वनि । पु० गर्जिते । मेघनिर्घोषे ॥

मेघनाद । पु० वरुणे ॥ रावणात्मजे । इन्द्रजिति ॥ मेघस्यनादइवनादोयस्य ॥ मेघशब्दे ॥ पलाशवृक्षे । तण्डुलीयशाके ॥ इतिराजनिर्घण्ट ॥ मेघस्यनाद ॥

मेघनादजित् । पु० रामानुजे । लक्ष्मणे ॥ मेघनादमजैषीत् । जि० । सत्सूद्विषेतिक्विप् । तुक् ॥

मेघनादानुलासक । पु० मयूरे ॥

मेघनादानुलासी । पु० मयूरे ॥ मेघनादेनअनुलसति० तच्छील । लसश्लेषणक्रीडनयो । सुप्यजातावितिणिनि ॥

मेघनामा । पुं० मुस्तके ॥ मेघनामानिनामान्यस्य ॥ आदिलघौपञ्चमात्रके० ।ऽऽ॥

मेघनायक । पुं० आवर्त्तादौ ॥ यथा । चियुतशाकवर्षेतुचतुर्भि .शोधितेक्रमात् । आवर्त्तश्चिविसवर्त्तपुष्करद्रोणमम्बुदम् ॥ फलयथा । आवर्त्तोनिर्जलोमेघ सवर्त्तश्चबहूदक । पुष्करोदुष्करजलोद्रोण सस्यप्रपूरकइति ॥

मेघनिर्घोष । पु० स्तनिते । गर्जिते ॥ मेघस्यनिर्घोष ॥

मेघपर्याय । पु० आदिलघौपञ्चमात्रके० ।ऽऽ॥ मुस्तके ॥ मेघोमेघवाचक शब्द पर्यायोऽस्य ॥

मेघपुष्पम् । न० पिण्डाभ्रे । वर्षोपले ॥ अम्बुनि ॥ नदीजले ॥ पु० इन्द्रस्याश्वे ॥ कृष्णस्यघोटके ॥ मेघइवपुष्पमिव ॥

मेघप्रसव । पु० जले ॥

मेघभव । त्रि० मेघोत्पन्नवस्तुनि ॥

मेघभूति । पु० वज्रे ॥

मेघमाल । पु० प्लक्षद्वीपस्थे गिरिविशेषे ॥ रमागर्भजातकल्किदेवपुत्रे ॥

मेघमाला । स्त्री० कादम्बिन्याम् । मेघानामाला ॥

मेघयोनि । पु० धूमे ॥

मेघराग । पु० रागविशेषे ॥ मेघसंज्ञकोराग ॥

मेघवर्णा । स्त्री० नीलीवृक्षे ॥ त्रि० घनसमानवर्णवति ॥

मेघवर्त्म । न० नभसि । गगने ॥

मेघवह्नि । पु० वज्राग्नौ । इरम्मदे ॥

मेघवाह । पु० इन्द्रे ॥ यथा । राजा त्वर्थान्समाहृत्यकुर्यादिन्द्रमहोत्स वम् । प्रणीतोमेघवाहस्तुमहतीं वृष्टिमावहेदितिदण्डनीति ॥

मेघवाहन । पु० इन्द्रे । तुरासाहि ।। मेघा महामेघागजरूपधारि णऐरावताद्योवाहनमस्य ॥ मेघा न्वाहयतिचालयतिवा । ल्यु ॥ इन्द्रोहिमेघानाविश्यवर्षतीत्याग म ॥

मेघविस्फूर्जिता । स्त्री० अतिधृति च्छन्द १९ प्रभेदे ॥ तल्लक्षणोदा हरणं यथा । रसर्त्वश्वैर्य्मौन्सौररगु रुयुतामेघविस्फूर्जितास्यात् ॥ य था । कदम्बामोदाढ्याविपिनपवना केकिन, कान्तकेका ॥ विनिद्रा कन्दल्योदिशिदिशिमुदादर्दुराहृत्त नादा ।। निशान्नृत्यद्विद्युद्विलसि तलसन्मेघविस्फूर्जिताचेत् प्रिय स्वाधीनोसौदनुजदलनोराज्यमस्मा त्किमन्यत् ॥

मेघवेश्म । न० खे ॥

मेघसार । पु० चीनकर्पूरे ॥

मेघसुहृत् । पु० मयूरे ॥ मेघ सु हृदस्य ॥

मेघस्तनितोद्भव: । पुं० विकण्टक वृक्षे ॥

मेघाकाश । पुं० अभ्राकाशे ॥

मेघाख्यम् । न० मुस्तके ॥

मेघागम । पु० प्रावृषि । वर्षाकाले ॥ मेघस्यागमोयस्मिन् ॥ मेघस्या गमने ॥

मेघानन्दा । स्त्री० बलाकायाम् ॥

मेघानन्दी पु० मयूरे ॥

मेघान्त ॥ पु० शरदि ॥ मेघानाम न्तोयस्मिन् ॥

मेघास्त । पु शरद्दतौ ॥

मेघास्थि । न० करकायाम्

मेघाह्लदम् । न० आकाशे ॥

मेघोदर । पु० अर्हत्पितरि ॥

मेघ्य । त्रि० मेघभवे । दिगादित्वा त्यत् ॥

मेचक । पु० मयूरस्यचन्द्रके ।। मे चकोवर्णोस्त्यस्य । अर्शआद्यच् ॥ श्यामलवर्णे । कृष्णे ॥ मेचक कृ ष्णनील स्यादतसीपुष्पसन्निभ । द्युतिशब्दार्णवेभेद । बर्हिकण्ठसम वर्णमेचकन्नुवतेबुधा द्युतिकाश्च मचतिमिश्रीभवतिवर्णान्तरेण । मच मुचिकल्कने । कृञादिभ्य सञ्ज्ञा या वुन् । पचिमच्योरित्त्वोपधाया इतीत्वे लघूपधगुण ।। धूमे ॥ मेघे ॥ शोभाञ्जने ॥ न० स्रोतोञ्जने ॥ अन्धकारे ।। नीलाञ्जने ॥ त्रि० श्यामलयुक्ते ॥

मेचकाभिधा । स्त्री० पातालगरु डीलतायाम् ॥

मेट्ला । स्त्री० आमलक्याम् ॥

मेठ । पुं० हस्तिपके । निषादिनि ॥

मेढ् पु० मेहने । शिश्ने ॥ मेहन् त्यनेन । मिहसेचने । दाम्नीतिष्ट्रन् ॥ मेहतिवा ॥ मेषे ॥

मेढ्रशृङ्गी । स्त्री० मेषशृङ्गीवृक्षे ॥

मेण्ठ । पु० हस्तिपके ॥

मेण्ड । पु० मेठे । हस्तिपके ॥

मेण्ढ । पु० मेषे ॥

मेथि । पु० मेधिकाष्ठे । खलेवाल्याम् । खलेपशुबन्धनार्थकाष्ठे ॥ मेथ्यन्तेपशवोऽत्र । मेथृसङ्गमे । सर्वधातुभ्यइन् ॥

मेथिका । स्त्री० मेथिन्याम् । मेथ्याम् । गन्धबीजायाम् । मेथीतिप्रसिद्धशाके ॥ मेथिकावातशमनी श्लेष्मघ्नीज्वरनाशिनी । तत खल्पगुणावन्यावाजिनासातुपूजिता ॥ अपिच । मेथिकादीपनीरुच्यावद्धविट्क्रमिशुक्रनुत् । रूक्षोष्णातत्फलकासानिलश्लेष्मवमीन्जयेत् ॥

मेथिनी । स्त्री० मेथिकायाम् ॥

मेथी । स्त्री० मेथिकायाम् । गौरादित्वात्क्रदिकारादितिवाङीष् ॥

मेद । पु० मेदसि । वपायाम् । शुक्रमांसस्नेहे ॥ अलम्बुषायाम् ॥ मेद्यति । ञिमिदास्नेहने । घञ् ॥ वैदेहेननिषादभार्यायाजनिते० अन्त्यजविशेषे ॥

मेदःपुच्छ । पु० दुम्बके । दुम्बा० दुम्बा० इ० भा० प्र० मेषविशेषे ॥ मेदःपुच्छोद्भवमांसहृद्यवृष्यश्रमापहम् । पित्तश्लेष्मकरंकिञ्चिद्वातव्याधिविनाशनाम्

मेदःसारा । स्त्री० मेदायाम् ॥

मेदक । पु० जगले । सुराकल्के ॥ मेद्यतिञिमिदा० । कृञादिभ्यो वुन् ॥

मेदज । पु० भूमिजगुग्गुलौ ॥ त्रि० मेदोभवे ॥

मेद । न० शुक्रमांसप्रभवस्नेहविशेषे ॥ वपायाम् । वसायाम् ॥ मेदसस्वरूपयथा । यन्मांसस्वाग्निनापक्वतन्मेदइतिकथ्यते । तदतीवगुरुस्निग्धं बलकार्यतिहृद्यम् ॥ स्थानयथा । मेदोहिसर्वभूतानामुदरेष्वस्थिषुस्थितम् अतएवोदरेवृद्धिःप्रायोमेदस्विनोभवेत् ॥ रोगविशेषे ॥ तन्निदानंयथा । अव्यायामदिवास्वप्नश्लेष्मलाहारसेविन । मधुरोन्नरस प्राय स्नेहान्मेदोविवर्द्धयेत् ॥ अन्नरस० आमद्रव अस्तद्वैवैगुण्य यथा । मेदसावृतमार्गत्वात्पुष्यन्त्यनेनधातव मेदस्वचीयतेतस्मादशक्त सर्वकर्मसु ॥ मेद्यति । ञिमिदा० । असुन् ॥

मेदस्कृत् । न० मांसे ॥

मेदा । स्त्री० अष्टवर्गाङ्गौषधिविशेषे ।

मेदोद्भवायाम् । जीवन्याम् । श्वेता याम् ॥ मणिच्छिद्रायाम ॥ तल्लच णादियथा । शुक्लकन्दोनखच्छेद्यो मेदोधातुमिवस्रवेत् । य सर्वमे दे तिविज्ञेयोजिह्वासात्परैर्जनैः ॥ मेदायुग गुरुस्वादुर्वृष्य स्तन्यक फावहम् । वृहण शीतल पित्तरक्त वातज्वरप्रणुत् ॥ मेदायुगम् ० मेदा महामेदे ॥ मेदामहामेदास्थाने घृतमूलीप्रक्षिपन्ति ॥

मेदिनी । स्त्री० काश्मर्याम् । मेदा याम् ॥ मज्ञाम् । भूमौ ॥ मेदम स्त्यस्याम् । मतर्द्धनि । मलघ्नोर्मे दकुष्ठक्रे तिशालिहोत्रे ऽदन्तोपिमेद शब्दोक्ति ॥ यद्वा । मेद्यति । ञि मिदा० । ग्रह्यादित्वाणिनि ॥ मधुकैटभयोरासीन्मेदसैवपरिप्लु ता । तेनेयमेदिनीदेवीप्रोच्यतेब्रह्म वादिभि ॥

मेदिनीद्रव । पु० पांशौ । धूलौ ॥

मेदुर । त्रि० सान्द्रस्निग्धे । अति शयस्निग्धे ॥ मेदनशील ०। ञि मिदा० । भञ्जभासमिदोघुरच् ।

मेदुरा । स्त्री० काकोल्याम् ॥

मेदोजम् । न० अस्थ्नि ॥

मेदोद्भवा । स्त्री० मेदायाम् ॥

मेदोम्न । पु० वर्णसङ्करजातिभे दे ॥

मेदोवती । स्त्री० मेदायाम् ॥

मेध । पु० यागे । क्रतौ ॥ मेधति । मेधृसङ्गमे ॥ पचाद्यच् ॥

मेधा । पु० मेधोभिधानेमुनिविशे षे ॥ वसिष्ठे ॥ स्वायम्भुवमनो पुत्रे ॥

मेधा । स्त्री० धारणावत्यांबुद्धौ । ग्रन्थ ग्रन्थार्थधारणशक्तौ ॥ अतीतानु स्मृतिर्मेधातत्कालग्राहिणीमतिः । शुभाशुभविचारज्ञाप्रज्ञाधीरैरु दाहृता ॥ धृतिविशेष ॥ साचैय ज्ञानस्य भार्या । यथा । ज्ञानस्यति स्रोभार्यास्त्वबुद्धिर्मेधाधृतिस्तथा । याभिर्विनाजगत्सर्वंमूढमत्तसमंस देति । मेधतेसङ्गच्छतेसर्वमस्या म् । मेधृ० । गुरोश्चेत्य । टाप् ॥ मेधाकरमौषध यथा । शङ्खपुष्पी वचासोमाब्राह्मीब्रह्मसुवर्चला । अभयाचगुडूचीचअटरूषकवाकुची ॥ एतैरचसमैर्भागैर्घृत प्रस्थ विपा चयेत् । कण्टकार्यारस प्रस्थ वृ हत्याचसमन्वितम् ॥ एतद्ब्राह्मीघृ त नामस्मृतिमेधाकर परम् ॥ * ॥

मेधाकर । पु० मेधाजनकेगणविशे षे यथा । सतताध्ययन तत्त्वज्ञा नस्यचकथासदा श्रेष्ठानांतन्त्वशा स्त्राणामवलोकनमेवच । सद्द्विजा चार्यसेवाच गणोमेधा कर स्मृ त ॥

मेधाकृत स्त्री० मुनिपर्ण्यां । सिता

बरशाकि । त्रि० मेधाकारके ॥
मेधाजित् । पु० कात्यायनमुनौ ।
मेधातिथि । पु० मुनिविशेषे । कण्व पुत्रे ।
मेधारुद्र । पु० कालिदासे ॥
मेधावती । स्त्री० महाज्योतिष्मत्याम् त्रि० मेधाविशिष्टायाम् ॥ मेधावान् । मेधावत्० द्र० पुनपुंसकयो ॥
मेधाविक्रम् । न० तीर्थविशेषे ॥
मेधावी । पु० शुकपक्षिणि ॥ पण्डिते ॥ व्याडौ ॥ मदिरायाम् । त्रि०मेधान्विते ॥ प्रज्ञातिशयवति । ऊहापोहसमर्थे ॥ शमदमसर्वकर्मोपरम गुरूपसदनादिसंपवापिकाङ्गयुक्तो नमननिदिध्यासनाख्यवेदान्तवाक्यविचारेणपरिनिष्पन्न वेदान्तमहावाक्यकरणकनिरस्तसमस्ताप्रामाण्याशङ्काचिद्‌न्याविषयकमहब्रह्मास्मीतिब्रह्मात्मैक्यज्ञानमेवमेधा ०तयानित्य युक्ते ०स्थितप्रज्ञे ०विप्रश्चिति ॥ मेधास्यास्ति । अस्मायामेधास्रजोविनि ॥
मेधाविनी । स्त्री०ब्रह्मण पत्न्याम् ब्राह्म्याम् ॥
मेधि । पु० खलेशल्याम् । खलेपशुबन्धनायारोपितेकाष्ठे ॥ पुंसिमेधि खलेदारुन्यस्त यत्पशुबन्धने ॥ मेध्यन्तेपशवोत्र । मेधृ० । इन् ॥
मेधिर । त्रि० मेधाविनि ॥
मेध्य । पु० यवे ॥ छागे ॥ खदिरे॥ त्रि०पवित्रे । शुचौ । शुद्धे । यज्ञिये ॥ मेधनार्हम । मेधृ० । ऋहलोर्ण्यत् ॥ मेधायैहितोवा । उगवादिभ्योयत् ॥ मेधामर्हतिवा । दण्डादित्वाद्यत् ॥ मेधइववा शाखादिभ्योय ॥ ज्ञानेनमेध्यमखिलममेध्य ज्ञानतोभवेत् । ब्रह्मज्ञानेसमुत्पन्ने मेध्यामेध्यनविद्यते ॥
मेध्या । स्त्री० रक्तवचायाम् ॥ रोचनायाम् ॥ केतक्याम् ॥ ज्योतिष्मत्याम् ॥ शङ्खपुष्प्याम् ॥ ब्राह्म्याम् ॥ मेधायैहिता । यत् । टाप् ॥ योषिति । नार्याम् ॥ सोम शौच ददौस्त्रीणागन्धर्वश्च शुभा गिरम् । पावक सर्वमेध्यत्व मेध्यावैयोषितोह्यत ॥
मेनका । स्त्री० हिमालयस्यभार्याया-म् । अपर्णामातरि ॥ स्वर्वेश्यायाम् । शकुन्तलायाजनयित्र्याम् ॥
मेनकात्मजा । स्त्री० गिरिजायाम् । दुर्गायाम् ॥ मेनकाया आत्मजा ॥
मेनकापति । पु० हिमालये ॥
मेनकापुत्र । पुं० मैनाके ॥ मेनकाया पुत्र ॥
मेनकाप्राणेश । पु० हिमालये ॥
मेना । स्त्री० मेनकायाम् । हिमाद्रे

भाँयायाम्॥

मेनाजा। स्त्री॰ पार्व्वत्याम्॥

मेनाद। पु॰ केकिनि। मयूरे॥ मार्जारे॥ छगले। छागे॥

मेनाधव। पु॰ उमागुरौ। हिमालये॥

मेनासुत। पु॰ मैनाके॥

मेय। त्रि॰ प्रमेये॥ मानाधीनामेयसिद्धिः॥ मीयते। माङ् माने। अचोयत्। ईद्यति। गुणः॥ मातुपरिच्छेत्तुं योग्योऽर्थः॥

मेयाभ। त्रि॰ मेयसमानाकारे॥ मेघस्याभेवाभायस्य॥

मेरक। पु॰ विष्णौ॥ असुरभेदे

मेरु। पु॰ सुमेरौ। अत्युच्छ्रिताना शिखरिणांमध्येभगवतोविभूतौ। हेमाद्रौ। रत्नसानौ। सुरालये॥ जम्बुद्वीप स्थितेनाभिस्तद्वृत्त लक्षयोजनम्। क्षाराब्धिनापरिवृतम् परिवृत्त मतावता॥ तस्यमध्ये स्थित शैलराजराजोहिरण्मय। तिरस्कृताशुमज्ज्योतिर्मेरु सुरनिषेवित सषोडशसहस्राणिक्षितौविष्टोमहीतलात्। तद्दूनमुन्नतोऽब्धं मूलेषोडशविस्तृत॥ समेरुर्भूमेरन्त षोडशयोजनसहस्राणिप्रविष्ट, महीतलादारभ्यऊर्द्ध्वं यावच्चतुरशीति योजनसहस्रोन्नति मूलेचषोडश सहस्रविस्तार'। ऊर्द्ध्वेतोद्वात्रिंशत्सहस्रविस्ताराधिकत्वेनहि गुण्यम्। उक्तञ्चश्रीमद्भागवते। षोडशैकसहस्राणिबुध्नभागेप्रवेशित। तान्यस्यमूलेविस्तार स्यादूर्द्ध्वं द्विगणस्तु स॥ सशरावाकृतिर्देवैर्मेरुर्देवा. श्रयोद्रिराट्। इति। विष्णुपादान्तरेष्वस्यचतुर्द्दिक्षुपर्वसु। नेमय कटकाकारानिर्गताद्दीप्तिमत्तरा॥ एकादशसहस्रातुमनुसाहस्रकोपरा। नेमिर्यामस्तकोपान्तेलोकपालसमाश्रया॥ चक्रवाटेतितामाहु सर्वरत्नप्रभावतीम्। अस्यमेरो स्त्वोच्छ्राय पादेनपञ्चविंशतिसहस्रात्मकेनान्तरयेष्वाविषु तथाविधेषु तत्रचतु स सहस्रविस्तृतेषु पर्वसुभागसन्धिषु कटकाकारा सुष्टुदीप्तास्तिस्रोनेमयोमेखलानिर्गता॰ तदेवंषु-चिषुस्थानेषुचतुर्द्दिक्ष्वदर्शयति। एकादशसहस्रेत्यादिना॰ एकाद्वादशसहस्रप्रमाणा॰ द्वितीयामनुसाहस्रिकाचतुर्द्दशसहस्रा॰ चतुर्द्दत्वोक्तेश्च॰ तृतीयाऽष्टादशसाहस्रविस्तृता। सानेमिर्यामस्तकस मीपेलोकपालाश्रयभूताचानेकरत्नप्रभाभासुराच॰ तांचक्रवाटोत्क्याआगमज्ञाआहु। एवञ्चप्रागुक्तचतुरशीतियोजनसहस्रोच्छ्रायस्यमेरो पर्वत्रयपञ्चसप्ततिसहस्रमानकम्। कटकत्रयस्तुनवसहस्रोन्नत

मेवौकश्चविसहस्रमानकत्वमित्या-
गमज्ञा । सिद्धगन्धर्वमरुतातद
ष पर्वसुस्थिति । चक्रवाटाध
स्थितेषुचिषुपर्वसुसिद्धादीनामास्पदम् । यातुचक्रवाटाख्यौर्द्धमेखला
तस्यामष्टसुशृङ्गेषुपुर्योष्टौसमवस्थिता । प्राच्यादिष्विन्द्रमुख्याना
नामतस्तानिबोधत ॥ नानारत्नप्र
भाजालमण्डलालङ्कृताम्बरे । ।
सिद्धसाध्यमरुज्जुष्टाद्यमभूरमराव-
ती ॥ रक्तापीतमणिप्रायहैमप्राकार
गोपुरा । वह्नेस्तेजोवतीवह्नितुल्य
भूतनिषेविता ॥ कृष्णो सयमनी
तुङ्गलोहप्राकारमण्डला कालपाश
पितृव्याधिप्रेतमारीनिषेविता ॥ क्ष
च्यादैत्यपतेर्वृत्योधामवहैत्यसेविता
। नीलरत्नप्रभाजालवितानवरभूष
या ॥ शुद्धवस्यस्वनाथस्फटिकाम
लनिर्मिता । पाण्डुराभोपमर्यादसेविताभातिधामभि ॥ वायोर्गन्ध
वतीतुङ्गश्चेतपीतध्वजाकुला । बल
बद्भूतसङ्घुष्टासर्वरत्नविनिर्मिता ॥ म
होदयाचन्द्रमस श्वेतामुक्तादिनिर्मिता । द्विजसङ्घस्तुताभातिपुरेहिमगिरिप्रभे ॥ ज्वलज्ज्वाटाट्ट-
ट्टहासमुक्तप्रमथगणैर्भूत । पुरी-
यशोवतीसर्वरत्नजालकसेविता ॥ द्यु
तिसर्वर्तुसुखदाचक्रवाटार्द्धविस्तृ-
ता । । पुर्यौष्टानिलौद्भूतपारि
जातरजोरुणा ॥ चक्रवाटार्धेन
नवसहस्रात्मकेनविस्तीर्णा ॥ वेध
सानिर्मितालोकपालचक्रानुवर्ति
नाम् । भूतयेस्वर्गदृष्ट्येतागीयन्ते
कविभि चिती ॥ अथब्रह्मण
पुरी । चतुर्दशसहस्राणियोजना
नारुयमभूव । मध्येमनोवतीनाम
पुरीलोकेशवन्दिता ॥ याचकारा
रुणानुचैर्विधन्मार्गान्मष्ट श्रिया
। सावित्र्या स्पर्द्धमानेवस्वर्गकामा
निवर्त्तिनी । तस्यामुपासतेदेवा
मुनयश्चमहौजस । महायोगीश्व
र सिद्धैर्यमाद्यैर्भूतविधसम् ॥ त
त्रीशभ.गैतत्राद्रे शृङ्गमादित्य
सन्निभम । यत्तज्ज्योतिष्कमित्या
हु सदापशुपते प्रियम् ॥ तस्य
सानुषुहेमपुरश्चित्रे गुहस्थिता ।
स्कन्दनन्दिमहाकालगणेशादिगणे
श्वरा ॥ मूर्ध्निदेवादिदेवस्य
स्थानत्रिपुरविद्विष । रुद्रायुतग
णैर्जुष्टं ब्रह्माद्यैश्चसुरोत्तमै ॥ इ
तिमृगेन्द्रसहितायाविद्यापादेभुव-
नाध्वप्रकरणेमेरोर्वर्णनम् ॥ उपमा
लायवर्त्तिन्यं कस्मिन्मणौ ॥ मिनो
० तिक्षिपतिज्योतींष्युच्चत्वात् ।
डुमिञ्प्रक्षेपणे , मिपीभ्यारु ॥
माधामाचे । ०। ० ॥

मेरुक । पु० यक्षभूमि ॥
मेरुदेवी । स्त्री० नाभिभूतेःपत्न्याम् ॥

भगवतऋषभस्य जनन्याम् ॥

मेरुसावर्ण । पु० एकादशमनौ ॥

मेल । पु० सङ्गमे ॥ मेलनम् । मिल संश्लेषे । घञ् ॥

मेलक । पु० सङ्गे । सङ्गमे ॥ मेलनम् । मिल० । घञ् । स्वार्थेक ॥

मेलकालवणम् । न० सौवर्चलवणे ॥

मेलनम् । न० मेले । सङ्गमे ॥

मेला । स्त्री० मसीजले ॥ मेलवे ॥ अञ्जने ॥ महानील्याम् ॥ टाप् ॥

मेलानन्दा । स्त्री० मस्याधारे । मसीपात्रे ॥

मेलाम्बु । स्त्री० मेलानन्दायाम् ॥

मेलाम्बु पु० मस्याधारे ॥

मेष । पु० हुडौ । मेढ्रे । उरभ्रे । उरणे । अर्णायौ । एडके । मेंढा० ॥ भा० ॥ मेषस्यमांसपुष्ट्यैस्यात्पित्तश्लेष्मकरगुरु । तस्यैवाण्डविहीनस्यमांसकिञ्चिल्लघुस्मृतम् ॥ अपिचाजमांसगुणा । मेषमांसगुरुस्निग्धवल्यवातकफप्रदम् । मेद०पुच्छामिषहृद्य कफवातकरगुरु ॥ मिषति । मिषस्पर्द्धायाम् । अच् । मेषज्यप्रभेदे । राशिविशेषे । क्रियसञ्ज्ञकै ॥ वत्सविशेषे ॥ मेषलग्नोत्पन्नस्यफलंयथा । मेषलग्नेसमुत्पन्नश्चण्डोमानीधनीशुभः । क्रोधीस्वजनहन्ताचविक्रमीपरवत्सल ॥

मेषक । पु० औषधौ ॥

मेषकम्बल । पु० अर्णायौ ॥ मेषलोमकृत कम्बल । शाकपार्थिवादि ॥

मेषलोचन । पु० चक्रमर्दे ॥ मेषस्यलोचनमिवलोचनमस्य० तस्तुल्यपुष्पत्वात् । लोचनशब्दस्तत्पुष्पेलाक्षणिक ॥ त्रि० मेषचक्षुस्तुल्यनेत्रे ॥

मेषवल्ली । स्त्री० मेषशृङ्ग्याम् ॥

मेषविषाणिका । स्त्री० मेषशृङ्ग्यां ॥

मेषशृङ्ग । पु० स्थावरविषप्रभेदे ॥

मेषशृङ्गी । स्त्री० मन्दीवृक्षे । मेढ्रशृङ्ग्याम् । मेषविषाणिकायाम् ॥ मेषशृङ्गीरसे तिक्तावातलाश्वासकासहृत् । रूक्षापाकेकटु पित्तव्रणश्लेष्माक्षिशूलजुत् ॥ मेषशृङ्गीफलंतिक्तं कुष्ठमेहकफप्रणुत् । दीपनस्रसनकासकृमिव्रणविषापहम् ॥ मेषशृङ्गमस्या० । मेषशब्दोमेषशृङ्गसदृशेलाक्षणिक ॥ गौरादि ॥

मेषा । स्त्री० त्रुटौ । क्षुद्रैलायाम् ॥

मेषाक्ष । पु० चक्रमर्दके ॥ मेषस्याक्षीवाक्षियस्य० तत्सदृशपुष्पत्वात् । अक्षणोदर्शनादिस्वच् । अक्षिशब्दपुष्पेलाक्षणिक ॥

मेषाक्षिकुसुम । पुं० चक्रमर्दके ॥

मेषाण्ड । पु० इन्द्रे ॥

मेषाधिप । पु० भौमग्रहे ॥ मेषस्य मेषराशे अधिप ॥

मेषान्त्री । स्त्री० वस्तान्त्रीवृक्षे ॥

मेषालु । पु० वर्व्वरावृक्षे ॥

मेषाह्वय । पु० चक्रमर्द्दे ॥

मेषिका । स्त्री० मेष्याम् ॥

मेषी । स्त्री० मेषस्त्रियाम् । भेड० भेडी० इ० भा० ॥ तिनिशवृक्षे ॥ जटामांस्याम् ॥

मेसूरणम् । न० दशमलग्ने ॥ यथा । कर्मस्थानञ्चदशमञ्चमेसूरणमास्पदम् ॥

मेह । पु० प्रमेहरोगे ॥ मेहति । मिहसेचने । पचाद्यच् ॥ मेहनवा । घञ् ॥ प्रस्रावे ॥ मेषे ॥

मेहघ्नी । स्त्री० हरिद्रायाम् ॥ मेहंहन्ति । हन० । अमनुष्यकर्तृकेचेतिटक् ङीप् ॥

मेहत् । त्रि० मूत्रयति ॥ मेहति । मिह० । शतृ ॥

मेहन । पुं० मुष्कवृक्षे ॥ न० मूत्रे ॥ शिश्ने ॥ मेहन्त्यनेन । मिह० । करणेल्युट् ॥

मैत्र । पु० ब्राह्मणे ॥ सुधन्वाचार्य्ये ॥ न० अनुराधानक्षत्रे ॥ विशेषनक्षत्रादौयथा । चित्रेन्दुमित्रपौष्णाश्च मृदुमैत्रंतथाभृगु । तत्रगीताम्बरक्रीडामित्रकार्य्यञ्चशोभनम् ॥ अष्टमतारायाम् ॥ मित्रदेवताकपायुसम्बन्धान्मूत्रपुरीषोत्सर्गे ॥ अत्राह पस्तम्बः । मूत्रपुरीषेकुर्याद्दक्षिणांदिशदक्षिणापरावेति । द्वाि ।गापरा नैर्ऋतीम्० गत्वेतिशेष ॥ तथा अस्तमितेचवर्ह्रियामाद्दाराग्रा ।सथा न्मूत्रपुरीषयो . कर्मवर्ज्जयेद्दिति ॥ शुष्कैस्तृणैस्तथाकाष्ठै पत्रैर्वेणुदलैनवा । मृन्मयैर्भाजनैवापिचान्तर्द्धाय वसुन्धरामितिवायुपुराणम् ॥ मूत्रोच्चारसमुत्सर्गंदिवाकुर्यादुदङ्मुख । दक्षिणाभिमुखोरात्रौसन्ध्ययोश्चयथादिवेतिमनु ॥ त्रि० मित्रसम्बन्धिनि ॥ मैत्रीस्निग्धता० तद्वति ॥ मित्रस्यकर्मभावोवा । युवादित्वादण् ॥ मित्रोदेवतास्यवा । सास्यदेवतेत्यण् ॥

मैत्रभम् । न० अनुराधानक्षत्रे ॥

मैत्रायणीय । पु० यजुर्वेदस्यशाखाभेदे ॥

मैत्रावरुण । पु० पुरोनुवाक्यायावक्तरि० ऋत्विग्विशेषे ॥ यथा । मैत्रावरुणेनपुरोवाक्यायामुक्तायातत्प्रकाशितदेवतोद्देशेनाध्वर्युर्होतृपठितयाज्यान्तेवषट्कारेणसोमादिकञ्जुहोतीति ॥ अगस्त्यमुनौ ॥

मैत्रावरुणि । पु० अगस्त्यमुनौ ॥ मित्रश्चवरुणश्च० मित्रावरुणौ । देवताद्वन्द्वेचेत्यानङ् । तयोरपत्यम् । अतइञ् ॥ वीत्त्वागर्जन्यप स्तै० ॥

मैत्री । स्त्री० सौहार्द्दे ॥ स्निग्धतायाम्

म् ॥ सर्वप्राणिषु सुखसम्भोगापन्नेषु० साध्वेतन्ममभित्राणांसुखित्व मितिमैत्रीभावयेन्नत्वीर्ष्याम्॥ अण् स्वार्थ्ये वयब्दाणृङीप् ॥ विदिक्षप तितोन्मत्तवङ्घुवैरातिकीटके । व न्धकीबन्धकीभर्तृ चुद्रान्ततकथे स ह ।. तथातिव्ययशीलेषपरीवादके रे शठे । बुधोमैत्रीनकुर्वीत० नैक अत्यन्तकीटवत्यीडक ॥ उत्कृष्टमध्यमनिकृष्टजनेषु मैत्रीयद्व च्छिलासुसिकतासुजलेषु रेखा । वैरक्रमादधममध्यमसज्जनेषुयद्वच्छि लासुसिकतासुलजेषु रेखेव्यु ग्रट.॥ उपकारित्वे ॥ अनुराधाभे ॥

मैत्रीवल । पु० बुद्धे ॥ मैत्रीवलयस्य स ॥

मैत्रेय । पुं० स्वावाभिधर्षौ । बको । चैकितायने ॥ मुनिविशेषे ॥ मित्राया अपत्यम् । गृष्ठ्यादिभ्यश्चे तिढञ् । दाण्डिनायिनेतिनिपात नाद्युलोप ॥ वैदेहादायोगव्यां जातो० सङ्करजातिविशेषे ॥ मैत्रेयकन्तुवैदेहोमाधूकसम्प्रसूयते । नॄन्प्रशसत्यजस्र योघण्टाताडोरुणोदये ॥ माधूकमधुरभाषिणम् ॥ भाविबुद्धविशेषे ॥

मैत्रेयिका । स्त्री० मित्रयुद्धे ॥ मित्रयूनांभावे ॥ गोत्रचरणाच्छ्लाघात्याकारतदवेतेष्वितिवुञ् । वैकयमि

वयुप्रलयानामितियादेश ॥

मैत्रेयी । स्त्री० याज्ञवल्क्यस्यर्षे पत्न्याम् ॥

मैथिल । पु० जनकनृपे ॥ त्रि० मिथिलायाभवे ॥ अण् ॥

मैथिली । स्त्री० जानक्याम् ॥ सीतायाम् ॥

मैथिलेय । पु० सीतापुत्रे । अप त्ये ढक् ॥

मैथुनम् । न० मिथुनसाध्ये अन्याधानपुत्रोत्पादनादौ ॥ सङ्गते ॥ रते । सुरते । धर्षिते । व्यवाये । ग्राम्यधर्मे । निधुवने ॥ मिथुनमेव । प्रज्ञाद्यण् ॥ मिथुनस्येदंवा ॥ स्मरणकीर्त्तनकेलि प्रेक्षणगुह्यभाषणम् । सङ्कल्पोध्यवसायश्चक्रियानिर्वृत्तिरेवच । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिण ॥ अथास्त्रीयेस्त्रीपुंस व्यतिकरे ॥ शीघ्रमैथुनगामीदीर्घायुरन्यथाल्पायु ॥

मैथुनी । पुं० सारसे ॥

मैथुन्य । त्रि० मिथुनायहिते । तस्मैहितमितियत् ॥ न० मिथुनीभावसुखे ॥

मैनाक । पु० पर्वतविशेषे । हिमालयस्यज्येष्ठपुत्रे । हिरण्यनाभे । सुनाभे ॥ क्रौञ्चं गिरिमतिक्रम्यमैनाकोनामपर्वत । मयस्यभवनं तत्र दानवस्यस्वयंकृतम् ॥

मैनाकस्वसा । स्त्री० पार्वत्याम् ।
मेनकासनेगालुजस्वसा ॥
मैन्दि । पु० माक्षिके । मोजन्
हन्ति । पधिमत्स्येतिठक् ॥
मैन्द । पु० वानरविशेषे ॥ विष्णु
वध्यासुरविशेषे ॥
मैन्दघ्न । स्त्री० विष्णौ ॥
मैरेयम् । न० मद्यविशेषे ॥ मैरेयधात
कीपुष्पगुडधानाम्बुसहितमितिमा
धव ॥ आसवे ॥ मिरायादेशवि
शेषे० औषधिविशेषे वाभवम् । न
द्यादिभ्योढक् ॥ वारुण्यं वमैरेयमि
तिव्याख्यातार । तेषांमैरेयदोषे
णविषमीकृतचेतसाम् । निम्लोच
तिरजावासीदेयूनामिवमर्द्दनम् ॥
तेषायादवानाम् ॥
मोच । पु० पाटलिद्रुमे ॥ मोचने
मृतौ । मृत्यु देधापवर्गइतिचार्वा
क ॥ प्रचोषसर्गवरत्वात्खात
न्त्यसम्प्राप्तावूर्ध्वपदासादनमोचद
त्यनेकान्तवादिन । यदाहु ।
लोहपञ्जरविच्छेदात्प्रवतेऽलावुका
यथा । आरोहतितथामोचजीवो
मोहादिसंक्षयात् ॥ नित्यबोधसुखा
द्यैश्वधर्मैर्युक्त । सतिष्ठतीति ॥ मु
क्तौ । कैवल्ये । निर्वाणे । श्रेयसि
। नि श्रेयसे । अमृते । अपवर्गे ।
तत्त्वज्ञानकृतेऽज्ञानतत्कार्याभावे ।
निरतिशयानन्दाभिव्यक्तौ । निरव
शेषानर्थनिवृत्तौ । अविद्याकल्पि
तानादिदेहादिष्वात्माभिमानरूप
बन्धनिवृत्त्यात्मस्वरूपावस्थाने ॥
अनात्मसु देहादावात्मबुद्धिस्तुदेहि
नाम् । साऽविद्यातत्कृतोबन्धस्तन्ना
शोमोचउच्यते ॥ मोचमिच्छन्सदा
कर्मत्यजेदेवससाधनम् । त्यजते
वहितज्ज्ञेयत्यक्तु प्रत्यक्परपद
म् ॥ यथोक्त निर्वाणे । यावन्नचीय
तेकर्मशुभवाऽशुभमेववा । तावन्न
जायतेमोचोनॄणाकल्पशतैरपि ॥
यथालौहमये पाशे पाशे स्वर्ण
मयैरपि । तथावद्धोभवेज्जीव क
र्मभिश्चाशुभै शुभै ॥ कुर्वाण
सततं कर्मक्लत्वाकष्टशतान्यपि । ता
वन्नलभतेमोचंयावद्ज्ञानंनविन्दति
॥ मोचणम् । मोचअसानेचुरादि
। घञ् ॥ यद्वा । मोचयति । मुचे
सन्नन्तादचमर्कासिजन्तादच् ॥ मु
चेर्वाहुलकात्सेवा ॥
मोचक । पु० मुष्ककवृचे ॥
मोचणम् । न० मोचने ॥
मोचधर्म । पु० शमदमादिषु ॥
महाभारतोक्तप्रकरणविशेषे ॥
मोचपरायण । त्रि० सर्वविषयविर
क्ते ॥ मोच परमयनमस्य ॥
मोचमय । त्रि० परमानन्दस्वरूपाव
स्थानरूपे ॥
मोचसाधनम् । न० ज्ञाने ॥ कर्मणा-

स्वन्त करणशुद्धिद्वारापरानेउपयो मोनतेषांसाचान्मोक्षसाधनत्वम् । । यथा । कषायपक्ति कर्माणिज्ञा नन्तुपरमागति । कषायेकर्मभि पक्के ततोज्ञानप्रवर्त्त त इति । उ पासनानान्तुचित्तैकाग्र्यम् नक्के वल्यमुपासनात् । तथाचमोक्षप्रा प्तौद्वयोमार्गा । तत्रज्ञानमार्ग साक्षान्मोक्षसाधनमितरौचित्तशुद्धि द्वारेतिविवेक ।

मोक्षी । त्रि० मोक्षाधिकारिमानवे । मोक्षयोग्ये ॥ स्थावरा कृमयश्चा ब्जा पक्षिण पशवोनरा । धा र्मिकास्त्रिदशास्तद्वन्मोचिणश्चयथा क्रमम् ॥ चतुर्विधशरीराणिधृत्वा मुक्तासहस्रश । सुकृतान्मानवोभू त्वाज्ञानीचेन्मोक्षमाप्नुयात् ॥ चतु रशीतिलक्षेषुशरीरेषुशरीरिणाम् । नमानुष्यंविनान्यत्रतत्त्वज्ञानन्तुलभ्य ते ॥ अत्रजन्मसहस्राणांसहस्रैरपि पार्वति । कदाचिल्लभतेजन्तुर्मानु ष्यं पुण्यसञ्चयात् ॥ सोपानभूतंमो क्षस्यमानुष्यं प्राप्यदुर्लभम् । यस्ता रयतिनात्मानतस्मात्पापतरोत्रक ॥ नर प्राप्योत्तम जन्मलब्ध्वाचे न्द्रियसौष्ठवम् । नवेत्त्यात्महित व स्तुसभवेद्ब्रह्मघातक ॥ इतिशौकु लार्णवेप्रथमोल्लास ।

मोक्षोपाय । पु० विविदिषासध्या से ॥ साधनचतुष्टयसम्पत्तौ ॥

मोग । पु० जलवरट्टे ॥

मोघ । पु० प्राचीरे ॥ त्रि० हीने ॥ इ० है० चन्द्र ॥ हीने ॥ इतिमेदिनी ॥ निरर्थके । निष्फले ॥ मुह्यन्त्यस्मिन् । मुह० । इलर्थे तिघञ् । न्यङ्क्वादित्वात्कु त्वम् ॥

मोघकर्मा । पु० सकामकर्मणि ॥ मोघानिश्रममात्ररूपाणिपञ्चिका णा हीनिकर्माणियस्य स ॥

मोघज्ञान । त्रि० कुतर्कज्ञानविशि ष्टे ॥ मोघम् ईश्वराप्रतिपादकत कशास्त्रजनित ज्ञान यस्य ॥

मोघपुष्पा । स्त्री० वन्ध्यायाम् ॥

मोघवृत्ति । त्रि० व्यर्थव्यापारे ॥

मोघा स्त्री० पाटलाहक्षे मोहयति । मुह० । पचाद्यच् । न्यङ्क्वादि त्वात्कुत्वम् ॥ विडङ्गे ॥

मोघाश । त्रि० कर्मिणि ॥ ईश्वर मन्तरेणकमार्णंवन फलदास्य तो ष्येवरूपामोघानिष्फलैवआशाफल प्रार्थनायस्य स ॥

मोघोलि । पु० प्राचीरे ॥

मोच । पु० शोभाञ्जने ॥ मोचयति । मुच्ल्ह० । णिच् । अच् । न० क दलीफले ॥

मोचक । पु० कदल्याम् ॥ शियौ ॥ मुष्ककवृक्षे ॥ त्रि० निर्मोचके ॥

विरागिणि ॥ मोचयति । मुच्लृ० । णिच् । अच । स्वार्थेकन् ॥
मोचनम । न० मोक्षणे ॥ त्रि०मोच कर्त्तरि ॥
मोचनिर्यास । पुं० मोचरसे ॥
मोचनी । स्त्री० कटकार्याम् ॥ मोचकल्याम् ॥
मोचरस । पुं० शाल्मलिनिर्यासे । पिच्छिलसारे । शाल्मलीवेष्टे ॥
मोचसार । पुं० मोचरसे ॥ मोचसावोहिमोग्राहीस्निग्धोवृष्य.कषायक । प्रवाहिकातिसारामकफपित्तास्रदाहनुत् ॥
मोचस्रुत् । पुं० मोचस्रावे ॥
मोचा । स्त्री० रम्भायाम् । कदल्याम ॥ शाल्मलीवृक्षे ॥ नीलीवृक्षे ॥ मुच्यतिरसम् । मुच्लृ० । पचाद्यच । टाप् ॥ मोच्यते । घञ् वा ।
मोचाट । पुं० कृष्णजीरे ॥ रम्भास्थ्नि । कदलीगर्भे ॥ मलयोद्भवे ॥
मोचाफलम् । न० कदलीसस्ये ॥ मोचाफल स्वादुशीत विष्टम्भिकफकृद्गुरु । स्निग्ध पित्तास्रतृट्दाहक्षतक्षयसमीरजित् ॥ पक्वस्वादुहिम पाकेस्वादुवृष्यञ्चबृंहणम् । क्षुत्तृष्णानेत्रगदहृन्मेहघ्न रुचिमांसकृत् ॥ माणिक्यमर्त्त्यामृतचम्पकाद्याभेदा कदल्याबहवोपिसन्ति । उक्तागुणा स्तेष्वधिकाभवन्ति निर्दोषतास्याल्लघुताचतेषाम् ।
मोचिका । स्त्री० मत्स्यविशेषे । मोइ० इतिख्याते ॥ मोचिकावातहृद्बल्या बृंहणीमधुरागुरु । पित्तहृत्कफकृद्रुच्यावृष्यादीप्ताग्नयेहिता ॥
मोचित । त्रि० मुक्ते । मोक्षप्राप्ति ॥
मोटकम् । न० पितृदानार्थंद्विगुणभुग्नकुशपत्रे ॥
मोटकी । स्त्री० रागिणीविशेषे ॥
मोटन । पुं० वायौ । न० चूर्णीकरणे । आक्षेपे ॥
मोटनकम् । न० त्रिष्टुप्छन्द ११ प्रभेदे ॥ यथा । स्यान्मोटनकंतजजाश्चलगौ ॥ रङ्गे खलुमल्लकलाकुशलश्चाणूरमहाभटमोटनकम् । यश्चीलिलवेनचकारसमेससारिपुं परिमोटयतु ॥
मोटा ॥ स्त्री० बलायाम् ॥
मोट्टायितम् । न० स्त्रीणांस्वाभाविकदशविधालङ्कारान्तर्गतालङ्कारविशेषे ॥ तल्लक्षण यथा । मोट्टायितप्रियस्मृत्यासाङ्गभङ्ग विजृम्भणम् ॥ अपिच । कान्तस्मरणवार्त्तादौहृदितद्भावभावत । प्राकट्यमभिलाषस्यमोट्टायितमुदीर्यते ॥ इ० ॥ मोटनम् । मुटप्रमर्दने घञ् । बाहुलकाद्द्वयस्तुट् । भृशादिक्यङ

त्याह्वावेत ॥

मोघ । पु॰ शुष्कफले । वाने ॥ नक्त मल्लिकायाम् । सर्पकरण्डे ॥

मोद । पु॰ हर्षे ॥ सन्तोषे ॥

मोदक । पु॰ क्षत्रियाच्छूद्रायाजातेवर्णसङ्करजातिविशेषे । मयरा॰ छ॰ गौ॰ दे॰ भाषाप्रसिद्धे ॥ पु॰ न॰ खाद्यविशेषे । लड्डुके । यवासशर्करायाम ॥ शर्करादिद्वारापक्वौषधविशेषे ॥ न॰ वर्णवृत्तप्रभेदे ॥ यथा । पादयुगकृतनूपुरसुन्दरमाशुकरकुसुमद्वयमाहर । सुन्दरिसर्वजनीनमनोहरमोदकवृत्तमिदंपरिभावय यथा । मानसमेतदनुक्षणमिच्छतिगोपकुलेयदिहरिरागच्छति । तत्करवैप्रणतिमुरविद्विषिसर्वसपत्नजनेविहततत्त्विषि ॥ त्रि॰ हर्षके ॥

मोदनम् । न॰ सिक्थके ॥ मोदे ॥

मोदनीय । त्रि॰ हर्षणीये । आत्मनि ॥

मोदमान । त्रि॰ आनन्दावस्थाप्राप्ते ॥ प्रमुदिते ॥ षष्ट्यासिद्धौ ॥

मोदमोदिनी । स्त्री॰ जम्ब्वाम् ॥

मोदयन्ती । स्त्री॰ वनमल्लिकायाम् । कठचेंवेली॰छ॰भा॰ ॥

मोदा । स्त्री॰ अजमोदायाम् ॥

मोदाख्य । पु॰ आम्रवृक्षे ॥

मोदाढ्य । त्रि॰ हर्षयुक्ते ॥

मोदाढ्या । स्त्री॰ मोहिन्याम् । अजमोदाया ॥

मोदित । त्रि॰ सुरभीकृते । हर्षिते । हृष्टे ॥ मुद्हर्षे । कर्त्तरिक्त ॥

मोदिनी । स्त्री॰ मल्लिकायाम् ॥ यूथिकायाम् । मदिरायाम् ॥ कस्तूरिकायाम् ॥ अजमोदाया ॥

मोरट । पु॰ लताप्रभेदे । कर्णपुष्पे । पीलुपर्णे । मधुस्रवे । दीर्घमूले क्षीरमोरटे ॥ न॰इक्षुमूले ॥ अङ्कोठप्रसूने ॥ सप्तरात्रात्परक्षीरे ॥ नष्टदुग्धभवनीरंमोरट कैय्यटोऽब्रवीत् ॥ मुरति । मुरसवेष्टने । शकादिभ्योऽटन् ॥ अङ्कोठमूले ॥

मोरटकम् । न॰ इक्षुमूले ॥

मोरटा । स्त्री॰ मूर्विकायाम् । मुरहरा॰छ॰भा॰ । टाप्

मोष । पु॰ चौरधने ॥ मुष्यते । मुषस्तेये । घञ् ॥

मोषक । पु॰ तस्करे ॥ मुष्णाति । मुष॰ । ण्वुल् ॥

मोषणम् । न॰ लुटने । मोसना॰लूटना॰छ॰भा॰ ॥ छेदने ॥ वधे ॥

मोषिता । त्रि॰ चोरे । मोषणकर्त्तरि ।

मोह । पु॰ मूर्च्छायाम् ॥ दुःखे ॥ देहादावात्मबुद्धौ ॥ यत्र कुण्ठीभवेद्बुद्धि समोहकृतिलौकिका ॥ चित्तविभ्रमे ॥ अविद्यायाम् । विपर्यये । अस्मितायाम् । तम कार्ये ।

भ्रमे । हिताहितविवेकासामर्थ्ये । तमसि । अज्ञानकृतविपर्यये । निर्णयासामर्थ्ये । व्याकुलतायांतावविवेके ॥ मोहेनभवतिभेदः क्लेशाः सर्वेपितन्मूलाः ॥ अस्याष्टविधोभेदः । देवाद्यष्टविधमैश्वर्यमासाद्यामृताभिमानिनः अणिमादिकमात्मीयं शाश्वतमभिमन्यन्तइति सोयमस्मितामोहोऽष्टविधैश्वर्यविषयत्वादष्टविधः ॥ मोहनम् । मुह्वैचित्त्ये । घञ् ॥ धर्मविमूढत्वे ॥ मोहोधर्मविमूढत्वं मानस्त्वात्माभिमानिता ॥ मोहस्तोयथापाद्मे । सुमनोवाच । श्रूयतामभिधास्यामिसर्वसन्देहनाशनम् । स्वरूपमुपदेशस्यसर्वविज्ञानदर्शनम् ॥ लोभः पापस्यबीजोऽयंमोहोमूलन्तुतस्यहि । असत्यं तस्यवैस्कन्धोमायाशाखासुविस्तरः ॥ दम्भकौटिल्यपत्राणिकुबुद्ध्यापुष्पितः सदा । पैशुन्यं तस्यसौगन्ध्यमज्ञानं फलमेवहि ॥ छद्मपाखण्डचौराश्चक्रूराःसपापिनः । पक्षिणोमोहवृक्षस्यमायाशाखासमाश्रिताः ॥ अज्ञानन्तुफलंतस्यरसोऽधर्मः फलस्यहि । भावोद्रेकेणसञ्जातस्तस्यसत्त्वास्तुप्रियः । अधर्मस्तस्यसुरभिर्मोदस्यमधुरायते । तादृशैश्चफलैश्चैवसुफलीलोभपादपः ॥ तस्यच्छायांसमाश्रित्ययोनरः परिवर्त्तते । फलानितस्ययोऽश्नातिसुपक्वानिदिनेदिने ॥ फलानान्तुरसेनैवअधर्मेणतुपोषितः । सुसम्पुष्टोभवेन्मर्त्यः पतनायप्रयच्छति ॥ इति ॥

मोहकलिलम् । न० अविवेकात्मकालुष्ये । अहमिदं ममेदमित्यज्ञानविलसिते ॥ रजस्तमोमले ॥

मोहनः । पु० कामदेवस्यबाणविशेषे ॥ धूस्तूरवृक्षे ॥ गर्वे ॥ न० ग्राम्यधर्मे । सुरते ॥ होममन्त्रौषध्यादिद्वारामुग्धताकरणे ॥ त्रि० मोहकारके ॥

मोहनलीला । स्त्री० सुरक्रीडायाम् ॥

मोहना । स्त्री० त्रिपुरमालीपुष्पे ॥ मकन्मालायाम् । पृक्कायाम् ॥

मोहनी । स्त्री० उपोदक्याम् ॥ वटपत्र्याम् ॥

मोहपथः । पु० विपर्ययसंशयतर्कमानप्रमादभयशोकेषु ॥ मोहस्यपथ ॥

मोहरात्रिः । स्त्री० जन्माष्टम्याम् ॥ कृष्णजन्मनियाप्रोक्तामोहरात्रिश्चसामता ॥ अपिच । जन्माष्टमीमहेशानिमोहरात्रि (१८१०१ ?) मप्रलये ॥ यथा । एवपञ्चाशदब्दं गतेतुब्रह्मणोनृप । दैनन्दिनन्तुप्रलयवेदेषु परिकीर्त्तितम् ॥ मोहरात्रिश्चसाप्रोक्तावेदविद्भिः पुरातनैः । तत्रसर्वेप्रणष्टाश्चचन्द्रार्कादिदिगी

श्वरा ॥ इत्यादिब्रह्मवैवर्त्तपुराण म् ॥ महाप्रलये० इ० कश्चित् ॥
मोहग्रास्त्रम् । न० अविद्याजनकग्रन्थे ॥
मोहान्धकार । पु० अज्ञानध्वान्ते ॥
मोहित । त्रि० विवेकायोग्यत्वमा यान्विते। निर्णयासामर्थ्यप्राप्ते १ मो ह सञ्जातोऽस्य। तारकादित्वादितच् ॥ अनात्मसुदेहेन्द्रियादिष्वात्माभि मानरूपयुक्ते पुरुषे ॥
मोहिनी स्त्री० त्रिपुरमालिकापुष्पे॥ पृक्कायामोषधौ ॥ शास्त्रीयज्ञानभ्रंस हेतुभूतायाप्रकृतौ ॥ समुद्रमथनका लैदे॰ानामसृतपानायासुराणांमोह नायचभगवदवतारविशेषे॥ स्वर्वे श्याविशेषे

मौक्तिकम् । न० मुक्तायाम् । इन्दुर ले । मुक्ताफले । मो'ती० इ० भा० ॥ मौक्तिकशीतलवृष्य चक्षुष्य बल पुष्टिदम् ॥ अपिच । मौक्तिकस्वम धुर सुशीतलदृष्टिरोगघ्नमविषाप हम् । राजयक्ष्मपरिकोपनाशनक्षी णवीर्यबलपुष्टिवर्द्धनम् ॥ अस्यलक्ष णयथा । नक्षत्राभमुवृत्तमत्यन्तमुक्ता स्निग्धं स्थूलंनिर्मलंनिर्व्रणञ्च । न्य स्तं धत्तेगौरवंशत्रुलग्नंतत्निर्मौल्य मौक्तिकंसौख्यदायि ॥ अस्यदोषल क्षणयथा । श्लिष्टच्छायमौक्तिकंत्वक् क्षायशुक्तिस्पर्शरक्तांचातिधत्ते । मत्स्याक्ष्यङ्क रूक्षमुत्तानमन्यनैतद्धार्य

क्षौमतादोषदायि ॥ अष्टधामौक्ति कयथा । मातङ्गोरगमीनयोत्रिशिर सत्वक्सारशङ्खाम्बुभृच्छुक्तीनामुद राच्चमौक्तिकमपि स्पष्टं भवत्यष्टधा॥ मौक्तिकविशेषोयथा । छायापाटल नीलपीतधवलास्तत्रापिसामान्यत सप्तानावहुशोनलब्धिरितिचेच्छौक्ति यकतूल्यणम् ॥ अस्यपरीक्षायथा । लवणक्षारयोर्दिनिपात्रेऽजगोमूत्र पूरितेक्षिप्तम् । मर्द्दितमपिशालितु षैर्यदविकृतंतन्मौक्तिकजात्य । मु क्ताव । विनयादिभ्यष्ठक् ।
मौक्तिकतण्डुल ।पु० धवलयावनाले॥
मौक्तिकदाम । न० वर्णवृत्तप्रभेदे ॥ यथा । पयोधरमत्रचतुष्कमवेहिवा लाम्बरवेकिलषोडशदेहि । भुजङ्ग पतेहदिमौक्तिकदामसुवृत्तमिदंशृणु मौक्तिकदाम ॥ यथा। मयातवकि ङ्किणिकारिकदापिविलासिनिरास मनुस्मरतापि । तथापिमनस्तवना ञ्जसनायव्रजामिकथंभवतीमपहाय॥
मौक्तिकप्रसवा । स्त्री० शुक्तौ ॥
मौक्तिकयोनि. । पु० शुक्तिशङ्खाद्यष्टसु ॥ यथा । शुक्ति शङ्खोगज क्रोड फणीमत्स्यश्चदर्दुर । वेणुरेतेसमा ख्यातास्तज्ज्ञैर्मौक्तिकयोनय. ॥ अगस्त्योप्याह । जीमूतकरिमत्स्या हिवंशशङ्खवराहजा । शुक्त्युद्भवाश्च विज्ञेयाअष्टौमौक्तिकयोनयः। इति।

मौनेय । पु० गन्धर्वगणविशेषे ॥
मौरजिक । त्रि० मार्दङ्गिके । मुरजवादके ॥ मुरज लक्षणयातद्वादनशिल्पमस्य । शिल्पमितिठक् ॥
मौर्ख्यम् । न० जाड्ये ॥ मूर्खस्यभाव । वर्णदृढादिभ्य ष्यञ्चेतिष्यञ् ॥
मौर्वम् । न० काण्डे ॥ भस्मनि ॥ मूर्वाया विकार अवयवोवा । अण् ॥
मौर्वी । स्त्री० ज्यायाम् । धनुर्गुणे ॥ मूर्वायाविकार । अवयवोवा । तस्याविकारइत्यण् । ङीप् । अमरः
टीका० श० भा० ॥
मौल । पु० वंशपरम्पराक्रमेणतद्देशवास्थायिनि ॥ भूम्यादेर्मूलस्थाने । मेदिनी० ङ० गौ० भा० ॥ यथा । यथपरम्परयामौला । सामन्ता स्वामिनंविदु । तदन्वयस्यागतस्यराज्यासोचलैर्महो । तत्रचक्ष यथा । ये तत्रपूर्वसामन्ता पश्चाद्देशान्तरगता । तन्मूलत्वात्पुनमौलास्तेपिभिपरिकीर्त्तिता ॥ मन्विहय ॥ मूलादागत । मूलेभवोवा । अण् ॥
मौलि । पु० स्त्री० किरीटे । धम्मिल्ले संयतकेशे ॥ चूडायाम् ॥ मूर्द्धनि ॥ पु० अशोकपादपे ॥ स्त्री० भूमौ ॥ मूलस्यादूरभव । सुतङ्गमादित्वादिञ् ॥ यद्वा । मूलस्यापत्यम् । अतइञ् ॥
मौषलम् । न० मुषलतुल्ये ॥ यथा । गङ्गायामौषल स्नानमहापातकनाशनम् । महाभारतस्यपर्वविशेषे ॥
मौष्टा । स्त्री० क्रीडाविशेषे ॥ मुष्टि प्रहरणमस्यांक्रीडायाम् । तदस्यांप्रहरणमितिण । टाप् ॥
मौहूर्त्त । पु० ज्योतिर्विदि । दैवज्ञे । मुहूर्त्तमधीते० वेदवा । तदधीतेत० इत्यण् ॥
मौहूर्त्तिक । पु० गणके । ज्योतिर्विदि । मुहूर्त्तमधीते० वेदवा । क्रत्व० इति ठक् ॥
म्रक्ष । पु० स्वदोषगूहने ॥ म्रक्षणे ॥
म्रक्षणम् । न० तैलादौ । अभ्यङ्गे ॥ तैले ॥ स्निग्धताजनक । द्रव्यरूपद्रव्यान्तरसंयोगे ।
म्रदिमा । पु० मार्दवे । मृदुत्वे ॥ मृदोर्भाव । पृथ्वादिभ्यइमनिज्वा ॥
म्रदिष्ठ । त्रि० म्रदीयसि ॥ मृदुतम् ॥
म्रदीयान् । त्रि० अतिमृदुतरे । अतिशयेनमृदु ॥ ईयसुन ॥ * ।
म्रातकम् । न० कैवर्त्तीमुस्तके ॥
म्रियमाण । त्रि० मरणासन्ने ॥
म्लक्तम् । न० चौरिते ॥
म्लान । त्रि० मलिने । कश्मले । मलीमसे क्षेत्रपर्वत्ये । म्लै । संयोगादेरातोधातोर्यण्वतइतिनिष्ठातस्यन ॥
म्लाना । स्त्री० रजस्वलायाम् ॥ म्लायतिस्म म्लै० । गत्यर्थेतिक्त । संयोगादेरितितस्यन । टाप् ॥

श्रीएकलिंगोविजयते

शभुर्भगत्सुखकर प्रभुरेकलिङ्ग
शैलप्रधानशिखरस्थसुशैवपुर्य्याम् ॥
रम्यद्रुपुष्पितलताङ्कुरशोभिताया
सराधितोद्विजगणैरवतात्सुवशम्
॥ १ ॥
सुमेदपाटप्रवरोनृपोय शिवावतार
परिगृह्यराज्यम् ॥ करोतितस्म
द्दिरमागतस्मन् शिवार्चनपुण्यवदात
नोस्ति ॥ २ ॥
भूप श्रीसज्जनेशो जगतिगुणगण
वर्द्धयन्राजतेयस्वाविद्या,सुमृग्य
सकलजनमनो गह्वरशोभयन्स्य
द्रष्टुचक्षुर्नृपाल भवतुसुनगरे
सर्वविद्याप्रधाना यस्मिन्कार्येव
रिष्ठस्तदखिलसुमत सर्वराज्यप्र
बोध ॥ ३ ॥
श्रीमत्श्रीसज्जनेशस्सकलहितकरो
राज्यकार्ये प्रदक्ष स्वीय हस्त
विचिन्वन्निखिलगुणचय वर्द्धयि
ष्णु सहिष्णु ॥ तिष्ठन्गच्छन्स
दायो नयजनसहितोभव्यकर्मप्रष
त्त कोशाद्दीलेतिहासविवरिषति
धियास्वीयवाछानुकूल ॥ ४ ॥

स्ववशवर्णनम्

श्रीवाप्पो योद्दि वापा सकल जन
ततौ रावलेति प्रसिद्धो येनेदचित्र
कूट बिद्दित सुनयतोभूपमानाख्य
मौर्यात् ॥ नैस्ततद्वशभूपागजशत
वातमेव क्रमेरावलीयास्ते सर्वेभाग्य

स्ववशवर्णनम्

वन्तोवहुवलिगुणिनो राज्यकार्येसु
दक्षा ॥ ५ ॥
श्री विक्रमीय शतके युगचन्द्रवर्षे
श्री राहपो नरपति र्बहुभाग्य
शाली ॥ तेनादि रावल पदाद्दि
धृताद्दिराणातत् संज्ञया नृपतय.
प्रथिता भवन्ति ॥ ६ ॥
तेषांहि वशे जयसिंह भूप श्रील
क्ष्मणोसावजयो नृपेश ॥ नाम्ना
ऽरि हम्मीर नृपा बभूताम् श्रीखेत
सिंहोऽवनिपोबभूव ॥ ७ ॥
श्रीलक्षसिंहो वहुवीर योद्धावीर-
प्रतापोसकलारिहन्ता ॥ पश्चान्नृपो
मोकल वबीरधर्मा धमार्थकामादि
कक्रमंकर्ता ॥ ८ ॥
शून्याऽङ्काऽब्धीन्दु वर्षे सचिव
जनहित कुंभकर्णो भिषिक्तो
राज्ये श्रीमोकलीये नयपद रचना
दक्ष वीर प्रतापी ॥ येनस्वीयेन ना
म्ना वरतम नगर कुंभलो मेरुदु
र्गं देशेस्मिन् स्थापितो सौतद
वनिप यश कीर्तयन् भाति
साम्ब ॥ ९ ॥
पञ्चशाब्धिन्दु वर्षे उदय पतिनृपो
राज्यसिंहासनस्थ . सस्तोये नैव
दुष्टा चरण पदस्तो भूत्कनिष्ठ .
स्थितोश ॥ शून्यशोब्धिन्दुवर्षेसक
लजनमतो रायमल्लोवभूव सयाम
सकपुत्रोरसक्तुशरचेराज्यसिंहा

सनस्थ ॥ १० ॥
मायाष्टे च्छिन्दुवर्षे निखिल जन
हितो रत्नसिंहो बभूव नन्दाष्टे
च्छिन्दुवर्षे सुनयन रुधिरो विक्रम
स्तस्य भ्राता ॥ हाष्टे च्छिन्दौहि
त्वा समय नरपतिबाणवीर
कुदासो वेदाङ्के च्छिन्दुवर्षे उदय
नरपति स्तनिराकृत्यभूप ॥ ११
षट् चन्द्र त्विन्दु वर्षे वृहदुदय
नद्या सागरस्याद्यपुर्यां प्रारम्भवे
नदीप । यम भनतनुत स्तत्पूर्वो
चकार ॥ वेदयुङ्क्रेन्दु वर्षे उदय
नरपतिश्चित्रकूटे उपेत्य चेन्द्रप्रस्थे
प्रयातो अकबर यवन सजिगा
यातियुद्धे नागयुङ्क्रेन्दुवर्षेनवतपन
सम श्रीप्रतापादिसिंह ॥ १२
श्रीव्यङ्कन्दौमितेन्द्रे अमरनरपती
राज्यसिंहासनस्थ ग्राम्नायुङ्क्रेन्दु
वर्षेनव तरणि सम कर्णसिंहो
हितस्थौ ॥ वेदाष्टत्विन्दु वर्षेनय
निपुणजगत्सिंहभूपोद्युदारोनन्दा
श्वान्द्रीन्दु वर्षे सकल जनसुहृद्
राजसिंहस्तरेजे ॥ १३ ॥
सुमेदपाटे रचितं सरोवरम् स्वराज
सामुद्रिकनामशब्दितम् ॥ सुराज
सिंहेन कृतार्थं कर्मणा सुरम्य
कूलेभवने सुशोभितम् ॥ १४ ॥
सप्तत्यद्रीन्दु वर्षे शुभगुणनिरत
श्रीजयाख्यादिसिंहो येन स्वीयेन
नाम्ना बहुजल निलये निर्मितं
दिव्यखातम् ॥ षट् पश्चाद्रीन्दु
वर्षे ह्यपर नरपति राज्यदक्षो
द्वितीय सप्तत्वद्रीन्दु वर्षे सकल
सुखदसंग्रामसिंहोन्यभूप ॥ १५ ॥
शून्या ऽष्टा ऽद्रीन्दु वर्षे अपरनृप
जगत्सिंहभूपश्च तस्थौ ॥ सप्ताभाष्टे
न्दु वर्षे सुगुणपरनृप श्रीप्रतापा
दिसिंह ॥ १६ ॥
शून्ये नदष्टेन्दु वर्षे अपरनरपती
राजसिंहो नृपाखो नागेन्दष्टेन्दु
वर्षे कुजन कुपयहन्तारिसिंहोबद्रा
म्य ॥ १७ ॥
नन्दहाष्टेन्दुवर्षेऽपरनरपतिहम्मीर
सिंहोनृपालो वेदत्यष्टेन्दु वर्षे बहु
बलचपलोभीमसिंहोनरेश ॥ बा
णाष्टाष्टेन्दु वर्षे रुचिरवचनयुक्
श्रीजवानादिसिंह पश्चाष्टाष्टेन्दु
वर्षेसकलजनहितोभूपसर्दारसिंह
॥ १८ ॥
नन्दाष्टाष्टेन्दु वर्षे प्रबलभटहित
श्रीस्वरूपादिसिंहोभूपोदारनीयशखो
सकल जनहितो लोक विख्यात
कीर्तिः ॥ श्रीशु त्यागी स्वराज्य
गज हय धनत पूर्णयन् सर्वसा
र सर्वराज्ये प्रवचनयनिपुणधिया
प्राकृतोदार शील ॥ १९ ॥
नागेनदङ्केन्दु वर्षेशुचिजनसुखद
शंभुसिंहोबभूव श्रीमोदारनीकृपालु

बहुविध रसिको रूप लावण्य युक्त । अल्पायुर्भोगभोक्तानिखिलजनहितो धर्मशील स्वलोकाच्छ भुभूमौस्वलीलां निखिलसुखकरींसविधायाप्रयात ॥ २० ॥

इन्द्वग्न्यङ्केन्दु वर्षे सकल सुखकरे सर्वसपन्निधाने श्रीमच्छ्रीसज्जनेश स्तुजनसचिवयुक् राज्यसिंहासनस्थः । सर्वंकार्यंविजानन्सुनयगुणधिया स्वल्पकालेन पूर्वं पश्चाच्चात्मयोग्यानखिलजनहितान्स्थापयन्राजतेयम् ॥ २१ ॥

स्वीयान्राज्यार्थदक्षान् सचिवनयगुणान् सम्यगवीक्ष्य सर्वान राज्ञाचिन्तानुकूलनिखिल समयक प्रेमपूर्वानु भाषम् ॥ नित्यानन्द प्रकाशकविगुणकविताकर्मस स्फापूर्तिं भावा भावप्रकार प्रकटयति भरोय समेषास्ति मन्त्री ॥ २२ ॥

भूपालाश्चालिकेचित्स्वसुखरसरता स्वार्थभाजश्चभाज केचिद्वित्तानुषक्ता स्वपुरजनधनकर्षयन्तीयत त सम्यग् रीत्यासुनीत्या निखिल जनपदपालयन् लालयन्श्रीमान् श्रीसज्जनेशो भुवनसुखकरोभाति लोकेयमेक ॥ २३ ॥

लोकेकार्यसमस्तं कठिनमतिधिया शास्त्रपूर्वानुकूलन्तन्मध्ये राजकीयं स्वधनजनपदश्च सर्वाभेकमूलम् । तत्कार्येदक्षभूपोनयनिपुणजनैस्ते यतेभूपसघात् सोयश्रीसज्जनेशो निखिलमतिमता राजतेमध्यवर्ती ॥ २४ ॥

श्रीमच्छ्रीसज्जनेशो नवनिधिसद्दितश्चाष्टसिद्धेश्च पूर्णः स्वसद्धीमन्त्रिवर्गौमिहिरविधुनिभौ स्वामिकर्मानुकूलौ ॥ एकश्रीश्यामलाख्योनिखिल जनमनो भारती भावदक्ष पन्नालालोद्वितीय सकलविभवयुग् राज्यसर्वाधिकारी २५ ( *++* लोभान्मोहाद्विरक्तो निखिलजन हितो राज्यलाभानुरोधी सपद्यापद्यकृष्टोनयपथकुशलो मन्त्रिमुख्यो हियोग्य ॥ देशेऽस्मिन्मेदपाटे रणकरणभटे सर्वशस्याढ्यभूमौसो यश्रीश्यामलाख्यो निपुणकविवरो वर्ततेमन्त्रिराज । ॥ २६ ॥

काव्यालङ्कारवेत्ता सचिवकविवर श्यामलोवीरसिंह । शास्त्रव्यासंग सक्तोगुणिगणरसिक । कोशपूर्णाभिलाषी ॥ कोशंशब्दार्थचिन्ताम णिमतिफलद सनिरीक्ष्यासमास्तु स्तग्रथस्यसर्वंवसुधनविषय पृष्टवा न्स्वीयमित्रात् ॥ २७ ॥

प्रशिदपद्यादृश्यातम्

सप्ताष्टाष्टेन्दु वर्षे उदयपुरपुरे श्री जवानाख्यभूपे स्वर्गाधीशेन्द्रतुल्ये सकलजनपदश्रासतिख्यातकीर्तौ।

### कोशविषयकप्रश्नो

दैवादागत्यगौड द्विजकुलतिलक श्रीसुखानन्दनाथ कोशशब्दार्थचिता मयिमतिफलद ह्यत्रसरव्यवान्स ॥ २८ ॥

पञ्चाशद्वर्षभागा अतिगहनतरा शास्त्रग्रन्थस्यनून तेषामेकैकवर्णस्वरपदरचने दीर्घकालोव्यतीत ॥ शब्दान्व्यातान् विचिन्वन्नतिविदिततरे कोशसर्वेष्विहष्ट्वा चेत्थंचि शम्मिताब्दा श्रमसुरचनया सगता कोशपूर्तौ ॥ २९ ॥

(केनप्रकारेणकुत्रकोशस्य भागद्वयम्मुद्रित मित्यत्रोच्यते)

श्रीमन्यदिपृच्छतिकोशवृत्त विस्तारपूर्वंक्रमतोयथावत् ॥ वात्सल्यमेवानुवदेयमेत द्विस्तारत सबद बोधनार्थम् ॥ ३० ॥

सुखानन्दनाथेन माप्रत्यलेखिभवद्भि स्वमुद्रालये कोषएष ॥ सुसमुद्रणीयस्तुत प्रीतिभावात्तदायोत्तर तन्मया सव्यलेखि ॥ ३१ ॥

भवच्छ्रीकृपापूर्णपत्र सुलब्धम् पठन्निजानन्दपूर्णोलिखामि ॥ मदीयाहिशक्तिर्नवित्तस्यहृष्ट्या सहायेस्थिशक्तिस्ततोदीर्घभूता ॥ ३२ ॥

तदारभ्यचिता सुकोशार्थमेषामदीयेहृदिव्यापिनीभव्यभावा ॥ कथकेनकस्माद्धन सं प्रयाचे जगत्यालिके पूरिता शेम्यहित्वम् ॥ ३३ ॥

### श्रीघासीरामकथनम्

दैवात्सुरम्ये यमुनानिकूले यया दिपौरस्थिततताजगजे ॥ श्रीघासिरामस्य सुहृद्वरस्य वशीधरस्यास्य समागमोऽभूत् ॥ ३४ ॥

मित्र प्रसन्ना ननभूत्यसैव्य सानन्दमायान्त ममदगत्या ॥ अस्मामिदानीं भरतस्यभूमौ दृष्टाहिलुब्धा नहिदानशूरा ॥ ३५ ॥

श्रीमन्सखेकि कथितभवद्भि सर्वस्थितस्वल्पमनल्पमस्याम् ॥ कथापिवाहुल्यमतीव चास्तिन्यूनत्वमन्यस्य जगत्प्रभावात् ॥ ३६ ॥

श्रीमन्सखेकिं कथितभवद्भि शूरानसतीदमसत्यवाक्यम् ॥ शौर्येणकश्चि द्धनतोहिकश्चिन्न वर्तितकातरोहिशूर ॥ ३७ ॥

शूरधनाच्चेच्छसि कार्यदत्त मत्तोयदाज्ञापयतत्करिष्ये ॥ श्रीमत्कृपातोधनत समर्थो ह्यतावकीनो निजभृत्यमुख्य ॥ ३८ ॥

जानामिसम्मित्र मुदारभाव त्वासाद्दरप्राप्यवदामिहृद्यम् ॥ वृन्दस्यपुर्यांतवमातुलोस्ति विद्वद्वरोधी तसमस्तविद्य ॥ ३९ ॥

तेनैककोशो रचितोद्भुतोसौ चिशम्मिताब्दे नबहुप्रयासात् ॥ द्रव्यव्ययीलोक हितार्थकारिन् तन्मुद्रणकारयभोसमर्थ ॥ ४० ॥

श्रीमन् सखेस्मिन् सुकृते हिकार्ये

द्रव्यंकियत्तम मितमत्रयोग्यम् ॥ स्नु-
ग्वातदाविंशतिकसहस्र देयभवद्भि
र्नततोधिकञ्च ३९ ॥
एतन्मितद्रव्य सुदानकार्ये शक्तिर्म
दीयाभवत प्रसादात् । प्रात स
मागत्यमदीयगेहे द्रव्यगृहीत्वाकुरु
मासनाथम् । ४० ॥
प्रातर्घासीय रामस्थलमति रमुल
प्राप्यहृष्ट कृतञ्चस्त मांसन्नीच्यश्री
घ्रान्निजजनसहितश्चासनादुत्थितश्च
न् ॥ गाढव्यालिंग्यमोदादतिनमन
तयास्थापयन्दच्चभागेस्थित्वाग्रेबद्ध
स्त सगदतिधनदस्तन्नस गृहाण
॥ ४१ ॥ हस्तगृहीत्वास्वधनस्यकोशे
यत्रस्थिता सन्तिधनस्यपेटा ॥
नीत्वाऽवदत्स्वीकुरुतद्विवित्तम् यां
छाञ्चेतद्गृहणेनवाञ्छा ॥ ४२ ॥
घासीरामकथनात्पण्डितवंशीधर
स्येन्द्रपुर्य्यागमनम् ॥
इत्थविचार्येन्दिशक्रपुर्य्यां गत्वाभ
वन्तनयग्रन्थकारम् ॥ यास्यामि
स कल्पकरस्तदर्हि वित्ताढ्यितपत्र
मवाप्ययात । ॥ ४३ ॥
इन्द्रप्रस्थेसुरम्येबहुदिनवशतोमुख्य
मित्रैषणाय चायान्तदूरदेशाद्विबु
धवरसुखानन्दनाथोनिरीक्ष्य ॥ च
भ्युत्थानर्हिदत्त्वानिजजनसहित स्था
पयन्नग्रभागे धन्योस्मिस्त्वीय मित्र
निज भवनगत लोकयामि प्रस



न्नम् ॥ ४४ ॥
धन्योस्मिवीच्य कुशलाङ्गसमस्तदे
ह श्रीमन्समयदयासहगच्छचा
यम् ॥ कोशस्यमुद्रणविधीकुरुयत्न
माशु वित्तप्रदास्यतिपरतवभागि
नेय ॥ ४५ ॥
सिद्धि कृता भगवता खिलवित्तरू
पा तस्म।त्सुगत्य कृपयागमनार्थमे
षाम् ॥ पत्रसुप्रेषयततोनिजकर्मकृ
त्वा यास्याम्यहजवतयाभवदग्रिकू
लम् ॥ ४६ ॥
कृत्वापथ स्वपुरतस्तव भागिनेया
द्यातोस्मिकार्यमभिधायजवाद्व्रजी
यम् ॥ दास्यामिचाग्रदिवसेनिज
हस्तपत्रगच्छामितत्रबहुकालसमा
गम स्यात् ॥ ४७ ॥ घासीयराम
सुहृदस्यसुपत्रहस्त मावीच्यपत्रनि
खिलाशयमाभिगम्य ॥ सानन्दतो
ह्यभिवदन् किमुकार्यं मद्यपत्र
सुप्रेषययतस्त्वबुध प्रयातु ॥ ४८ ॥
पत्र बिलिख्य ददतेस्म सुडाकगेहे
ततप्राप्यपण्डितवरस्य समागतोत्र
सर्वं सुसाधन मथत्वरया गृहीत्वा
कोशस्यकार्यमचलत् प्रतिवासरत
त् ॥ ४९ ॥
दत्ताहना दधिकदान सुशक्त्यभावे
कोशस्यकार्यमरुधत्वितदर्द्धजाते ॥
पश्चाहनी सहिबुधोपि परत्रगन्ता
शोकस्तयो स्समभवन्नगरस्य मध्ये

जनगणादेशर्देशात् प्रयान्तिभाग्या
नृसर्वेमनुष्या नृपवरविहितानीवि
कांसलभते ॥ ६१ ॥

भूपालाभाव्यवन्त स्वसुखरसपरा
स्वैननाम्नाह्वकार्षुं रम्यस्थान सम
न्तात् निजमहिमधिया वर्तयन्त
स्वदेशे ॥ यत्स्थान नीर्थभूत बहु
समयवशात्कैनदृष्टिर्नदत्ता तत्सर्वं
सज्जनेशो विपुलधनचयाद्भव्यवत्स
विधत्ते ॥ ६२ ॥

पङ्क्तिन्नार्तिं भ्रष्टोदयपुरनगरीये-
नदृष्ट पुरायस्तस्मिन्सर्वचवीथ्यावि
विधनगलतादृश्यतेसर्वभागे ॥ स्व
च्छा सबाङ्गशुद्धा पुलिस जनगणै
र्वीक्ष्यतेसर्वकाले श्रीमच्छ्रीसज्जने
न्द्रप्रनियत नियमात्स निरीक्ष्याति
हृष्ट ॥ ६३ ॥

दत्तानिपदानि प्रतिष्ठाया
श्रीमेदपाट प्रभुणाप्रराज्ये ष्ववर्ति
ना ॥ पद्दत्तप्रतिष्ठाया कवि
श्यामलधीमते ॥ ६४ ॥

कविराजपदंचैवा मभ्युत्थानद्वितीय
कम् । तृतीयस्यर्शन चाङ्के चतुर्थं
पादभूषणम् । ६५ ।

हैमादिकंचतस्मैवोटीदानंचपञ्च
मम् ॥ सुासनस्थायकरत षष्ठद
त्ताहिमुद्रिका ॥ ६६ ॥

मुद्रिकाशय.

राणा श्री सज्जनेन्द्रस्य चरणाञ्ज
प्रसादत ॥ कविराज पदख्यात
श्यामलस्यैवमुद्रिका ॥ ६७ ।

इत्याद्यन्या पदव्योपि बहुसम्मान
सूचिका । दत्ता श्रीसज्जनेन्द्रे
णकविश्यामलधीमते ॥ ६८ ॥

श्रीनरेशस्य हिप्रीतिर्यथाश्यामलधी
मति ॥ विश्वासभूतासत्याङ्गीनत
थान्यत्रदृश्यते ॥ ६८ ॥

श्रीमच्छ्रीसज्जनेन्द्रादरनियमवशा
त्श्यामलप्रेरणात कीश भव्दा
र्थचिन्तामणिगुणनिकर । व्यथ
क पूर्तिमागात् ॥ षभाव्याङ्के
न्दु वर्षे बहुरसिकतरेफाल्गुनेशुक्ल
पक्षेदेवाचार्ये तिथ्यासकलसुख
करेसार्द्धवर्षद्वयेन ॥ ६९ ॥

श्रीभूप सज्जनेशो निखिल जन
हितेराज्यकर्मप्रवीर्ण । विद्याशा
स्त्रैकदक्ष सुभटसचिवयुक् सर्व
दाकार्यदर्शी ॥ स्वाद्दीर्घायुर्निरो
ग शिवविधिकमणा स्वामितुष्ट्यैव
बाली मार्कण्डेयोऽल्प जीवी वर
वरदशिवाराधनाद्दीर्घजीवी । ७० ॥

श्रीमच्छ्री सज्जनीयेबहुलबलतया
वीरलक्ष्मीस्सुभाग्नी जिह्वाया दक्ष
वाणीस्फुरतुदिननिशनर्तनकारय
न्ती । राज्यश्रीद्रव्ययुक्ता सकलवि
भवश्रीाश्रगेहेप्रपूर्णाचेत्यधान्यैर्ध
नौघैर्निखिलजनचय पूर्णवित्तवि
धेहि । ७१ ।

कोशशब्दार्थचिन्तामणं स्तृतीयोभाग

द्रमाद्रि गौड़कुलोत्पन्ना छीन्दाल प्रधानाः पनाम तुलाराम मिश्रात्मज श्रीधनपति मिश्रापरनाम्ना श्रीसद्गुरु कुलावधूत श्रीपरमहंस परिव्राज आचार्य श्री महरि नन्द नाथ भारती शिष्येण ब्राह्मावधूत श्री सुखानन्दनाथा परनामधेयन विरचिते शब्दार्थचिन्तामणौ पवर्ग स्तृतीयोभाग समाप्तिङ्गत

श्रीसुखानन्दनाथ तच्छिष्य श्री जगदीशमिश्रा परनाम ब्राह्मावधूत श्री जगदानन्दनाथ प्रीतिकामे , श्रीमन्महा राजाधिराज रविकुलाव तंस महीमहेन्द्र यावदार्यकुलकमल दिवाकरे मेदपाटदेशाधीशे अखिल भूपाल मौलिमणिभि श्री १०८ श्रीयुत सज्जनसिंहे संस्थापित उदयपुरस्थ सज्जन यन्त्रालये मुख्यमन्त्रि कविराजिराज श्रीश्यामलदास प्रेरणया पण्डितवाजपेयि वंशीधरेण अकिञ्चनाजितदेव शर्मणाचशोधित जीवनराम शम्भूनाथ श्यामसुन्दर गुलाबराम लक्ष्मीनाथ प्राणिनाथ लालसिंघ प्रभृतिभिर्द्विजै वर्णक्रमेणादर्शित सर्दारवेग यवनेन परमानन्द ब्राह्मणेन मुद्रित

एकोनविंशत्यधिकचत्वारिंशत्तमे १९४० वैक्रमाब्दे राजधान्युदयपुरे सज्जनयन्त्रालये श्रीमेदपाटेश्वर
कोशधनव्ययात् वाजपेयिवंशीधरस्य
प्रबन्धतोमुद्रित

# शुद्धाशुद्धविषयकचिन्हानि

०—|—०

॥ नम श्रीगुरवेनम मुद्रीकृता अनेकेषाकर्त्त्वाद्बुद्धिविभ्रमात् । मनसोऽस्थि
रहुपत्वात्स्यादेवाशुद्धिसम्भव १ अतोमुद्रीकृतेग्रन्थे ह्यपिपण्डितशोधिते । अ
शुद्धोद्घाटकस्यास्यपत्रस्यावश्यकमतम् २ तदेतस्यमुद्रितस्य शब्दार्थचिन्ताम
णिकोश शुद्धाशुद्धसूचनापत्रलेख तत्राशुद्धिर्द्वेधा । शब्दाशुद्धि १ श
ब्दव्याख्यानाशुद्धिश्च २ इति ॥ सोभयत्रपञ्चधा । यथा । मात्राशुद्धि
१ वर्णाशुद्धि २ न्यूनाक्षरा ३ अधिकाक्षरा ४ वर्णविपर्यासा ५ चेतिभे-
दात् । अत्रशब्दाशुद्धौसर्वत्रपूर्वस्मिन्नेवचिह्नमेतत्० । व्याख्यानाशुद्धौतुपू
र्वत्रचिह्नमिति—ज्ञेयम् ॥ ततोमात्रावर्णाशुद्ध्योस्तु । अशुद्धिलेखपङ्क्ता
वेकमेवाशुद्धमक्षरलिख्यते । अग्रे । शुद्धलेखेतुसमस्ता शब्दालिख्यन्ते ,
तत्र । मात्रायांशुद्धाक्षरस्योपरिलक्षणमेव—क्रियते वर्णेतुशुद्धाक्षरस्याध
शून्यम् ॥ न्यूनाधिकाक्षराशुद्ध्योस्तु ॥ अशुद्धौपूर्वपर पार्श्ववर्णयोर्वायत्पू
र्वपरमुत्थितरेखाद्दिस्यात्तस्यतस्यलेख ततमध्येलक्ष्मचेति—पतितरेखाया
। शुद्धिलेखेतुन्यूनवर्णाधस्ताच्चिह्नमित्थमध —पतितरेखाया । अधिकवर्णा
शुद्धौतुपूर्वपरवर्णमध्यलिखिताधिकवर्णस्योर्द्ध्वमेवम ऽ अशुद्धिलेखेचिह्न
कृतम् । शुद्धलेखेतुयथार्थस्यैवलेख . ॥ अपिच । न्यूनानेकाक्षराशुद्धौतु
पूर्ववदशुद्धलेखेपूर्वपरलेखमध्ये—एतद्रेखालेख . । शुद्धिलेखेतुलिखित
न्यूनाक्षराणामधोदेशे देश देवदत्त अनेन प्रकारेण वर्णसमानातावतीदीर्घा

——— ———

रेखाकृष्यते ॥ अनेकवर्णाधिक्येतु । अशुद्धलेखएवाधिकाक्षराणालेख . ।
नीचैस्तावतीदीर्घारेखाच । शुद्धौतुशून्यादि ॥ वर्णव्यत्यासाशुद्धौतु । अशु
द्धलेखेवर्णयोरुपरिद्वयङ्काङ्कयो 'क्षेप , २ १ । शुद्धलेखेतुयथायोग्यमेवेति
दर्शनीयम् ॥ अग्रे पृष्ठाङ्क प्रथम द्वितीयस्तम्भपङ्क्त्यङ्कानांक्रमेणलेख .।
तत्र स्तम्भलेखे प्र० द्वि० इतिपूर्ववर्णयोर्लेखेयावत्प्रथममधोध 'शून्यमेव
लिख्यतेतथायावद्द्वितीयम् ॥ अतोविशेषप्रकाराशुद्धौतु तत्रतत्रविशेषो
लेख कृतोदर्शनीय ॥ यदिसत्क्रियेवावार पुस्तकवृद्धि क्रियेतशुद्धमिदम् ॥
दर्शं दर्शं शुद्धा शुद्धा दर्शं भवेत्तदिति सुक्तम् ॥ १ ॥

| अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | स्तम्भ | पङ्क्ति |
|---|---|---|---|---|
| २१ -मुष्यो । र्भे | धूमवह्न्यो सम्बन्धे | | ० | ७ |
| ष्टा | विशिष्टसिद्धाभावे ॥ | २ | ० | २४ |
| -र | राशीकारे | ३ | प्र० | ६ |
| -ध | वज्र् | ४ | ० | २६ |
| सु | जलयुक्तपङ्के | ४ | ० | २७ |
| -थि | निशामपि० | ४ | द्वि० | २१ |
| -व् | कुञ्ज० | ५ | ० | २४ |
| ङ् | अपाङ्क्ते ये । | ५ | ० | २५ |
| -न्या | अग्र्या . | ६ | प्र० | ४ |
| -ल्पे | अङ्ग वैकल्येन | ६ | ० | १३ |
| -र्षि | ऋर्षिभ्योऽतच् | ६ | ० | २८ |
| भ्य | पञ्चम्या । | ६ | ० | ६ |
| -ता | समन्तादेहे | ७ | ० | २८ |
| का ' | निदिग्धिका | ८ | प्र० | १८ |
| का ॥ | निदिग्धिकाप्रदृष्टाःसम्मिलित सु | ८ | ० | १८ |
| -र्च | पलमात्र स्यात् | ८ | ० | २३ |
| भा | भाण्डे ॥ | ८ | द्वि० | २२ |
| -र्णि | पौर्णमासाम् | ६ | ० | ३ |
| ० - | पञ्चपर्णिका } स्त्री० गोरची- | ६ | ० | २२ |
| ० - | पञ्चपर्णी } स्त्री० चुपे ॥ | ६ | ० | २३ |
| -सो | सरसीरुहम् । | १० | प्र० | २१ |

